"यदा स्वतःप्रमाणत्वं तदान्यन्नैव मृग्यते ।
निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः ॥" [1]

इति । अतो ज्ञप्तावपि स्वतस्त्वं प्रमाया निर्व्याकुलम् । यथार्थोऽनुभवः प्रमा इत्येतल्लक्षणं त्वनुभवस्यार्थयोगाभावादयुक्तमेव । क्रियाया अचिन्त्यशक्तित्वादभिचारादिवदात्मनिष्ठाया अपि स्वविषये फलाधानसम्भवात् । तेन च प्राकट्येन युक्तस्यापि तस्य न सर्वैर्विदितत्वमित्यपि घटनात् सवितृसुष्यादिवद्युक्तोऽर्थयोगः कथञ्चित् । अबाध्यमपि स्वप्रकाशमपि प्राकट्यं सर्वगतेश्वरज्ञानवत् कस्यचिदेवादृष्टयोगात् स्फुरति न गुणत्वे ज्ञानस्य कथंचिदर्थयोगः समस्ति इति चोक्तम् । अर्थविषयाज्ञानघटितत्वेनार्थसम्पादने चैतल्लक्षणावष्टम्भेनेश्वरज्ञानप्रामाण्यसमर्थनं व्याकुलं स्यात् । इह न पूर्वोक्तमनुभवलक्षणमपि इति यथोक्तमेव च प्रमाणलक्षणमनेनापि प्रकारेण इति प्रमाणपरिशुद्धिः । [2]

एवं परप्रसिद्ध्यापि सम्भवति निष्प्रत्यूहे कथारम्भे भगवान् **बादरायणः**—

"**अथातो ब्रह्मजिज्ञासा**" इत्येवं सूत्रमकल्पयत् । धर्मविचारस्तावत्—"**अथातो धर्मजिज्ञासा**" इति संवृत्तः । अत्र पुनर्ब्रह्मैव विचार्यम् । आनुषङ्गिकं तूपासनधर्मचिन्तनं क्वचित् ।

ननु कथं धर्मविचारस्संवृत्तः ? यावता ब्रह्मविचारं मन्यमानं कश्चिद्धर्मविचारमाक्षिपति । तथा हि—प्रमितो धर्मो जिज्ञास्यः, उत अप्रमितः ? आद्ये वैयर्थ्यं विचारस्य । चरमे त्वशक्यत्वं असिद्धोद्देशेन विचारानुपपत्तेः । तत्रोत्तरम्—सर्वथाप्यप्रसिद्धौ चैत्यवन्दनादिलक्षणो धर्म इत्यादिविप्रतिपत्त्यनुदयात्; केनचिद्रूपेण स्थाण्वादौ प्रसिद्ध एव विप्रतिपत्तिदर्शनात् । अतस्सामान्यतः प्रतीतिगोचरो विशेषे विप्रतिपन्नतया जिज्ञासाजनको धर्मो जिज्ञास्यः ।

ननु सामान्यरूपमपि न यत्र प्रमाणगोचरः, तत्रापि विप्रतिपत्तिर्दृश्यते खपुष्पादौ; तत् किं सर्वात्मना तुच्छम्, उत केनाप्यात्मना सत् ? इति; कोऽभिप्रायः ? किं तत्प्रत्ययस्य प्रामाण्यमेव न स्फुरति, किं वा न सदर्थतेति ? तत्र नाद्यः, औत्सर्गिकस्वतःप्रामाण्यस्य यावदपवादं स्फुरणाङ्गीकारात् । तदाहुर्**भट्टपादाः**:—

---

1. श्लो. वा. २. ५२. दोषज्ञानस्यैव प्रामाण्यविरोधात् तदभावेन च नानवस्थेत्यर्थः.
2. प्रमाणलक्षणस्य निर्दोषतेत्यर्थः.

"तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानैरपोद्यते ॥[1]

इति । नान्त्यः, त्वया तत्राप्यनिर्वाच्यसत्त्वाभ्युपगमात् ; अतिरिक्तसत्त्वाभावश्चेत्, स स्थाण्वादावपि तुल्यः । न खलु विचारात्प्राङ्निर्वाच्यं सत्त्वं स्थाण्वादेर्वा ब्रह्मणो वा निर्णीतमस्ति प्रसिद्धम् । अथ "ब्रह्मविदाप्नोति परम्" [2] इति श्रुतावापातप्रतीतं ब्रह्म विचारं प्रयोजयति, सत्यादिप्रसिद्धार्थपदसमभिव्याहारात्तु ब्रह्मपदार्थावधारणात् ; तदुक्तम्—

"पदमज्ञातसम्बन्धं प्रसिद्धैरपृथक्श्रुति ।
निर्णीयते निरूढं तु न स्वार्थादपनीयते [3] ॥"

इति । तर्हि "तानि धर्माणि प्रथमान्यासन्" [4] इति श्रुतावापातप्रतीतो धर्मोऽपि विचारं प्रयोजयतु ; तस्मादनाक्षेपोऽयम् । यदि विधिर्नास्ति प्रयोजक इति मतम्, तदसाधु ; स्वाध्यायाध्ययनविधेः प्रयोजकत्वात् ।

ननु नैवम् ; अनुपयोगात् ; न च अर्थावबोधफलोऽसौ, अश्रुतत्वात् । न च कल्प्यः, उपनीतस्य नित्याधिकारात् ; स्वाध्यायभाव्याभिधायितव्यश्रुतिविरोधे च नार्थावबोधस्य भाव्यताकल्पनम् । तस्मान्न फलपर्यन्तत्वायावघातावृत्तिवत् अध्ययनविधेर्विचारप्रयोजकत्वम् इति,

तदचारु ; विचारमन्तरेणाध्ययननित्यत्वानित्यत्वविवेकस्याप्यनुपपत्तेरुपयोगसम्भवात् । यदि च स्वोपयुक्तं विचारं प्रयुङ्क्ते, तदाऽध्ययनक्रियाया धर्मतया नित्यकर्तव्यनिर्णयफलं कथङ्कारं न धर्मजिज्ञासासूत्रं प्रयुञ्ज्यात् ! यदि चोत्तरविधिप्रयुक्त एव तद्विचारः, तर्हि वैपरीत्यं कुतो न स्यात् । न च उपनिषद्विचारस्यापि प्रयोजकत्वेन निस्सन्दिग्धात्मज्ञानोदये कर्मानारम्भप्रसङ्गः, चित्तशुद्ध्याद्युपकरणाभावेन सत्यपि तस्मिन् कर्मारम्भसम्भवात् । न च शाखान्तरवत् स्वशाखार्थावबोधनस्य स्वाध्यायविध्यनपेक्षणम् ; अध्ययनेऽपि तत्प्रसङ्गात् । "**स्वाध्यायोऽध्येतव्य**" [5] इति विधौ "**मीमांसाऽध्येतव्या**"

---

1. श्लो. वा. 1. 253.
2. तै. 2. 1. 1.
3. तन्त्र. वा. 1. 4. 1.
4. पु. सू. 1.
5. तै. आ. 2. 15.

इतिवदस्यार्थावबोधफलत्वावगमात् । न च कल्पनायामपि दोषं पश्यामः, विषमन्त्रादि-विधिवदस्याक्षरग्रहणान्तत्वेऽर्थज्ञातव्यताधीनं वेदस्य विवक्षितार्थत्वं न स्यात् । अथ तदर्थ-प्रमितिशेषता स्वाभाविकी, न विध्यधीना वेदस्य, तथापि विधेः फलवदर्थावबोधपर्यवसानं युक्तम् । पञ्चसूनाप्रायश्चित्तत्वेन पञ्चमहायज्ञनिर्वपणविधानात् स्वातन्त्र्येण फलकीर्तनस्या-र्थवादत्वात् तदन्तर्गतगृहस्थाधिकारब्रह्मयज्ञफलस्य प्रथमाध्ययने कल्पयितुमशक्यत्वात् ; अतः परिशेषादर्थावबोधफलत्वमापतति, आवृत्तिगुणस्याविहितस्य विहितोच्चारणानुपयुक्त-स्यापि विधेयत्वकल्पनवद्विचारस्यापि तदुपपत्तेश्च ।

नन्वेवं क्रतुविधिशेषतास्य स्यात् ; तत्रैव मुख्यफलपर्यवसानात् । अस्तु ; तदाहु-र्भट्टपादाः :—

"यत्र तु विहिते फलाकाङ्क्षिणि तदनात्मककार्यपरम्परायां सत्यामान्तरालिकं किञ्चित्क्रतवे पुरुषाय वा चोद्यते, तत्र तदेव तत्साधनम् ; पूर्वस्य तु विधेः तदुपकारार्थतया पर्यवसानम्" इति ( तन्त्र. 1.2.7 ) । न चैवं काम्यत्वादकरणे प्रत्यवायश्रवणं बाध्येत ; क्रतुस्नातागमनस्य काम्यत्वेऽप्यकरणे प्रत्यवायश्रवणात् । अग्निहोत्रवन्नित्यकाम्यतया वा अस्तु ; यथा च "आत्मा श्रोतव्यः" इत्यत्रात्मानमपहाय तद्दर्शनं भाव्यतया आश्रीयते, तथा स्वाध्यायमपहायार्थावबोधोऽपि इति न तव्यश्रुतिविरोधः । अपरथा एकप-दोपात्ताध्ययनक्रियाया एव [ भा ] व्यत्वप्रसङ्गात् । न च विचारात्प्राक् तत्तद्वाक्यार्थ-विशेषानवबोधात् तत्कामनानुदयात् अर्थावबोधकामोऽध्ययनेनार्थावबोधं भावयेत् इति विध्यनुपपत्तिः फलप्रयुक्तविचारेऽपि तुल्यत्वात् । न च आप्तवचसां विधिं विनापि फलवदर्थावबोधकत्वदर्शनात् साङ्गाच्च कर्मणो विधीयमानादवघातादिष्विवादृष्टजन्मनियमात्र विधिफलमर्थावबोधः, किन्तु स्वीकृतस्वाध्यायमात्रजन्यं फलम् ; अक्षरावाप्तेरपि विधिव्या-पारविषयत्वप्रसङ्गात् । अक्षरावाप्तिसमवेतादृष्टस्यानधिकृतकर्मवाक्येषु प्रायश्चित्तजपादिद्वारे-णापूर्वोपकारित्ववदर्थावबोधस्यापि तदीयस्य संयगिज्यादिद्वारेणापूर्वोपकारित्वोपपत्तेर्न याव-दधिकृतकर्मवाक्यमेवाध्ययनाशङ्का । तस्मात् फलपर्यन्तत्वायावघातावृत्तिवत् अध्ययनविधे-र्विचारप्रयोजकत्वं न विरुध्यते ।

यच्च द्वितीयसूत्रार्थोऽपि परस्पराश्रयग्रस्तः 'चोदनैव धर्मे प्रमाणम्' इत्यवधारणे सिद्धे 'चोदनालक्षण एवार्थो धर्मो न चैत्यवन्दनादिलक्षणः' इति सिद्ध्यति । सति च तस्मिन् धर्मे चोदनैव प्रमाणम् इत्यवधारणसिद्धिः इति । न ह्यतीन्द्रियो धर्म इति चोदनां

विनाऽन्यतस्तैस्सिद्धम् इति । **तदप्यलीकम्** ; विद्यमानरूपादिमदुपलम्भनमेव चक्षुरादिभिः इत्यादिप्रत्यक्षसूत्राद्युक्तन्यायैर्धर्मस्यातीन्द्रियत्वस्यावधारितत्वात् । यद्यपि चोदनायाः प्रामाण्याय न प्रमाणान्तरासम्भवोऽपेक्षितः, तथापि **बौद्धादि**प्रोक्तस्य धर्मत्ववारणायापेक्षितः । किञ्च ब्रह्मणोऽपि शास्त्रैकप्रमाणत्वादुक्तदोषात् । तथा हि— वेदान्ता एव ब्रह्मणि प्रमाणम् इत्यवधारणे सिद्धे वेदान्तप्रमाणसिद्धमेव ब्रह्म, न नैयायिकादितर्कितमिति सिद्ध्यति । सति च तस्मिन्, वेदान्ता एव ब्रह्मणि प्रमाणम्, इत्यवधारणसिद्धिः । न ह्यतर्कितं ब्रह्म इति "औपनिषदं पुरुषम्" इत्यादिवेदान्तं विनाऽन्यतस्ते सिद्धम् । अतः परपक्षे दोषमुद्धाटयन् स्वपक्षे मा चूचुरस्त्वम् ।

**यच्च** किं यौगिकोऽयं वेदशब्दो वेदयति इति, किं वा रूढः ? प्रथमे चक्षुरादेरपि वेदत्वप्रसङ्गः ; चरमे किं वर्णमात्रे रूढः, किं वा क्रमविशिष्टेषु ? नाद्यः, ककारादिदर्शनेऽपि वेदबुद्धेरभावात् । नापि द्वितीयः, क्रमानिरूपणात् । न तावद्वर्णानां देशतः कालतो वा क्रमस्सङ्गच्छते, विभुत्वात्, नित्यत्वाच्च । नापि वस्तुस्वभावप्रयुक्त एव क्रमः, '**कपिः पिकः**' इत्येतस्य युगपत् पूर्वापरीभावविरोधात्, उच्चारणोपलब्ध्योश्चाप्रत्यक्षत्वात् क्रमविशिष्टानां न प्रत्यक्षता स्यात्, अनिर्वाच्यक्रमे कल्पितानामेव बोधकता कल्पितक्रमविशिष्टानां कल्पितत्वात् इति,

**तदपि वार्तम्** ; क्रमविशिष्टवर्णा वेदाः ऋग्वेदादौ वेदशब्दस्य रूढत्वात् "**त्रयो वेदा अजायन्त**" "**श्रुतिश्च वेदो विज्ञेय**"[1] इति श्रुतिस्मृतिभ्यां 'धर्मादि वेदयति' इति विवक्षया यौगिकत्वे विदो विशेषाभावाच्च । अपरथा **बृहत्त्वाद्ब्रह्म** इत्यादिनिरुक्तिरपि दुरुक्तिस्स्यात् ब्रह्माण्डादावपि ब्रह्मत्वप्रसङ्गात् । निरुपपदब्रह्मपदार्थस्य निरङ्कुशब्रह्मत्वस्य ब्रह्माण्डादासम्भवश्चेत्, तर्हि प्रधानादौ प्रसक्तिः "**ईक्षतेर्नाशब्दं**"[2] इत्यादेः अत एव तन्निरासः । नक्षत्रादेर्गतिक्रमस्याप्रत्यक्षत्वेऽपि तद्घटितस्थानक्रमावच्छिन्नस्य प्रत्यक्षत्ववत् वर्णानामुच्चारणक्रियाया अप्रत्यक्षत्वेऽपि **गुरुमते** तद्घटितध्वनिक्रमावच्छिन्नानां प्रत्यक्षत्वोपपत्तेश्च । तदाहुः **भट्टपादाः**—

"यथा घटादेर्दीपादिरभिव्यञ्जक इष्यते ।
चक्षुषोऽनुग्रहादेवं ध्वनिस्स्याच्छ्रोत्रसङ्गतेः[3] ॥"

---

1. मनु. 2. 10.
2. ब्र. सू. 1. 1. 5.
3. श्लो. वा. 1. 6. 42.

इति। यथा च सप्तदश ऋत्विजो यजमानश्च प्रत्येकं कार्यं प्रत्यपर्याप्ता मिलिताः कुर्वन्ति, न तथा ध्वनयो वर्णाश्च ; किन्तु मैत्रावरुणः प्रैषकर्ता न दण्डस्तद्वैशिष्ट्यं वा। यथा मैत्रावरुणः प्रैष्याद्दण्डी प्रैषानन्वाह इत्यत्र तयोरचेतनत्वात्, तथैवाकल्पितानां वर्णानामेव बोधकं रूपं, तृणादिव्यक्तवह्नेरिव च दाहप्रकाशकं रूपम्। यथा च कल्पिताविद्याविशिष्टस्य तत्प्रकाशनं ब्रह्मणो न कल्पितरूपकृतं स्वरूपप्रकाशस्यैव "तमेव भान्तमनुभाति सर्वम्"[1] इति श्रुतेः तत्प्रकाशनत्वात् ; अपरथा, शून्यवादप्रसङ्गात् अधिष्ठानात्मस्वरूपस्यैव समारोपिताविद्याप्रकाशत्वात् ; तस्य च कल्पितत्वे कथं न शून्यपरमार्थता। विशिष्टस्य प्रकाशकत्वे च विशेषणभूताविद्यायास्स्वप्रकाशकत्वप्रसङ्गात्। एवमत्रापि योज्यं इति सर्वं रमणीयम् **इत्यध्वरमीमांसकाः**।

ब्रह्मविचारे कथाविशेषात्मके प्रयत्नयोग्ये न पुनः (परं) शाब्दज्ञानात्मके भामत्युक्ते श्रोतव्य इति विधिमभिदधते; अध्ययनविधेः फलवत्क्रतुपर्यवसानस्योक्तत्वात्, वक्ष्यमाणत्वाच्च **समन्वयकौमुद्याम्**। न च अनेनैव सामान्यविधिना "वेदः कृत्स्नोऽधिगन्तव्यः[2]" इत्यमुना वा वेदान्तविचारे प्राप्ते व्यर्थोऽयम्, तत एव अधिकारिविशेषस्य साक्षात्कारकामस्य सर्वत्र विचारविधायकत्वाच्च आत्मैकत्वसाक्षात्कारायावृत्तिगुणकश्रवणादिविध्युपपत्तेः।

अत्राह चोदकः— "अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः मैत्रेयी च कात्यायनी च, तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायनी, अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् मैत्रेयीति होवाच[3]" इति मैत्रेयीमधिकारिणीं ब्रह्म-(बहु) वादिनीं इति विशेषणात् विचारे प्रयोजकज्ञानवतीमुपस्थाप्य, "सा होवाच मैत्रेयी येनाहं नामृता स्याम्, किमहं तेन कुर्याम्; यदेव भगवान् वेद, तदेव मे ब्रूहि[2]" इति तस्या वीतरागतया कैवल्योपायं प्रार्थयमानाया, "भवति ते तद्व्याख्यास्यामि व्याचक्षाणस्य तु मे निदिध्यासस्व" इत्यवधानमुपदिश्य "स होवाच न वा अरे पत्युः कामाय" इत्युपक्रम्य "आत्मनस्तु कामाय सर्वं प्रियं भवति आत्मा वा अरे-द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विज्ञातम्" इत्यन्तं उपदिशति **बृहदारण्यकश्रुतिस्तावत्**। तत्र परप्रेम-

---

1. कठ. 2. 5. 15.
2. मनु. २. १६५
3. बृ. 4. 5. 1.

गोचरीभावेन परमानन्ददेहत्वमात्मनो विज्ञापितमेव ; आत्मविज्ञानाच्च सर्वविज्ञानमुपदिशन् अस्य ब्रह्मविग्रहतामप्याचचक्षे ।

एतदेव च विचारफलत्वेन **तैत्तिरीयकश्रुतौ**—"आनन्दो ब्रह्मेति व्यजानात्[1]" इति जेगीयते । परमात्मन एव मायाप्रतिबिम्बितस्य जीवात्मनावस्थितेः पत्यादिभावसंसूचितभोक्तृजीवोपक्रमणं ब्रह्मपरेऽत्र वाक्ये "**अवस्थितेरिति काशकृत्स्नः**[2]" इत्यूचे भगवान् **व्यासः** । ऐकात्म्यज्ञानादन्यत्राश्रुतत्वाभावात् एकविज्ञानात् सर्वविज्ञानस्य च सर्वप्रपञ्चाधिष्ठानात्मवस्तुविज्ञानमन्तरेणासम्भवात् "इदं सर्वं यदयमात्मा[3]" इत्यादिपरामर्शाच्च ब्रह्मप्रतीचोरत्यन्ताभेद एवात्र प्रतिपाद्यत इति गम्यते । अतः किमर्थं पुनः पठ्यते— "द्रष्टव्यः" इत्यादि । 'अथ ब्रह्मवादिनी' इत्युपादानान्मैत्रेय्या ब्रह्म बुभुत्सोरात्मव्यतिरेकेण ब्रह्मणोऽपि नाञ्जसा पुमर्थत्वम् इति सूचयन्नूचिवा**नाचार्यः** :—"सर्वस्मात्प्रिय आत्मा" इति । ततो जीवस्य ब्रह्मपर्यन्तं ब्रह्मणश्च जीवपर्यन्तं स्वरूपं श्रुतितदनुकूलन्यायाभ्यां साक्षात्कारानुभवावसानं निर्धारणीयमित्यनेनाह ।

तत्रापि विधिर्निरूपणीयः । स तावत् त्रिविधः—

"**विधिरत्यन्तमप्राप्ते नियमः**पाक्षिके सति ।
तत्र चान्यत्र च प्राप्ते **परिसङ्ख्ये**ति कीर्त्यते ॥"[4]

इति गिरा शुद्धो नियमः परिसङ्ख्या च इति । तत्र कर्मस्वरूपज्ञापक **उत्पत्ति**विधिः, इतिकर्तव्यताङ्गविनियोजको **विनियोगविधिः**, फलकामनादिविधिः, पुरुषसम्बन्धनिमित्तयुक्तोऽ**धिकार**विधिः, सर्वाङ्गोपसंहारेणानुष्ठापकः **प्रयोग**विधिः । तत्र योऽयमत्यन्तमप्राप्तो न च प्राप्स्यति प्रागवचनात् इत्यवगम्यते ; तत्र विनियोगे शुद्ध एव विधिः , यथा "व्रीहीन् प्रोक्षति" इति । अवघातवत्तण्डुलनिष्पत्त्या प्रोक्षणस्य पक्षेऽप्यनाक्षेपात् । यत्र तु प्राग्वचनात् पाक्षिकी प्राप्तिः सम्भाव्यते, तत्राप्राप्तिपक्षं पूरयन् यो विधिः प्रवर्तते, स नियन्तृत्वान्नियम इत्युच्यते ; यथा "व्रीहीनवहन्ति" इति । तण्डुलनिष्पत्त्यर्थाक्षेपादेव सिद्धेर्न तत्प्राप्तिमात्रं विधिफलम्, किं तर्हि ? अप्राप्तांशपूरणं तत् । अप्राप्तिपक्षे च तण्डुलैरुपायान्तराण्याक्षिप्येरन् ; पूर्णे तु सति या तेषां निवृत्तिः असावर्थात् ; न

---

1. तै. 3. 6.
2. ब्र. सू. 1. 4. 22.
3. बृ. 4. 5. 6.
4. तन्त्र. वा.

वाक्यात् । न च तद्द्वारेणायं नियम इत्युच्यते परिसङ्ख्या हि तथा स्यात् । नियोगात्प्रागेव यत्तत्र चान्यत्र तच्चान्यच्च प्राप्नुयादिति सम्भाव्यते तत्र परिसङ्ख्यानकारी विधिः परिसङ्ख्या इत्युच्यते । यथा "सायंप्रातर्जुहोति" इति सर्वकालप्राप्तस्याग्निहोत्रस्य कालपरिसङ्ख्यानम् । यथा च रागादविशेषेण भक्षणप्राप्तौ "पञ्चपञ्चनखा भक्ष्याः" इतीतरवर्जनेन भक्ष्यपरिसङ्ख्यानम् ॥

तत्र कतमोऽयं विधिः इति ? न तावन्नियमपरिसङ्ख्ये, अनेकसाधनत्वाभावेन पाक्षिकप्राप्त्यभावात् ॥

अत्र केचिदाहुः—"श्रवणे शुद्ध एव विधिः यस्माद्वाक्यैकगम्यवस्तु साक्षात्कारेण विचारादिनियततया धर्मादाविव न क्वचिदनुभूतचरम्" इति । अमी प्रष्टव्या जायन्ते—किं मानान्तरगोचरे नियमोऽयमस्ति, न वा ? आद्ये धूमस्येव धूमध्वजेन श्रवणादेस्साक्षात्कारेण स्थलविशेषे व्याप्तिबलादिव विवक्षितस्थलेऽपि प्राप्तत्वान्न शुद्धविधित्वम्, "विधिरत्यन्तमप्राप्ते" इत्युक्तत्वात् । न खलु पूर्वमननुभूतधूमध्वजेन न धूमस्य व्याप्तिः इति निपुणेन निरूपणं शक्यम् । द्वितीये वाक्यैकगम्येति विशेषणवैयर्थ्यम् । अथ श्रवणादयो व्रीह्यादय इव स्वरूपेण सिद्धा अपि न श्रेयस्साधनरूपेण सिद्धा इति शुद्धविधिगोचराः । यदाहुः—

'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥

श्रेयस्साधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः[1] " ॥

इति । तत्रापूर्वाधानाभावे न यथोक्तसिद्धिः ; अपूर्वाधानेऽपि यज्ञादौ तद्दर्शनान्नियमविधिरेव स्यात्, नियमादृष्टस्य स्वयं प्रतिषेधाच्च । आवृत्तिहीनश्रवणादेर्यथोक्तफलादर्शनात् विधेरप्रामाण्यपरिहारायावृत्तिविधाने ज्ञानोत्कर्षफलस्य ततो दृष्टत्वादवघाततुल्यतैव ।

अथ इन्द्रियमेव श्रोत्रं मनो वा षड्जादौ श्रवणादिसहकृतं विशेषसाक्षात्कारहेतुः, तर्हि प्रकृतेऽपि मनः प्राप्नुयात् । न च वाच्यम् श्रोत्रादिवन्न क्वापि मनसः

1. श्लो. वा. 1. 1. 2.

स्वातन्त्र्येण कारणत्वम्, चिदात्मनस्स्वप्रकाशत्वात् साक्षिगोचरत्वाच्च सुखादेः इति। "मनसा ह्येव पश्यति मनसाह्येव शृणोति[1]" इति करणान्तरोपकरणत्वेनैव श्रवणाच्च। यस्माच्चक्षुषोऽगोचरे पृष्ठतोऽप्युपस्पृष्टः केन विद्धः कस्यायं स्पर्शो जानोरयमिति प्रतिपद्यते। यदि विवेककृन्मनो नाम नास्ति त्वङ्मात्रेण कुतो विवेकप्रतिपत्तिः स्यात्। यत्तद्विवेकप्रतिपत्तिकारणं तन्मनोऽस्ति इति विषयविशेषालम्बनतया मनसो **बृहदारण्यकवृत्तावाचार्यै**र्व्यवस्थापनात्, करणान्तरोपकरणस्यापि हस्तस्येव स्वातन्त्र्येण करणत्वसंभवाच्च। **पञ्चपादीविवरणयोः** स्वप्नप्रपञ्चविपरीतप्रमात्रादिज्ञानसाधनस्यान्तःकरणस्य निद्रादिदोषपूर्वानुभवसंस्कारसहितस्य सम्प्रतिपन्नकारणत्रितयत्वाद्युक्तं स्वप्नेऽपि स्मृतिरूपं भ्रान्तिज्ञानमित्यात्मविषयत्वेनास्य व्यवस्थापनाच्च। न चात्मनः प्रमेयत्वे प्रमातृत्वव्याघातः; चिदचिदंशद्वयघटितमूर्तेः प्रमातृत्वात् चिदचिदंशसंवलितप्रमोपादानस्य प्रमातुस्तत्समानात्मकत्वात् केवलस्य प्रमाकरणव्यापारयितृत्वानुपपत्तेः; व्यापाराभावेन प्रमातृत्वाभावात्।

अत एव "न तावदयमेकान्तेनाविषयः[2]" इति **आचार्याः**। कर्तृत्वादिविशिष्टस्य रूपस्य मनोजन्याहम्प्रत्ययविषयत्वात्। अतोऽचिदंशस्य तदालिङ्गितेतरांशस्यापि देहघटादिविवर्तोपगूढवत् प्रमेयत्वेऽपि स्वयंज्योतिष्ट्वादेः केवलगतस्याव्याघातः। "मनसैवानुद्रष्टव्यम्[3]" इति श्रुतेः "शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने कारणम्[4]" इति गीताविवरणे **भगवत्पादाचार्यै**रभिधानाच्च। "न च एष साक्षात्कारो मीमांसासहितस्यापि शाब्दस्य प्रमाणस्य फलम्; अपितु प्रत्यक्षस्य; तस्यैव तत्फलत्वनियमात्; अन्यथा कुटजबीजादपि वटाङ्कुरोत्पादप्रसङ्गात्। तस्मान्निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वम्पदार्थस्यापरोक्षस्योपधाननिषेधेन तत्पदार्थतामनुभावयति"[5] इति **आचार्यवाचस्पतिना**प्युक्तत्वान्मनसः करणत्वं न व्याहन्यते। **उदयनो**ऽप्याह स "नच वाच्यम् वाक्यादेवात्मसाक्षात्कारोदयः इति। तस्य केवलस्य सामर्थ्यानुपलम्भात्"।

यदि तु स्वयं विदितरूपतया किं तत्र ध्यानादिकमपूर्वमाधास्यतीत्युच्यते, तदा श्रुतेरपि वैफल्यमनेनैव न्यायेन। **यदपि** भौतदशकनदीतरणमुदाहृतम्, **तत्रापि** न केवलेनैव वाक्येन साक्षात्कारः, किन्तु चक्षुरादिनैव। [ननु] वदति कथङ्कारं

---

1. बृ. 1. 4. 3.
2. ब्र. सू. भा. 1. 1. 1.
3. बृ. 4. 4. 19.
4. गी. भा. 2. 21.
5. भामती. 1. 1. 1.

प्रतिपक्षमेवं भवान् उभयत्रान्वयव्यतिरेकयोर्दर्शनात् इति, प्रत्युत बहुलतमे तमसि चक्षुर्हीनस्यापि "**दशमस्त्वमसि**" इत्युपदेशो साक्षात्कारदर्शनादसद्दर्शनमेव विनिगम्यते। न, स किं सङ्ख्यामात्रगोचरः, किं वा तद्विशिष्टरूपादिगुणकविग्रहविषयः? नाद्यः, विना धर्मिसाक्षात्कारेण सङ्ख्याधर्मस्य साक्षात्कारासम्प्रतिपत्तेः। नापि द्वितीयः, चक्षुरादिकमेव रूपादि साक्षात्कारयति इति प्रतिपत्तेः। अतः तत्र परोक्षैव प्रतिपत्तिः, भीतानामिव स्वशरीरे चाक्षुषस्य, दृढतराभ्यासस्य मुमुक्षोर्मानसस्यात्मन्यभावादभ्यासस्साक्षात्कारायाश्रयणीयः "**तत्त्वमसि**[1]" इति नवकृत्वो ब्रह्मात्मनोरैक्यस्य पदार्थपरिशुद्धिपूर्वकमुपदेशात् शास्त्रीयपदार्थसाक्षात्कारस्य श्रवणाद्यभ्यासजत्वस्य विविक्तषड्जादिसाक्षात्कारदृष्टान्तेन सम्भवाच्च; "**आवृत्तिरसकृदुपदेशात्**[2]" इति **व्याससूत्राच्च**।

ननु पदार्थविशुद्धिपूर्वकं "**तत्त्वमसि**" इत्युपदेशात् तदावृत्तेश्च स्मरणमात्रोपयोगेन स्मृतवाक्यस्यैवात्र करणत्वावधारणात् "वेदान्तविज्ञानसुनिश्चितार्थाः[3]" इति ज्ञानान्तरनैराकाङ्क्ष्यश्रवणाच्च, "नावेदविन्मनुते तं बृहन्तम्[4]" "तं त्वौपनिषदं पुरुषं पृच्छामि[5]" इति च वेदैकप्रमाणत्वावधारणात् "तद्धास्य विजिज्ञौ[6]" इति च तावन्मात्रेण साक्षात्कारश्रवणात् विशुद्धपदार्थज्ञानवतः शब्दादेवाभ्यासनिरपेक्षात् साक्षात्कारज्ञानोदयो गम्यते। किञ्च अभ्यासोऽर्थज्ञानस्याप्रमाणत्वादज्ञाननिवर्तकत्वानुपपत्तेः प्रमाणावृत्तौ च प्रमाणस्यैवावृत्तिसहितस्य साक्षात्कारजनकत्वापत्तेः सूत्रस्यापि पदार्थविशुद्ध्यर्थमन्वयव्यतिरेकावृत्तिपरत्वात्।

अत्र वदामः— वेदस्तावन्निर्दुष्टचक्षुरादिवदशेषशङ्कानि [ अपेताशङ्कं ] र्विचिकित्सज्ञानजनक इति वाच्यम्; अन्यथा कर्मण्यपि तत्प्रतिपादिते न विश्वासःस्यात्; तच्च परोक्षमेव। "**शास्त्रदृष्ट्या तूपदेशो वामदेववत्**[7]" "इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेनाहमेव परं ब्रह्म इत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म "मामेव विजानीहि" इति प्रतर्दनं प्रति यथा वामदेवः "तद्धैतत्पश्यन्" इत्यादिश्रुतेः"[8] इति च **सूत्रभाष्ययोरशास्त्रा**र्थध्यानजा प्रमा शास्त्रदृष्टिरभिप्रेता युक्त्यनुसारात्।

---

1. छां 6. 7. 8.
2. ब्र. सू. 4. 1. 1.
3. मु. 3. 2. 6.
4. तै. का. 3. 5. 4.
5. बृ. 3. 9. 2. 6.
6. छा. 6. 16. 3.
7. ब्र. सू. 1. 1. 30.
8. सू. भा. 1. 1. 30.

**अथ** प्राथमिकं परोक्षं ज्ञानमपरोक्षे वस्तुनि न यथार्थम्, **नायं दोषः**; अपरोक्षस्य प्रत्यभिज्ञानस्य परोक्षतत्ताविषयत्वेऽपि प्रामाण्यवत् परोक्षशाब्दज्ञानस्यापरोक्षविषयत्वेऽपि प्रामाण्यसंभवात्। कालविशेषस्पृष्टस्यापि यागादेस्साधनत्वस्य विधिवाक्यजन्यकालत्रयास्पृष्टत्वज्ञानस्य प्रामाण्येष्टेश्च। **अथ** व्यवहितत्वात् जडवस्तुनि यथाकथञ्चिद्भवतु, प्रत्यग्ब्रह्मणि पुनरव्यवहिततमे वस्तुतोऽनुभवात्मनि परोक्षज्ञानमयथार्थमेव, **तदा** "स्वयं ज्योतिरात्मा[1]" "आत्मैवानन्दः[2]" "एकधैवानुद्रष्टव्यम्[3]" "अस्तीत्येवोपलब्धव्यः[4]" इत्यादिवचनानां प्रमाणीकरणेन विप्रतिपन्नं प्रति तत्तदर्थसाधनं न स्यात्, अशोधितपदार्थान् प्रत्ययथार्थज्ञानजनकत्वात्। एवं प्रत्यधिकरणमनिर्णायकत्वात् वाक्यानां व्यर्थाश्शास्त्रारम्भाः। तत्राप्यपरोक्षज्ञानोत्पत्तौ प्रमाया आदित्यस्येव तमोनिवर्तनेऽभ्यासापेक्षानुपपत्तेः सकृच्छ्रवणेनैव जीवन्मुक्तिसौलभ्यं प्रतिवाद्यादेरपि स्यात्। सर्वात्मनाऽनवभासकप्रमाणानामप्रामाण्यापत्तेश्च। अतः परोक्षमपि "यत्साक्षादपरोक्षात्[5]" इत्यादिशाब्दज्ञानं प्रत्यग्ब्रह्मणि प्रमाणमेव, तेन तस्मिन् ज्ञातेऽपि शब्दात् मन्तव्यो निदिध्यासितव्यः। तत्प्रयोगकल्पे 'प्राणायामः प्रत्याहारो ध्यानं धारणा तर्कस्समाधिः षडङ्गान्युच्यन्त' इति प्रयत्नान्तरश्रवणात्।

अपरोक्षज्ञानमभ्यासकरणकं मनःकरणकं वा? निर्बाधजन्यानुभवस्य प्रमाणार्थत्वाभावापराधेनाज्ञानानिवर्तकत्वस्योदाहर्तुमशक्यत्वात् अभ्यासोत्थज्ञानस्याप्यत्राज्ञाननिवर्तकत्वोपपत्तेश्च। न च भावनापरिपाकसहितान्तःकरणजन्यत्वे प्रमाणसामग्र्यजन्यत्वम्, येन "प्रमाणसामग्र्यजन्यत्वेन प्रामाण्यहानात्" इति **प्रकटार्थोक्तं** दूषणं स्यात्।

अथ प्रथमत एवापरोक्षज्ञानं शब्दादुद्भवति; तच्च प्रमातृगतासंभावनादिदोषेण आर्द्रमरीचन्यायेन परोक्षवदवभासते तत्र मननादिना दोषनिरासेन तदपरोक्षतया व्यवस्थाप्यते, **तदपि मन्दम्**; ज्ञानस्य नित्यत्वाभावात्; तेन तदेवापरोक्षतया कथं व्यवस्थाप्यते? ज्ञानान्तरं तु हेतुसमुदायाज्जायमानमपरोक्षमङ्गीकृतमेव आर्द्रमरीचादिज्ञानस्यानध्यवसायात्मकस्य प्रमात्वेन विशेषांशेऽपरोक्षत्वाभावेनानुदाहरणत्वाच्च। ततः परोक्षमेवाद्यं ज्ञानम्। दृष्टश्चाभ्यासहेतुको गरुडादिसाक्षात्कारः; तेन तज्जन्यत्वमत्रापि न विरुध्यते। तस्मात् सर्वथाऽपि नात्यन्ताप्राप्तार्थश्रवणे श्रवणफलालोचनया विधिः॥

---

1. बृ. 4. 3. 9.
2. ibid 4. 3. 32.
3. ibid 4. 4. 20.
4. कठ. 2. 6. 13.
5. बृ. 3. 4. 1.

अत्र ब्रूमः :—अयमवघातादिवद्दृष्टादृष्टार्थो नियमविधिः । "तस्माद् ब्राह्मणो नावैदिकमधीयीत" इति मैत्रेयीश्रुतेः, "श्रोतव्यश्श्रुतिवाक्येभ्यः" इति स्मृतेश्च नियमविशेषोपपत्तेः ।

**यद्यपि** "यज्ञेन[1]" इत्यादिवाक्येऽन्यत्रोत्पन्ना यज्ञादयः धात्वर्थे विध्यश्रवणात् विविदिषायामेव विधिसंबन्धात् रूपान्तररहिता आख्यातापरतन्त्रैर्यज्ञादिभिरनूद्याः । आख्यातपरतन्त्रत्वे हि कर्मपदानामाख्यातस्यानुवादकत्वेऽनुवादकत्वम्, विधायकत्वे विधायकत्वम्; यथा "दध्नाग्निहोत्रं जुहोति" अग्निहोत्रं जुहोति" इति । अत्र चेष्यमाणज्ञानसाधनत्वेन विनियुज्यन्ते यज्ञादयो नित्याः आश्रमकर्मरूपा अपि विनियोजककर्मवाक्ययोस्तुल्यबलत्वात् क्रत्वर्थपुरुषार्थत्वेन विनियोजकदध्ना जुहोति, दध्नेन्द्रियकामस्य जुहुयात् इति वाक्यवत् "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्सनोऽन्यत्र" इति स्मरणात् । अत्र प्रकृत्यर्थभूतवेदनस्य प्राधान्यात् । यथा च नित्याग्निहोत्रे नित्यविधिप्रयोजकत्वं बाधित्वा कामस्य प्रयोजकत्वं सम्पाद्य निविशमानः काम्यप्रयोगो न नित्यप्रयोगं विहन्ति प्रयोगयोरेकरूपत्वेन काम्यकरणादपि नित्यसिद्धेः, एवमत्रापि इति नैकस्य कर्मणो नित्यत्वानित्यत्वविरुद्धधर्मसंयोगः; यज्ञादयश्चानियतदेशजन्मफलाः प्रारब्धफलविरोधिकर्मक्षयापेक्षाः फल इति तद्घटितसत्त्वशुद्ध्यादिद्वारप्रवृत्तविविदिषाक्षिप्ताः श्रवणादयो दुष्टकरणेषादिविषयसंप्रयोगवत् ? प्रतिबन्धक्षयापेक्षफलत्वादनियतजन्मफलाः प्रातिस्विकविधिमन्तरेणापि सम्भवन्ति,

**तथापि** यज्ञादिभिरेव....सन्यासादिवत्प्रातिस्विकविधिसंयोगा अपि सम्भवन्ति । अथ श्रवणादेः प्रमाणान्तर्गमादतथात्वाच्च सन्यासादेर्विधेयत्वात् विधेयवैषम्यं ! विधिपक्षेऽपि श्रवणादिव्यतिरेकेण साधनान्तरस्यावघातव्यतिरेकेण तण्डुलनिष्पत्तौ [त्विव] ब्रह्मभावसाक्षात्कारे ब्रह्म[प्रासद्य]भावान्न नियमविधिः । अत एव न परिसङ्ख्या । न च ब्रह्मसाक्षात्कारव्यक्तावुपायान्तरासंभवादपूर्वविधित्वं शङ्कनीयम्; अवघातसाध्यतण्डुलव्यक्ताबप्युपायान्तरासम्भवादपूर्वविधित्वप्रसङ्गात् । ततो न श्रवणादौ विधिः ।

अत्रोच्यते—"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः"[2] इति तावदाम्नायते ।

---

1. बृ. 4. 4. 22. 2. ब्र. सू. 3. 4. 47.

यस्मात्पूर्वे ब्राह्मणा आत्मानं विदित्वैषणाभ्यो व्युत्थाय भिक्षामाचरन् पाण्डित्याद्युप-लक्षणार्थमेतत् । **पण्डा** साङ्गाध्ययनजा धीः, आत्मतत्त्वगा श्रवणप्रवृत्त्युपयोगिनी सञ्जाताऽस्य इति पण्डितः ; सञ्जातार्थे इतज्विधनात्, ततो वर्णलोपे पण्डित इति पदम् । तस्य कृत्यम् गुरुमुखाद्वेदान्तवाक्यानां ब्रह्मणि संयोजनात्मकं श्रवणं **पाण्डित्यम्** । तस्मादधुनातनोऽपि ब्राह्मणो **निर्विद्य** निश्चयेन लब्ध्वा **बाल्येन** ज्ञानबलभावेन युक्तितोऽसंभावनानिरासरूपमननेन शुद्धहृदयत्वेन वा स्थातुमिच्छेत् । "बाल्यं च पाण्डित्यं च निर्विद्य" इत्यादिरुक्तदार्ढ्यार्थमनुवादः । अथ **मुनिः** मननशीलो निदिध्यासकः स्यात् मौनादन्यद्बाल्यं पाण्डित्यं चामौनम् तच्च मौनं च निर्विद्य अथ ब्राह्मणः ब्रह्म नित्यवद्गच्छति इति **ब्राह्मणः** साक्षात्कृतब्रह्मा भवति इति प्रयत्ननिष्पाद्यं श्रवणादित्रयं साक्षात्कारसाधनमिह प्रतीयते । तस्य च नियमविधिः "**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्**"[1] इति सूत्रेण पाण्डित्यबाल्यापेक्षया तृतीयं ज्ञानाभ्यासात्मकमौनं पृथङ्निर्दिष्टम् ; तदेव विद्योदये सहकार्यन्तरं साधनान्तरं निदिध्यासनं सहकारिशब्देन वाच्यप्रधानभूतश्रवणफलाङ्गम् । तस्य पक्षेण द्वैतदर्शनस्य नान्तरीयकव्यावृत्त्या अप्राप्तपक्षपूरणेन तद्वतः पाण्डित्यबाल्यवतो विधिः इति सूत्रयता भगवता **बादरायणेन** सूत्रितः—"**विध्यादिवत्**" इति ।

प्रधानविधिप्रकरणे तदङ्गविधिवत् विद्याप्रकरणे तदङ्गविधिः इति च विधित्वं दृढीचक्रे । यथा च यजनार्थं देशसामान्यप्रसक्तौ "प्राचीनप्रवणे वैश्वदेवेन यजेत" इति देशविशेषस्याप्राप्तपक्षपूरणेन नियमः, एवमत्रापि दृष्टार्थतया श्रवणमात्रप्राप्तौ वैदिकश्रवणविशेषनियमः । न च अध्ययनविधिनैव पुराणादिश्रवणनिरासात् पक्षप्राप्त्यभावान्न नियमविधिः, ब्राह्मणस्य तस्याध्येतव्यनियामकत्ववत् विचार्यनियामकत्वे मानाभावात् ।

> "नियमः परिसङ्ख्या वा विध्यर्थोऽत्र भवेद्यतः ।
> अनात्मादर्शनेनैव परात्मानमुपास्महे ॥"[1]

इति चोदाहृतसूत्रभाष्यानुसारेण **सुरेश्वराचार्यैरपि** नियमः प्रत्यपादि । न चात्र—

> "प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
> स नास्य फलमाप्नोति परत्रेति विचारितम् ॥"

इति **भट्टपादोक्तमनुकल्पदूषणमपि** ; विप्रस्य वेदान्तश्रवणादरणे क्षत्रियवैश्ययोर्वा प्रमाणं मुख्यं शब्द एव ॥

---

1. कठ. 1. 2. 7.

श्रवणं च "श्रवणयापि बहुभिर्यो न लभ्यः"[1] इति सम्भाव्यमानप्रतिबन्धोदयं "शृण्वन्तोऽपि बहवो यं न विद्युः" इति च सम्भाव्यमानप्रतिबन्धफलं श्रूयमाणं प्रमाणेतिकर्तव्यात्मकं ततोऽन्यत्वेन चक्षुस्संस्कारादिवद्विधेयं सम्भवति । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन[2]" इति श्रुत्या मननध्यानश्रवणानां नात्मावगतिसाधनत्वं निषिध्यते; किन्तु "यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूँ स्वाम्" एष पर आत्मा यमेव देहादिभ्यो विवेचनेन चिन्मात्रविग्रहं साक्षिणमात्मानमवलम्बमानं वृणुते स्वरूपतया महाकाश इव घटादिभ्यो विविच्यमानं व्योम, तेन (बन्धः) लभ्यः । न चासौ भिन्नस्सन् लभ्यस्सः; किन्तु तस्य लब्धुरेष आत्मैव । कीदृशस्तर्हि लाभः? उच्यते; स्वां जीवस्य निजां तनुं मायाजवनिकातिरस्कृतां परात्माख्यां श्रवणादिजन्यसाक्षात्कारेण मायोच्छित्तौ विवृणुते । अभिव्यक्तिमात्रं लाभ इति निरूपयन्त्या तया तेषां दार्ढ्यमेव कुर्वत्या "नानुध्यायात् बहूञ्छब्दान्[3]" इतिवत् बहुप्रकारत्वमेव वार्यते "बहुना श्रुतेन" इति ।

"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेत्[4]" कार्यकारणमायाभ्यः पृथक्कुर्यात् "ज्ञातैवात्मा सदा ग्राह्यो ज्ञेयमुत्सृज्य केवलः" इत्यादिगुरूक्तप्रकारैः मुञ्जादिवेषीकां धैर्येण तं विद्यात् श्रवणादिवललब्धसाक्षात्कारेण तं वास्तवं रूपं लभेत इति (कठ) वल्ल्यामेवोत्तरत्र कीर्तनात् ।

अथास्तु विधिः, तथापि साक्षात्कारादर्वागेव श्रवणमभ्यस्यतः प्रायणञ्चेत्; तदा जन्मान्तरे दिवसान्तर इव विधिव्यापारो न स्यात्; स्याच्चेदवशिष्टं कर्तव्यम् इति स्यात् । न चैवमस्ति । ततो दुर्घटोऽयं विधिः; उच्यते; किमवघातवत् फलपर्यन्तावृत्तिगुणकं श्रवणं विधीयते ततो येषां तदभ्यासात्तुषादिकल्पसंशयादिव्यावृत्तिः समजनि प्राचि भवे तेषां शब्दश्रवणमात्रात् तत्स्मरणमात्राद्वा साक्षात्कारफलसम्भवात् तान् प्रति विरतव्यापारो विधिः । तदाहुः **भगवत्पादाचार्याः** :—

"येषां तु निपुणमतीनामज्ञानसंशयविपर्ययलक्षणः पदार्थविषयः प्रतिबन्धो नास्ति ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसिवाक्यार्थमनुभवितुम्[5] इति, तान् प्रत्यावृत्त्यानर्थक्य-

---

1. कठ 1. 2. 7.
2. कठ. 1. 2. 22.
3. बृ. 4. 4. 21.
4. कठ. 2. 6. 17.
5. सू. भा. 4. 1. 1.

मिष्टमेव" इति । नियमादृष्टस्य च विधिसाध्यस्य यावदपेक्षा न तावद्विधिव्यापारविरम इति न श्रवणविधौ कलंकलवस्याप्यवकाशः । "इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः[1]" इत्यधिकारिशरीरे ज्ञानार्थं उद्योजयन्ती भगवती श्रुतिः तदुपायश्रवणविधिसत्त्वमाक्षिपत्येव, न विरोधगन्धमावहति । अतः "आत्मा द्रष्टव्यः" इति फलमुद्दिश्य "श्रोतव्यः" इत्यादीनि विधानानि तदुपायभूतश्रवणादिविषयाणि युक्ततराणि । न च वाच्यम्—विशुद्धबुद्धेरेव फलपर्यन्तप्रवृत्तिमूलसाधनवतो ब्रह्ममीमांसायामधिकारादृष्टो[दृष्टो]पयोगाभावेन न नियमविधिः इति । यतः कश्चिदधिकारिविशेषणमनुवेक्ष्यमाण एव स्यात् ब्रह्ममीमांसाप्रविष्टोऽप्यदृष्टसहायः क्रमेण फलभाक् भवति, यथा खलु सहस्राक्षः । तथा च श्रुतिः :—"एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास[2]" इति । आग्नेयादिवदपूर्वार्थत्वेन प्रधानकर्मत्वाभावेऽपि साक्षात्कार उपयोक्ष्यमाणकर्तृसंस्कारार्थत्वेनास्य गुणकर्मत्वम् ; अपरथा आश्रमकर्मविधानमप्यनपेक्षितं स्यात् ।

अथ तत् प्रत्यहमुपात्तदुरितक्षयार्थमेव, न विद्याङ्गम्, आचार्योपसनादेश्च दृष्टयथावदुपदेशादिप्रयोजनतैव । यज्ञादीनां च जन्मान्तरीयाणां वा पूर्वाश्रमानुष्ठितानां वा विविदिषां तदुपलक्षितज्ञानं प्रति वा उपकारकत्वं श्रवणादिप्रवृत्तिजनकत्वेन, न तु प्रवृत्तस्यादृष्टोपयोगे मानम् । इन्द्राद्याख्यायिकाया विद्यावतारोपायमात्रत्वाच्च । तव्यप्रत्ययस्यार्हार्थत्वेनाऽप्युपपत्तेश्च, द्रष्टव्य इति दर्शने तात्पर्यकरणवत् श्रवणेऽपि तदर्थमर्हत्वप्रकाशनोपपत्तेः, ज्ञानप्रकरणे क्रियाविधानानुपपत्तेश्च । गान्धर्वशास्त्रोपासनाधेयवासनायाः षड्जादिसाक्षात्कारे[इव] श्रवणाद्यावृत्तिजन्यवासनाया वैधापूर्वनिरपेक्षाया ब्रह्मैक्यसाक्षात्कारे हेतुत्वोपपत्तेश्च न जन्मान्तरीयश्रवणादेर्वामदेवादौ फलदर्शनं विधिं गमयति । अधर्मफलवद्वैधत्वाभावेऽपि सम्भवात् शिल्पादिवच्च । अतो नियमविधिरप्यनुपपन्नः ।

नैवमुचितम् ; कोऽभिप्रायः ? किं कर्मणां शुद्धिद्वारेण बुद्धेः प्रत्यक्प्रवणतापादमात्रफलत्वात् तद्वतो ब्रह्ममीमांसाधिकारादृष्टनिरपेक्षता, किं वा नित्यादिकर्मणां निष्फलत्वान्मुमुक्षोः काम्यकर्मानुष्ठानाभावाच्च नादृष्टमेव विद्याफलं समस्ति इति ? तत्रात्यन्तिकप्रत्यक्प्रवणतायाः कर्मणैवोत्पत्तौ श्रवणमात्रेण विद्योत्पत्तेर्मननादिविधानवैयर्थ्यप्रसङ्गः ।

---

1. केन. 2. 5.
2. छा. 8. 11. 3.

दृष्टफलमपि मर्दनादिकर्म ज्वरादिजनकपाप्मनः फलाभिभवेन तदभिभवकारणं यथा तथेदमपि प्रत्यक्प्रवणतातिशयविघातकासंभावनाद्यभिभावनेन तद्धेतुकषायाभिभावकम् यद्यप्यदृष्टोत्पादमन्तरेणापि, तथाऽपि ज्ञानार्थानेकजन्मसरणा[नन्तर्येण]न्यन्तरेण विरोधिक्षयोपयुक्तादृष्टोत्पादकत्वेनोपकारकं इत्यध्यवसायात् । कल्मषाणां विचित्रत्वादनेकविघ्ननिवर्तकविधानमभिप्रेत्यैव "सर्वापेक्षा च[1]" इत्याह स्म सूत्रकारः । अवघातस्येव तण्डुलनिष्पत्तौ नियमादृष्टनिरपेक्षस्यापि साक्षात्कारे श्रवणस्य फलान्तरार्थं नियमापूर्वसंभवाच्च । उपात्तदुरितक्षयस्यापि 'धर्मेण पापमपनुदति' इति श्रुतेरदृष्टसाध्यत्वावधारणात् ।

"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् [2]"

इति श्रुतेरुपात्तदुरितस्यापि विद्योदयविघातकत्वाच्च । तेनादृष्टद्वारेणापि श्रवणादेरुपकारकत्वं न विरुध्यते । नित्यादिकर्मणोऽपि सर्वथा विफलत्वे, तदकरणे दण्डे च, वेदस्य कथं प्रयोजनपर्यन्ते तात्पर्यं निर्णीयेत । न च "नियोगसिद्धेः किमन्यत्प्रयोजनं सर्वविधीनाम्" इति गुरूक्तिर्वेदवचनम्, येन नित्यादिनियोगसिद्धिरेव पुरुषार्थः स्यात् ।

वेदवचनमपि युक्तमेव गृह्यते, यथाहि—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्[3]" इत्यत्र दहराकाशान्तस्समाहितस्य "उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते" इति श्रुत्युक्तस्य श्रुत्युक्तमन्वेष्टव्यत्वं हित्वा "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्याकाशस्योत्तरत्र प्रतिपादनानुपपत्त्या स एव दहराकाशः सहान्तस्समाहितेन पृथिव्यादिना अन्वेष्टव्यत्वेन स्वीकृतः । सुखादिवन्नियोगस्यार्थ्यमानत्वादर्शनाच्च । न च फलवत्त्वे नित्यकाम्यविभागविलोपः; यत्र नित्यं जीवनादि निमित्तं प्रवृत्तम्, तन्नित्यम्; यत्र चानित्यं गृहदाहादि तन्नैमित्तिकम् । यद्वा यत्र फलं न श्रूयते, दण्डश्चाकरणे तत्फलवदपि नित्यादि; तद्विपरीतं काम्यम् इति विभागसंभवात् । "यद्रात्र्या पापमकार्षम्[4]" इत्यादौ यत्र स्वशब्देनैव दुरितक्षपणे विनियोगः तत्र तत्फलत्वेऽपि यत्र केवलं विधानं तत्र ईश्वरार्पणेन विशिष्ट-

1. ब्र. सू. 3. 4.
2. कठ. 1. 2. 23.
3. छा. 8. 1. 1.
4. तै. आ. 10. 32.

विद्याफलत्वोपपत्तेः ; दुरितक्षयस्य च करणमात्रेण सिद्धेर्विशिष्टकरणस्य फलान्तरस्यावश्यंभावित्वात् ससाधनविद्योदयप्रतिबन्धकदुरितक्षयफलत्वेऽपि नास्माकं क्षतिः ।

अस्तु नित्यानां फलान्तराभावः ।

" नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत् ॥ "

इति **स्मृतेश्च** । आख्यायिकायामपि ज्ञानवत्तदङ्गस्यापि विध्यपह्नवायोगाच्च । अगतिका गतिश्चार्हार्थता । अवान्तरवाक्यस्य महावाक्यान्वयायोग्यत्वे प्रकरणादुद्धारेण विधायकत्वदर्शनाच्च । " यथा ह्याचाराधिकरणे परक्रतुप्रकरणाम्नाताः केनचिन्निमित्तेनोत्कृष्यमाणाः पुरुषधर्मतां भजन्ते यथा ' मलवद्वाससा न संवदेत ' 'तस्मान्न ब्राह्मणायापगुरेत् ' इत्येवमादयः " इत्याचार्यैरभिधानात् ; पदैकवाक्यत्वे हि वाक्यभेदो दोषाय । यथा " ब्राह्मणो न हन्तव्यः " इत्यत्र " ब्राह्मणो हन्तव्य " इति वाक्यभेदे, यथा च क्रियाप्रकरणे सिद्धं तदुपकार्युपदिश्यते तथा सिद्धप्रकरणे तज्ज्ञानोपकार्यङ्गविधानं, श्रुत्यर्थस्याप्यात्मैक्यस्यानुभवपर्यन्तबोधनिर्वाह्यत्वात् । तदाहुः—

" आपाततो यदिदमद्वयवादिनीना-
मद्वैतमाकलितमर्थतया श्रुतीनाम् ।
तत्त्वप्रकाशपरमार्थचिदेव भूत्वा
निष्पीडितादहह निर्वहते विचारात् " ॥

इति । न च " आत्मा श्रोतव्यः " इत्यत्र विरुद्धत्रिकद्वयप्रसङ्गो दोषः । यथा वा " स्वाराज्यकामो वाजपेयेन यजेत " इत्येतत्प्रतीतयागस्य वाजपेयगुणयोगविधौ उद्देश्यत्वानुवाद्यत्वप्रधानत्वानि, फलयोगविधौ चोपादेयत्वविधेयत्वशेषत्वानि इति विरुद्धत्रिकद्वयप्रसङ्गो दोषः । साक्षात्कारफलाय श्रवणविधौ स्वप्रधानसाक्षात्कारविशेषणस्य ब्रह्मणोऽपि स्वप्रधानत्वात् गुणत्वप्रधानत्वविरुद्धद्वययोगभावात् । ज्ञानविधौ तु स्यादेव ब्रह्मणः प्रमेयत्वेन प्रधानत्वापूर्वत्वप्रतिपाद्यत्वानि ; तदुद्देशेन ज्ञानविधौ तस्य गुणत्वसिद्धत्वानुवाद्यत्वानि प्रसज्येरन् ; तद्वाक्येनैवावगतस्योद्देश्यत्वात् अवान्तरवाक्यविज्ञातः आत्मोद्देश्यश्चेत्, तर्हि ज्ञातत्वादेव व्यर्थो विधिः । तस्यापि च विधिशेषत्वेनार्थवादत्वान्न प्रमापकत्वम् ।

योऽप्यग्न्यादिवत् समारोपितेनाप्यद्वयानन्दादिरूपेण ज्ञानविधानसंभवान्नात्मज्ञान-नियोगान्यथानुपपत्त्यापि चात्मतत्त्वप्रमा । ततो न तस्योद्देश्यत्वम् । "विज्ञाय प्रज्ञां कुर्वीत" इत्यत्रापि विज्ञानप्रज्ञयोरविशेषे न विध्यवकाशः । विशेषश्चेत्, तथापि विधि-[दु]श्शकः शब्दस्यैवापरोक्षज्ञानजनकत्वात्; तत्र यज्ञादीनां कल्मषक्षयः शमादीनां च विपरीतप्रवृत्तिदोषनिरोधः साध्यः, मननस्य च प्रमेयादिसम्भावना गुणः; निदिध्यासनस्य च सूक्ष्मतरब्रह्मात्मत्वविषयैकाग्रता चित्तस्य इति तदवधानतासम्पत्तौ शब्दस्साक्षात्कार-ज्ञानकारणं चक्षुरिव मुमुक्षूणां सम्पद्यते ।

"दृश्यते त्वग्रयया बुद्धया" इति तुशब्देन शाब्दीं बुद्धिं व्यावर्त्य अग्रभव-प्रत्यक्षबुद्धिविषयता श्रुत्यैवोक्ता इत्यपि न मन्तव्यम् । तत्रैव "सूक्ष्मया" इति केवल-विषयतया श्रेष्ठलाक्षणिकबुद्धेरध्यवसायात् । शब्दाद्विना च परश्शतान्यपि प्रसङ्ख्यानान्य-भ्यस्य नैकाग्र्यमेव चित्तस्य लभते । तत्र पुनश्शब्दापेक्षा स्वानुभवारूढा । तदाहुः—

"अभ्यासोपचयाद्बुद्धेर्यत्स्यादैकाग्र्यमेव तत् ।" इति, न तु

"शब्दयुक्तिप्रसङ्ख्यानैरात्मना च मुमुक्षवः ।
पश्यन्ति मुक्तमात्मानं प्रमाणेन चतुष्पदा ॥"

इति शब्दोऽप्यभ्यनुज्ञायते । न हि स एवेतरोपकृतस्साक्षात्कारकरणम्, तस्यासत्यप्यर्थे ज्ञानहेतुत्वस्य क्लृप्तत्वात् ।

अथ मनस एव सोपाधिकात्मन्यहंप्रत्ययरूपसाक्षात्कारकरणतया क्लृप्तशक्तेः शास्त्रयुक्त्यभ्यासवासितस्य जीवयाथात्म्यब्रह्मसाक्षात्कारकरणत्वं, प्रत्यक्षस्यैव साक्षात्कार-करणत्वात् संस्कारसहकृतस्यापि चक्षुषः साक्षात्कार एव प्रत्यभिज्ञाफलम् । योगिमनसश्च धर्मविशेषोपकृतस्य सम्बन्धमन्तरेणापि ग्राहकस्य सर्वार्थसाक्षात्कार एव कार्यम् । एवम् "अहं ब्रह्मास्मि" इत्यादिशब्दस्य पदार्थविवेकादिसहकृतस्यापि परोक्षज्ञानमेव साध्यं युक्तम् । करणप्रयुक्त एव ज्ञानकार्यभेदः । सहकारिभेदमात्रेण ज्ञानजातिभेदे संस्कारसहकारिस्थले स्मृतिजातीयमेव ज्ञानमुत्पद्येत । इष्यते च गान्धर्वरत्नपरीक्षादि-शास्त्राभ्याससचिवेन्द्रियस्य षड्जादिविविक्तरूपसाक्षात्कारकरणत्वम् । न चैतावता गान्धर्वादिशास्त्रस्याप्रामाण्यमिष्टम् । एवं ब्रह्मशास्त्रस्य परोक्षज्ञानसंस्कारद्वारेणान्तःकरणोप-

कारिणः प्रामाण्यमेष्टव्यम् । "अहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः"[1] इति स्वप्नावस्थायां ब्रह्मात्मज्ञानस्येश्वरमायावृत्तिज्ञानस्य च प्रामाण्यम् । दृष्टादिविषयस्य बाधाभावादेव प्रामाण्यस्य च करणविशेषजन्यत्वेन स्वीकाराच्च ।

अत्र वदामः—यद्यपि परोक्षतत्ताया अपरोक्षप्रतिभासवत् अपरोक्षस्यापि ब्रह्मणः शाब्दः परोक्षप्रतिभासो न विरुध्यते, तथापि यथा 'चाक्षुषं रूपम्' इत्युक्ते न रूपे करणान्तरसञ्चारः, एवम् औपनिषदः पुरुषः" इत्युक्तेऽपि न पुरुषे करणान्तरसञ्चारो युक्तः ।

ननु चक्षुर्व्यापारमन्तरेण न रूपं केनापि रूपेण स्फुरति इति युक्तः तत्र करणान्तरासञ्चारः ; पुरुषः पुनरुपनिषद्व्यापारमन्तरेणापि सोपाधिकरूपेण स्फुरत्येव मनोव्यापारेण इति वैषम्यम् ; नैवं, रूपस्य करणान्तरसाध्यसाक्षात्कारप्रमागोचरत्ववत् पुरुषस्यापि करणान्तरसाध्यसाक्षाक्षात्कारप्रमागोचरत्वेन साम्यात् । श्रोत्रादेस्तु स्वरादिसामान्यप्रमाजनकत्वक्लृप्तेश्शास्त्राभ्यासवासितस्य तद्विशेषप्रमाजनकत्वं युक्तम् ; मनसः पुनः पुरुषस्य नैवं वास्तवरूपप्रमाहेतुत्वं केवलप्रमातृत्वादिभ्रान्तिकरणस्य क्लृप्तम् । न च तत्प्रमाकरणस्यैव तद्भ्रमकरणत्वम् इति, हेत्वाभासस्य साध्यप्रमाकरणत्वाभावेऽपि तद्भ्रमकारणत्वात् । "मनसैवानुद्रष्टव्यम्" इति करणश्रुत्या तुश्रुत्या चोपहितानुपहितब्रह्मज्ञानकरणत्वमवधार्यते मनस इति चेत्, "नावेदविन्मनुते" इति वेदस्यापि करणत्वावगमात् नावधारणसम्भवः । न चात्र करणश्रुत्यभावात् "यद्वाचानभ्युदितम्" इति निषेधाच्च न वेदस्य करणत्वम् ; तस्य प्रमाकरणत्वाभावे मीमांसातर्कस्य तदनुग्राहकतयानवतारप्रसङ्गात् ; परोक्षप्रमाकरणत्वस्य स्वयमिष्टेश्च, "यन्मनसा न मनुते" इति मनसोऽपि निषेधाच्च । न च अनयोः चक्षुः स्पर्शनयोरिव द्रव्यसाधारण्यम्, तथापि वेदनिरपेक्षस्यापि मनसः स्पर्शनस्येव चक्षुर्निरपेक्षस्य स्वविषयप्रमाजनकत्वप्रसङ्गात् । न च द्वयोरेकप्रमाकरणत्वम्, प्रमाकरणानां सम्भूयकारित्वस्यानिष्टत्वात् । अतोन्यतरस्य [वेदस्य] करणत्वे किं मनसो वास्तवप्रमास्वरूपेण कल्पनीया । वेदात्तु क्लृप्ता सा तस्यानपेक्षत्वधर्ममात्रं कल्पनीयम् ; ऐन्द्रियकज्ञानस्य कर्मजन्यत्वात्, ब्रह्मणश्च तदयोगात् ।

---

1. बृ. 4. 3. 20.

उपोपसर्गस्य सङ्कोचकाभावे निरुपचरितसामीप्यप्रत्यगात्मतया सर्वस्य पर्यवसानात् निश्चयार्थस्य निश्चयस्याद्वैतनिश्चये वृत्तेः ; तेनाद्वैतात्मनिश्चयेन मायाया अवसादनात् उपनिषत् अद्वैतात्मविद्या ; तद्धेतुत्वात् ग्रन्थोऽप्युपनिषत् । सदेरुपनिपूर्वस्य क्विपि च **उपनिषत्**पदम् इति निरुक्तिरपि शब्दकरणत्वं साक्षात्कारस्य गमयति । यद्यपि प्रमाण-पर्यन्तावृत्तिषु अहंग्रहोपासनेषु भावनायाः करणत्वं कृतम् ; तत्र हि देहपातोत्तर-कालत्वात् सकृत् साक्षात्कारं सम्पाद्योपरमेत धर्मवदन्त्यकाले यदाकदाचिदनुष्ठानेपि स्वफलभूतदेवादिभावसाक्षात्कारप्रापकत्वोत्सर्गेऽपि विरुद्धफलकर्मोद्भवेनापवादसम्भवात् । सततमनुवर्तमानसाक्षात्कारे तदनुद्भवादन्त्यसाक्षात्कारेण[1] साधकदेहसमनन्तरमुपासनफल-प्राप्तिनियमालाभादा प्रायणमावृत्तिः इति स्थितम् **आप्रायणात्**[2] इत्यधिकरणे ; तथापि न साक्षात्कारः प्रमा न चाबाध्यजन्यानुभवत्वेन प्रमात्वम् , अबाध्यत्वस्य वेदसंवादाधीनत्वेन तज्जन्यस्यैवोचितत्वात् । श्रवणाद्यावृत्तिफलभूतस्तु सकृदुत्पन्न एव निरस्तज्ञेयाभिव्यक्तिमाया-तमोनिवृत्तिफलकत्वात् आप्रायणमावृत्त्यनाक्षेपको ब्रह्मात्मत्वसाक्षात्कारः प्रमा । तेन प्रमा-करणवेदान्तवाक्यमपेक्षत एव । धर्मादिज्ञानाभ्यासस्यापरोक्षज्ञानकरणत्वाभावेऽपि गरुडादि-गोचरस्य तत्कारणत्ववच्छब्दस्यापरोक्षज्ञानकरणत्वोपपत्तेश्च । अत एव विवेकं कारयित्वा-ऽपि भूयो भूयः "तत्त्वमसि" इत्युपदिष्टम् । मनसो भावनाया वा करणत्वे साक्षात्कार-रूपैव भवितुं युक्तेति व्यर्थमावृत्तिगुणकश्रवणादिविधानमिति । परोक्षवाक्यार्थप्रमायामपि सकृ-च्छ्रवणस्याकिञ्चित्करत्वात् 'ईषत् श्रुतम्' 'सामि श्रुतम्' 'सम्यक् श्रुत्वावगच्छति' इति **आचार्यै**रभिधानात् । अत्र चात्यन्तदुर्ग्रहपदार्थत्वात्—

"अनादिकालमभ्यस्तं देहात्मत्वादिकं त्यजेत् ।
यावद्विलक्षणात्मानं तद्बन्धैवावबुद्ध्यते ।

विनाऽऽवृत्तिं तदाभासि करणं दुर्घटं यतः ।
आवृत्तिगुणकं तेन श्रवणादि विधीयते ॥

वेदावादिबलिध्वंसि तस्मादुदयमागता ।
सदा सुमनसां सेव्या ब्रह्मविद्यातरङ्गिणी ॥"

---

1. असाधक
2. ब्र. सू. 4. 1. 12.

लक्षणापि प्रस्फुटवाच्यलक्ष्यपदार्थाभिज्ञस्यैव स्वफलाय कल्पते । अतः सुसंस्कृतचक्षुष इव सूक्ष्मार्थसाक्षात्कारकरणत्वं मनोऽवधानविशेषापेक्षया वेदस्यापि विशिष्टमनस्सहकार्यपेक्षयैव इति श्लिष्यते ।

" कूलमालाद्युपादानतमोबाधस्तु बोधतः ।
तत्त्वमस्यादिवाक्योत्थात्पूर्णैकात्म्यस्वलक्षणात्[1] ॥
सर्वोऽयं महिमा ज्ञेयो........वाक्यस्यैव ॥ "

इति च **सुरेश्वराचार्य**वचनाच्च, **पदार्थपरिशुद्धौ** परोक्षज्ञानसंवाददर्शनाच्च **भाष्यका**रीयमनःकरणत्ववचनस्य परमतेनैव परस्य विरोधापादनपरत्वाच्च । अतः प्रसङ्ख्यानस्य मनसो वा तत्परिपाकवतः साक्षात्कारकरणत्वं श्रुतिस्मृतिब्रह्मविन्मतविरुद्धमुपेक्षणीयमेव ।

ज्ञानस्य च प्रमाणवस्तुमात्रतन्त्रस्य कर्मविलक्षणस्य विध्यसंभवात् तत्फलकं श्रवणमेव मनननिदिध्यासनफलोपकार्यङ्गविशिष्टं क्रियारूपं विधेयम् । तत्र स्वप्रधानज्ञानविशेषणं ब्रह्मापि स्वप्रधानमेव इति न ज्ञानविधाविव गुणप्रधानभावविरोधः । न च ज्ञानमपि गुणः कर्मणः ; " ऐन्द्या गार्हपत्यमुपतिष्ठते " इति तृतीयाश्रुत्या यथा " कदाचनस्तरीरसि " इति मन्त्रस्य गार्हपत्योपस्थाने विनियोगः, तथा निरपेक्षैकपदलक्षणायाः श्रुतेस्तत्राभावात् । ' यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति " इति च श्रुतेः ' ओमित्येतदक्षरमुद्गीथमुपासीत " इति प्रकृतोद्गीथविद्या विद्याभासः क्रियैव, पुरुषेच्छानुविधायिन्यवगम्यते । नापि " बर्हिर्देवसदनं दामि " इति यथाश्रुतसामर्थ्यलक्षणं लिङ्गं तत्र विनियोजकम्, तथाऽत्रास्ति । न च **जनकादीनां** गृहस्थानां ज्ञानश्रवणं लिङ्गम् । " एतद्ध स वैतत् पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे " इति ज्ञानिनः कर्मत्यागस्यापि श्रवणात् । नियताङ्गत्वे च तदनुपपत्तेः । कर्तृत्वादिप्रपञ्चशून्यात्मज्ञानस्य विरोधित्वादनियताङ्गत्वस्याप्ययोगात् । नापि " यस्य पर्णमयी जुहूः " इतिवद्वाक्यमनेकपदसामर्थ्यमेकमिहास्ति ।

अत्र हि " जुह्वा जुहोति " इति होमसाधनत्वेन विहिताया जुह्वाः प्रकृतिद्रव्याकाङ्क्षायां जुहूशब्देनाभिधानात् पर्णतायाश्च द्रव्यत्वेनापूर्वसाधनार्थं यागसम्बन्धमपेक्षमाणाया अव्यभिचरितक्रतुसंबन्धजुहूद्वारेण वाक्यप्रमाणाद्यागे विनियोगः । अत्र यद्यप्यात्मज्ञानस्य प्रमात्रपेक्षस्य कर्त्रात्मसंबन्धोऽस्ति, तथाप्यस्य लौकिकेष्वपि कर्मसु कर्तृत्वान्नाव्यभिचरितः क्रतुसम्बन्धोऽस्ति, येनैतद्द्वारेण ज्ञानस्यापि स्यात् । यद्यपि स्वर्गादि-

फलस्य कर्मणो देहव्यतिरिक्तात्मज्ञानेन व्याप्तिः, अथापि नासंसारिब्रह्मात्मज्ञानस्य । नापि वाक्यद्वयसामर्थ्यमारभ्याधीतविषयम् "व्रीहीन् प्रोक्षति" इतिवत् प्रकरणम्; तत्र दर्शपूर्णमासशेषस्य "चतुरो मुष्टीन्निर्वपति" इति गृहीतस्य व्रीहिसमुदायस्य प्रकरणप्रमाणात् व्रीहीन् इति शब्दो वाचकतया निर्णीतो व्रीहिमात्रप्रोक्षणस्यानर्थक्यात्, अशक्यत्वाच्च । अत्र च "एष पन्था एतत्कर्मैतद्ब्रह्म" इति पृथक् प्रक्रमात् ।

स्थानसमाख्ययोरप्येवमूह्यम् । यथाक्रमपठितानां यथाक्रमपठितैः सम्बन्धः स्थानम् । संज्ञासाम्यं समाख्या; तदप्यदो विनियोगे न शक्तम्, तथा पाठाद्यभावात् । ततस्स्वतन्त्रफलत्वसिद्धौ "ब्रह्म वेद ब्रह्मैव भवति" "न च पुनरावर्तते" इति च वर्तमानापदेशेऽपि रात्रिसत्रन्यायेन ब्रह्मभवनकामोऽपुनरावृत्तिकाम इति विपरिणामेन स्वतन्त्राधिकारः लभ्यते; पुनरावृत्तिहेत्वविद्याया विद्यया निवृत्तावपुनरावृत्तिस्सिद्धैव स्तुत्यै अनूद्यते वेदनेन तदापि न फलाभावो धियः ।

> "आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न तु चोदितम् ।
> कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते ॥
> विज्ञाते चास्य पारार्थ्येऽपापिनामफलश्रुतिः ।
> स्वार्थवादी भवेदेव न स्वर्गादेः फलान्तरम् ॥"

इत्यपास्तं च भवति । अर्थवादत्वेऽपि भूतार्थवादत्वम् अनुवादत्वम् वा न गुणवादत्वम् । न च यथा दर्शपूर्णमासाधिकृतस्य "गोदोहनेन पशुकामस्य प्रणयेत्" इत्यत्र कर्मान्तरेऽधिकारः, तथा कर्माधिकृतस्यैव ब्रह्मज्ञानेऽधिकारः; कर्मानधिकृतस्यापि; देवादेर्ज्ञानाधिकारस्य वक्ष्यमाणत्वात् । परिव्राजकस्यानारब्धकर्मणोऽपि ।

अत एव न कर्मब्रह्मविचारयोः क्रमनियमः, बहूनामेककर्तृत्वे हि कर्तुरैक्येन युगपदनुष्ठानायोगात् क्रमाकाङ्क्षा स्यात् । अत्र तु भिन्नफलत्वात् अङ्गाङ्गिभावे प्रमाणाभावाच्च नैककर्तृकत्वम्, येन क्रमोऽपेक्ष्येत । "श्रुत्यर्थपठनस्थानमुख्यप्रावृत्तिकाः क्रमा" इत्युक्तत्वाच्च । न च अत्र "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इति क्त्वाश्रुतिवत् क्रमश्रुतिः । "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" इत्यादिकं त्वसञ्जातविवेकवैराग्यस्य मोक्षोपलक्षिततत्फलकसन्न्यासनिषेधकम् । "अग्निहोत्रं जुहोति" "यवागूं पचति" इत्यत्र यवागूसाध्यत्वात् अग्निहोत्रस्यार्थात् तत्पाकः

प्रथमं यथा, तथाऽत्र पूर्वतन्त्रन्यायसाध्यत्वाभावान्नार्थोऽपि क्रमः। नच प्रयाजादिवत् क्रमः, विरक्तस्योपनिषत्पाठमात्रेणापि "किमर्था वयमध्येष्यामहे" इति श्रुतेरत्राधिकारात्। तद्वदेकफलवदुपकारत्वप्रयुक्तक्रमाकांक्षाया अभावे विशेषक्रमनियामकपाठक्रमस्यात्राप्रमाणत्वाच्च। सवनीयस्थाने पश्वालम्भश्रवणात् सवनीयपशोर्यथा पूर्वमालम्भः तथात्र स्थानक्रमोऽपि नोपलक्ष्यते। ज्योतिष्टोमविकृतौ साद्यस्क्रेऽतिदिष्टेष्वग्नीषोमीयसवनीयानूबन्ध्येषु सह पशूनालभत इतिवत् सहत्वप्रापकाभावात्। नापि मुख्ययागक्रमेणाव्यवधानायाङ्गक्रमवदत्र क्रमः, अङ्गत्वाभावादेव। नापि वाजपेयाङ्गप्राजापत्यपशुषु अतिदिष्टप्रोक्षणादेर्यमारभ्यैकप्रवृत्तिः तमारभ्यैव धर्मान्तरप्रवृत्तिवदत्र प्रवृत्तिक्रमः। अत एव तस्माद्ब्रह्मविचारविधिः स्वतन्त्रफलाधिकारिप्रवृत्तिः सिद्धब्रह्मविचारविषयः सिद्धधर्मविषयविचारनिरपेक्ष इति पुष्कलम्।

अथ कथमात्मज्ञानस्य मोक्षःफलम् यावता तस्य संसारसहभावो लक्ष्यते? लिङ्गलिङ्गिसम्बन्धस्मृत्यनपेक्षं विषयस्वभावभेदानुविधायि "अहम्" इति विज्ञानमात्मनि रूपादिविज्ञानवत् प्रत्यक्षम्; न च रूपादिस्कन्धगोचरमेतत् प्रतिषिद्धत्वात्; प्रतिषिद्धो ह्यहङ्कारो रूपादिषु "रूपं नाहं" एवमेतत् भिक्षारूपं "तत्त्वमसि" इति। न च "अहं रूपम्" "अहं वेदादयः" इति कदाचिदपि रूपादिष्वहङ्कारो दृश्यते।

ननु भवति 'अहं गौरः' 'अहं कृष्ण' इति; न भवति इति ब्रूमः; न ह्यस्य द्रष्टुः "यदेतन्मम रूपं गौरमेतदहम्" इति प्रत्ययो भवति। केवलं तु मतुब्लोपं कृत्वा षष्ठ्यर्थनिर्देशोऽयम् उपकारकत्वात् 'योऽयं सोऽहम्' इतिवत्। अतः प्रत्यक्षेण व्यतिरिक्त एव देहादिभ्य आत्मा स्फुरति इति **उद्योतकराचार्याः**[1]। तथा **न्यायसूत्रकारोऽपि**—व्यतिरिक्तश्चेदात्मा अहंप्रत्यक्षसिद्धो न ब्रह्मवधादिपातकं इत्याशङ्क्य समादधे, **'न कार्याश्रयकर्तृवधात्'**[2] इति। अयमर्थः :—न ब्रूमो नित्यस्यात्मनो वधाद्धिंसा; किन्तु कार्यं सुखादिवेदनम्, तदाश्रयस्य शरीरस्य स्वविषयोपलब्धेः कर्तॄणामिन्द्रियाणां च वधादुच्छेदाद्वैकस्याद्धिंसोपचार इति। तस्मात् 'अहम्' इति प्रत्यक्षेण व्यतिरिक्तात्मनि स्फुरत्यपि संसारोऽयमनुवर्तमानो नात्मज्ञानोच्छेद्यः।

अत्रोत्तरम्—'सिंहो देवदत्तः' इतिवत् नायं गौणः प्रत्ययः, येन व्यतिरेकस्फुरणं स्यात्; किन्त्वध्यासोऽयमनाहार्यारोपरूपः प्रसिद्धः 'स्थाणौ पुमान्' इति यथा,

---

1. न्या. वा. 2. न्या. सू.

दारुवह्निवत् अहंज्ञात्रोस्तादात्म्यात् 'इदं रजतम्' इतिवत् द्व्याकारत्वसंभवात् 'अहम्' इत्यध्याससम्भवाच्च । यथा हि 'मम भृत्य' इति निरूढाभिमाने सति कारणविशेषात् 'अयमहमस्मि' इत्युपचारादागन्तुरभिमानो, न तथात्र ; किन्त्वसत्येव निसर्गतो देहादि-व्यतिरेकवत्यात्मनि 'अहम्' इत्यभिमाने भृत्यादिविश्लेषितस्य तदागमायोद्यमवत् अत्रो-द्यमस्यापि विश्लेषितस्यासम्प्रतिपत्तेः स्वस्वामिसम्बन्धोऽप्यसम्भाव्यः । स्वकर्मोपार्जितत्वा-विशेषाच्च स्वेनेव भृत्यादिदेहेनापि व्यवहारः प्रसज्येत । न च अविद्यापक्षेऽप्येतत्तुल्यं न स्यात् । अन्यस्मिन्नन्यात्मनावभासकौशलस्य प्रसिद्धतरत्वात् स्थाण्वादौ । न च "पुण्यो वै पुण्येन कर्मणा" "रमणीयचरणा रमणीयां योनिम्" इत्याद्याम्नायात् कर्मैवात्र हेतुः । "नीहारेण प्रावृताः" इत्यादिब्रह्मागमानुगुण्येन पूर्वव्यवस्थापनात् । युक्तिबलात् गौणत्वे स्थाणौ पुंप्रत्ययोऽपि गौणस्स्यात् ।

अथ तत्र बाधान्मिथ्यात्वम्, नेह बाधोऽस्ति ; तथा सति स्थाणौ पुंवद्विवेक-प्रत्यये देहप्रविलयः स्यात् । अथ परोक्षप्रत्ययत्वादपरोक्षभ्रमाबाधः, तन्न ; ब्रह्मतत्त्वं साक्षात्कुर्वतोऽपि जीवन्मुक्तस्य देहानुवृत्तेरिष्टत्वात्, अबाध्यत्वनिश्चयात् । न च स्वप्नस्या-प्यवश्यं जाग्रद्बोधेन बाधः, स्वप्नानन्तरं सम्प्रसादस्यापि दर्शनात् संप्रसादोच्छेदेन तस्यैव जागराद्युपादानत्वेन जागरणमेव मोक्षः प्रसज्येत । अतः स्वप्नदृष्टान्तेनान्त्यप्रत्ययेन विदुषो देहबाधो दुर्निरूपः । तस्मादबाध्यत्वाद्देहस्य तत्रात्मनि मुख्योऽहम्प्रत्ययो गौणः सार्षपादाविव तैलप्रत्ययः ।

अत्रोच्यते —"भूयश्चान्ते विश्वमायानिवृत्तिः[1]" [2]"यथेमा नद्यस्स्यन्दमानाः समुद्रायणास्समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते चासान्नामरूपे समुद्र इत्येवं प्रोच्यते, एवमेवास्य परिद्रष्टुरिमाष्षोडशकला भूतानि प्राण इन्द्रियन्नाम कर्म श्रद्धा लोकास्तपो मन्त्रा मनो वीर्यं शरीरं चेति पुरुषायणाः पुरुषं प्राप्याऽस्तं गच्छन्ति इत्यादिश्रुतिभिर्विदुषो देहस्यान्त्यप्रत्ययेन उच्छेदावधारणात् नामरूपे शक्त्यात्मके अपि हि भिद्येते । तथा च **पारमर्षं सूत्रम् :—"तानि परे तथाह्याह"[3]** । **अस्य च भाष्यम् :—"**तानि

---

1. श्वे. 1. 10.
2. प्र. 6. 15.
3. ब्र. सू. 4. 2. 15.

पुनः प्राणशब्दोदितानीन्द्रियाणि भूतानि च परब्रह्मविदस्तस्मिन्नेव परस्मिन्नभिप्रलीयन्ते। कस्मात्? तथाह्याह श्रुतिः—एवमेवास्य परिद्रष्टुः समन्ताद्वर्तमानब्रह्मसाक्षात्कारवत" इति। ननु—

"गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति [1]॥"

प्राणमनसोः पृथिवीमयत्वेनैकीकरणात् कलानां षोडशानामपि पञ्चदशत्वम् इति विद्वद्विषयैव परा श्रुतिः परस्मादात्मनोऽन्यत्रापि कलानां प्रलयमाह - **सत्यम्** ; सा तु व्यवहारापेक्षा, पार्थिवाद्याः कलाः पृथिव्यादीरेव स्वप्रकृतीरपियन्ति इति व्यवहारो लौकिकः; सांव्यवहारिकप्रमाणापेक्षः। इयं श्रुतिः तात्त्विकप्रमाणापेक्षा। सांव्यवहारिकप्रमाणेनानुमानेन करणानां भौतिकत्वावगमात् भूतेषु लयोऽवगतः। भूतसूक्ष्माणां च साधारणानां साधारणेषु भूतेषु, प्राणानां वायौ। इतरा त्वेवमेवास्य परिद्रष्टुः इत्यादिका विद्वत्प्रतिपत्त्यपेक्षा तात्त्विकप्रमाणापेक्षा, कृत्स्नं कलाजातं परब्रह्मविदो ब्रह्मैव सम्पद्यते तात्त्विकप्रमाणैर्वेदान्तैर्विश्वस्य ब्रह्मविवर्तताऽवगमात्। ब्रह्मणि मायायामुच्छिद्यमानायां तदुच्छेदात्मको बाध इत्यनूद्य विधेयविषयभेदात् श्रुत्योरविप्रतिपत्तिः इति **भाष्यभामती**निबन्धाभ्यामेवावधारितम्। "सा कलानां भूतेषु लयप्रतिपादिका श्रुतिः सर्वजीवसाधारणव्यवहारगोचरमहाभूतविषया, मायामयमहाभूतोपसृष्टानि जीवाविद्याकृतभूतसूक्ष्माणि लिङ्गदेहाकारेण विवर्तन्ते तत्रोपष्टम्भकभूतांशानां महाभूतेष्वेव विलयः, इतरा तु पुरुषं प्राप्यास्तं गच्छन्ति इति श्रुतिर्विद्वत्प्रतिपत्त्या, अविद्याकृतभूतसूक्ष्मसहितकरणग्रामादिदाहविषया" इति च **केचित्**।

तत्र किञ्चित्परीक्षणीयम्।

"कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च" अत्र शरीरमुद्दिश्य तावज्जीवसृष्टिः श्रूयते। तत्र येयं स्वप्नगन्धर्वनगरादिसृष्टिः जीवाविद्यानिदाना, सा चेन्न मायाकृतभूतनिदाना, तर्हि तत्त्वबोध-

---

1. मु. 3. 2. 7.

पर्यन्तमनुवर्तमानत्वाविशेषात्तद्वदेव तयैव भूतसूक्ष्मद्वारा लिङ्गारम्भोऽस्तु, किं मायामय-महाभूतोपष्टम्भेन ? अथ स्वप्नाद्यारम्भोऽपि तदुपष्टब्धैरेव, तर्हि तदुच्छेदेऽपि महाभूतांशानां तेषु विलयोऽप्रमाणसिद्ध ऊरीकार्यः स्यात् । व्यावहारिकस्थूलत्वप्रयुक्तं च स्थूलदेहादेर्जीवान्तरोपलम्भादि भाक्तम्; न तु साधारणमायाजन्यत्वकृतम्; तज्जन्यस्यापि सूक्ष्मस्य तद्दर्शनात् ।

किञ्च मायावयवानां जीवाविद्यानां नचेत् व्यावहारिकमहाभूतसंसर्गारम्भसामर्थ्यमंशतोऽपि कथमवयवसमुदायात्मकमायायास्तदारम्भकत्वम् ? प्रत्येकं पटैकदेशारम्भसमर्थानामेव तन्तूनां समुदितानां पटारम्भकत्वात् । न चाविद्यारब्धो मायानामकोऽवयव्यङ्गीक्रियते, येन तस्य वीर्यान्तरकल्पना स्यात् । अवयवानां मायात्वे च समुदायस्यावस्तुत्वेन मायोपाधिरीश्वरो, जीवा अविद्योपाधय इति कल्पनाया दत्तो जलाञ्जलिः । अथाविद्याविलक्षणैव माया तदाऽपि यथैवाविद्यारब्धभूतसूक्ष्माणां मायारब्धभूतोपष्टम्भादारम्भकत्वं लिङ्गदेहं प्रति तथैव जीवदृश्यब्रह्माण्डाद्यारम्भकत्वमपि कुतो न स्यात्, "यस्मिन् सर्वाणि भूतान्यात्मैवाभूत्"[1] "यत्र त्वस्य सर्वमात्मैवाभूत्"[2]इति तत्त्वबोधेन सर्वस्याविशेषेण बाधश्रवणात् ।

अथात्र मिथ्यात्वबोधनमेव बाधो, न तूच्छेदः तर्हि षोडशकलास्थोऽपि तथा स्यात्, बाधकतत्त्वबोधस्याविशेषात् । "तानि यदा कार्यकारणविषयाकारपरिणतानि भूतान्यात्मनो विशेषात्माखिलहेतुभूतानि शास्त्राचार्योपदेशेन ब्रह्मविद्यया प्रविलापितानि विनश्यन्ति, तदा खिल्यभावो नश्यति" इत्येतेभ्यो भूतेभ्यस्समुत्थाय इत्यत्र भगवत्पादोक्तेश्च । अत एव "स उच्छ्वयत्याध्मायत्याध्मातो मृतश्शेते[3]" इति विद्वद्देहस्य प्रागप्रलये व्यवस्थानश्रुतिः सर्पाध्यासोपादानाविद्यानिवृत्तौ तद्विभ्रमवासनानुवृत्तिवदन्याविद्योपादानतामप्याह । अथाऽयमशरीरोऽमृतः प्राण इति तत्रैव देहद्वयानुच्छेदश्रुतेः । न च प्रातीतिकारम्भकस्य व्यावहारिकारम्भोपष्टम्भको न्याय्यः । न हि स्वप्नपुत्रारम्भकवीर्योपष्टम्भो दृष्टचरः । अथ भूतसूक्ष्मा व्यावहारिकमेवारभन्ते, तर्हि तान्यपि व्यावहारिकाण्येव स्युः । न खलु प्रातीतिककलधौतस्य व्यावहारिकाङ्गुलीयकारम्भकत्वं कस्यापि संमतन्, प्रतिजीवं व्यावहारिकमहाभूतसर्गाङ्गीकारे च स्वोक्तिभङ्गः । तस्माज्जीवाविद्यैव

1. ई. 6.
2. बृ. 2. 4. 14.
3. बृ. 3. 2. 11

प्रातीतिकव्यावहारिकप्रपञ्चयोरारम्भिका अविद्यावत्तत्कार्यस्यापि महाभूतादेरपि सावयवत्वानवयवत्वाभ्यामनिर्वाच्यत्वात् नानेकेषां महाभूतानां समानदेशताविरोधः। आत्यन्तिकसावयवत्वे हि योगिनां भूतादुदक इवोन्मज्जनादि प्राकाम्यमिच्छानभिघातो न स्यात्। मिश्रितभूतवन्मिश्रितकार्यदेशसाधारणसम्भवाच्च उपभोगः स्वसाधारणाद्दृष्टकार्य इति पदार्थेष्वसाधारण्याव्यवहारः।

न चैवं जीवस्य स्वाविद्याविनाशेन ब्रह्मीभूतस्यापि द्वैतदर्शित्वं स्यात्, जीवाविद्याभिरेव ब्रह्मणस्सर्वदर्शित्वाभ्युपगमात्। तथा च "यत्र नान्यत्पश्यति"[1] इत्यादिविरोध इति वाच्यम्; यतो न सर्वमायातत्कार्यवैधुर्यं मोक्षः, सर्वासामपि मायानामद्वितीयचिद्विषयत्वेऽपि तत्साक्षात्कारेणैकतमनिवृत्तेरेव परेणाप्यङ्गीकारात्। "तस्या एव ब्रह्मविद्यया सर्वबाधश्रुतेरङ्गीकार्यम्" इत्येके।

"आत्मैवाभूत्"[2] इत्यवधारणात् स्वप्नस्याविद्यान्तरकार्यत्वात्तदुच्छेदेन सत्यपि सम्प्रसादाज्ञाने बाधसम्भवात्। विलीनकार्यस्याप्यज्ञानस्य तत्त्वज्ञानेन बाधस्वीकारात् जाग्रद्बोधस्य स्थाण्वादिबाधस्येव तत्त्वबोधात्प्राक्प्रमाणतया स्वविषयविपर्यासहेतुत्वविच्छेदकत्वात्। मूलाविद्यायां सत्यामपि तस्या एव संप्रसादावस्थाया जाग्रद्विवर्तदर्शनयोनित्वात्तेनाभिभवात्। तस्माद्बाध्यत्वाद्देहस्य स्थाणाविव पुंप्रत्ययः तत्राहंमतिर्मिथ्यैव, परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तत इति यत्र प्रयोक्तृप्रतिपत्त्रोः सम्प्रतिपत्तिः, स गौणः, स च भेदप्रत्ययपुरस्सर एव। न च चिदात्मा तिलजस्नेहात् सार्षपवत् देहाद्भेदेनोपलभ्यते। "प्रागनात्मैव जडं सदात्मतामेत्यविद्यया" इत्यनात्मन एवान्नस्य भुक्ततामात्रेणात्मप्रत्ययालम्बनत्वेनाध्यस्तत्वप्रतिपादनाच्च। अहंप्रत्ययस्याऽऽत्मविषयत्वं वदताऽपि तस्य देहैक्यग्राहकत्वं विभौ चिदात्मनि परिच्छिन्नत्वोपपादनाय एष्टव्यमेव। ततो जीवविशिष्टरूपेण देहस्याज्ञानात्मकत्वमेव। मुख्यात्मत्वेन गृहीतत्वे च देहस्य वधात्पातकविधावधिकारलौकिकव्यवहारौ च समञ्जसौ स्याताम्।

तदुक्तम्—"(सत्यानृते) मिथुनीकृत्य नैसर्गिकोऽयं लोकव्यवहारः[3]" इति। सत्यम् आत्मवस्त्वेव, अनृतमनिर्वाच्याऽविद्या। "ओमिति सत्यम् नेत्यनृतम्"

---

1. छा. 7. 24. 1.
2. बृ. 4. 3. 14.
3. ब्र. सू. भा. 1. 1. 1.

"तत्सर्वमोंकुर्यादतिरिच्येदात्मानं यत्सर्वं नेति ब्रूयात् पापिकास्य कीर्तिर्जायेत, तत्सत्यानृते मिथुनीकरोति तयोर्मिथुनात् प्रजायते भूयान् भवति" इति। अत्र यथा सर्वस्वदानादानयोर्दोषात्कतिपयदानादानमिथुनं व्यवहार इति निर्वाहायोक्तं श्रुतौ, तथैव स्वयमात्मनो विक्रियायां सर्वरेचनप्रसङ्गादुपाधिशबलस्यापि तदनाश्रयेण व्यवहारविलोपननिबन्धनपापकीर्तिप्रसङ्गाच्च मायात्मनोर्मिथुनात् "अहं मनुष्य" इत्यादिः लोकव्यवहारः। तदेवं युक्तिसिद्धो "अयमहम्" इत्यध्यासप्रत्ययः। अतोऽनेनात्मनो व्यतिरेकानुल्लेखात् उल्लेखेऽपि वेदान्तोदितरूपेण संसारबन्धविरोधिनाऽनुल्लेखादसौ न संसारविरोधी इति साम्प्रतमेव।

अध्यासश्च "स्मृतिरूपः परत्र पूर्वदृष्टावभास" **इत्याचार्याः**। स्मर्यत इति **स्मृतिः** स्मर्यमाणोऽर्थः। यद्यपि **स्मरणं स्मृतिः** इति धात्वर्थलक्षणभाववाचाची भावे विहितघञादिषु पठितक्तिप्रत्ययान्तश्शब्दः, तथाऽपि घञादीनां भावकर्तृव्यतिरिक्तकारकेषु, कार्यम् आध्रियतेऽनेन इत्याधार इति **स्मृतिः**, स्मर्यमाणोऽर्थः; संज्ञायामिवारूढशब्देऽपि विधानात् "**अकर्तरि च कारके संज्ञायाम्**" इति कर्मवाच्यपि। अतः स्मर्यमाणसदृशोऽन्यात्मना भासमानोऽर्थोऽध्यास इत्यर्थाध्यासलक्षणं, स्मृतिसदृशोऽन्यात्मनाऽवभासो ज्ञानाध्यास इत्यर्थविशिष्टज्ञानाध्यासपक्षे। **स्मृतिरूपशब्देन** "दोषसंस्कारेन्द्रियसम्प्रयोगाख्यकरणत्रितयमुक्तम्" इति **टीकाकारः**। अतः स्थलान्तरे दृष्टस्य स्थलान्तरे स्मृतौ प्रत्यभिज्ञायां च नातिव्याप्तिः।

ननु न सामान्यलक्षणमेतत्तावत्, मायाध्यासाव्यापनात् मायाया अनादित्वेन स्मर्यमाणसदृशत्वस्य तत्प्रकाशस्य च साक्षिणो जन्यत्वस्याभावात्। नापि कार्याध्यासलक्षणम्, अन्तःकरणाध्यासे करणसम्प्रयोगाभावादव्याप्तेः। अथ संस्कारात्मकमन्तःकरणं प्रलयादौ स्थितमारम्भकाले तदध्यासहेतुः। यदा अहङ्कारात्तत्संस्कारोद्भवः तदा प्रलयव्यवहारो, यदा संस्कारादहङ्कारोद्भवस्तदा प्रपञ्चव्यवहार इति, तर्हि संस्कारमात्रादनुभवविज्ञानं प्रावादुकसम्प्रदायविरुद्धं प्रसज्येत। सम्प्रयोगस्य चेन्द्रियव्यापारस्य तस्मिन्नसत्यसम्भवात्। एवमपि कारणत्रितयाभावादव्याप्तिस्तदवस्था।

अथ अपञ्चीकृतभूतकार्याणि सूक्ष्मशरीरावयवभूतानि चक्षुरादीनि स्थूलोपसंहारेऽपि तैजसस्य करणतया व्यापारभाञ्जि, न चेत्, अभोगसाधनत्वाद्व्यर्थारम्भाणि

प्रसज्येरन् । विश्वस्य स्थूलैरपि चरितार्थत्वात् स्वप्नेऽपि रथादिसृष्ट्याम्नानात् तेषां ग्रहण-योग्यो रूपादिमानर्थोऽस्ति । स्थूलानामेव च तेषां व्यावहारिकार्थज्ञानसाधनत्वम् उप-संहारश्रुतिश्च तद्विषया; एवं मनोऽपि सूक्ष्मरूपेण सम्प्रसादादौ वर्तमानं स्थूलाध्यास-हेतुः इति नाव्याप्तिः; नैतत्सारम्, संप्रसादादौ मनसोऽवस्थाने तस्यैवात्मोपाधित्व-सम्भवात् अतिरिक्ताविद्याप्रसाधनानवतारात् । अथ पूर्वमनभिव्यक्तं कार्यं कारणमुत्त-रत्राभिव्यक्तं कार्यव्यवहारास्पदम्, ततः कारणाविद्यारूपेण मनसोऽवस्थानान्न दोषः, मैवम्; साधारणरूपकारणस्यासाधारणरूपकार्यार्थक्रियाया मृद इव जलाहरणादेरसम्भ-वात् । अपरथा सर्गवैफल्यात् ।

यदि च स्वप्ने महाभूतक्रमेण सृष्टिः, तदा तत्राभिनवकरणसम्भवात् जाग्र-दिन्द्रियोपादानं व्यर्थम् । अपरथा[यदि]हि विषयस्यैव तत्र सर्गः, तदा सोऽप्यध्यास इति तदधिष्ठानमात्मनो नान्यत् इति सूक्ष्मेन्द्रियाणां तत्र भ्रमहेतुत्वं [1] श्रुतिप्रवादविरुद्धम् । आत्मनो मनसा सामान्यग्रहे सम्भवति रूपादिहीनस्य सूर्याद्यनुग्रहाभावे च

"अपास्ताशेषकरणादेव तस्यापि चात्मनः ।
क्रियाकारकसिद्ध्यर्थं भावनैवास्य कारणम्"

इति वार्तिकाच्च बहिरिन्द्रियगोचरत्वं दत्तस्वहस्तं स्यात् । रूपाद्युपलब्ध्या[2]ऽनुमेयजाग्रदा-दीन्द्रियव्यतिरिक्तसूक्ष्मेन्द्रियाप्रसिद्धेश्च । न च स्वप्ने जाग्रद्वदज्ञातविषयसत्त्वमस्ति; सत्त्वे वा तस्य "न तत्र रथा" इति हि श्रुतिबाधः सर्वजीवसाधारण्यं प्रतिजीवासाधारणदृष्टस्वप्नस्य स्यात् । प्राणवज्जाग्रद्देहोपयोगेऽप्यारम्भसम्भवाच्च । ततो नाव्यापनोद्धारः ।

"असन्निहितविषयत्वञ्च 'स्मृतिरूपत्वम्'; तच्चारोप्यस्याधिष्ठाने परमार्थतो-ऽसत्त्वम्, न देशान्तरादौ सत्त्वम्" इत्याचार्यान्तरम्, तत्रापि परत्र इत्यधिष्ठानो-पादानात् तद्ग्राहकं करणं वक्तव्यम् । तथा च यद्यप्यविद्याध्यासे न कारणापेक्षा, तथापि मनोऽध्यासे विशिष्टस्याधिष्ठानत्वात्, तत्र च करणाभावादव्यापनमेव; तस्मा-दलक्षणमेतत् इति ।

अत्र वदामः—"सत्यानृतसम्भेदः सामान्यलक्षणम्"; "अतस्तस्मिंस्तद्बुद्धिरूपा-वभासो"वाऽध्यासस्य तावत्, भाष्यकारैरुभयोपादानात् तत्रापि "शुक्लो घट" इत्यादावपि प्रसक्तेर्न द्वितीयं स्वीयम् ।

---

1. भ्रमहेतुत्वम्. 2. रूपाद्यनुपकृत्या.

**ननु** सम्भेदस्सम्बन्धश्चेत्, अविद्यात्मनोः सम्बन्धैस्सम्बन्धान्तराभावादव्याप्तिः, तस्याप्यनृतत्वेन सत्यात्मसम्भेदस्य वक्तव्यत्वात्; अतल्लिङ्गेऽपि तल्लिङ्गस्य "**दाराः**" "**कलत्रम्**" इत्यवभासे चातिव्याप्तिः, **मैवं वोचः**; स्वतन्त्रसम्बन्धस्य समवायस्यापि समवाय्याधारत्वेन सम्भेदवदत्राप्युपपत्तेः; तथा च सति आलम्बनमसत्यम् इति अध्यासस्वरूपं न क्वापि व्यभिचरति, लिङ्गस्य च शब्दधर्मत्वात्, अर्थधर्मत्वे पुनरेकार्थवाचकशब्दानामनेकलिङ्गत्वं न स्यात्। अतः प्रतिमादाविव शब्दादाहार्यारोप एवाऽसौ। '**स्मृतिरूप**' इत्यादिलक्षणन्तु लोकवादिसंप्रतिपन्नस्थाणुपुरुषस्वप्नादिसङ्ग्रहार्थमेव। **यद्वा—परत्र** सकलप्रपञ्चातीते निरवद्ये वस्तुनि अनादिकालं प्रत्यहमनुवर्तनात् '**स्मृतिरूपः**' **पूर्वदृष्टतुल्यावभासः** सर्वोऽप्यनात्मतत्प्रतिभासरूपोऽध्यास इत्येव विवक्षितम्। एकविज्ञानात् सर्वविज्ञानप्रतिज्ञाश्रुत्यनुरोधात्।

ननु **प्राभाकरा** मिथ्यार्थावभासमेव न मन्यन्ते कथं तेषामध्या[1]सस्संप्रतिपन्नः? ते हि ग्रहणस्मरणयोर्गृह्यमाणस्मर्यमाणयोश्च विवेकाग्रहात् भ्रान्तिव्यवहारं तन्निवृत्तेर्विवेकेन बाधव्यवहारमुपवर्णयन्ति। न च स्वरूपस्फुरणे तावन्मात्रविवेकाविवेकास्फुरणन्न युक्तम् इति वचनीयम्; आत्मनः स्वरूपस्फुरणे तावन्मात्रानन्दाद्यस्फुरणवत्सम्भवात् निरवद्यानन्दादिस्फुरणे च दुःखित्वाद्यध्यासायोगात् विद्यार्थशास्त्रवैयर्थ्यात्।

**नैतच्चारु**; विवेकनिवर्त्यस्य विवेकाग्रहणस्य प्रागभावतैव। दोष[2]साध्यत्वेन तस्य भ्रान्तिव्यवहारहेतुत्वेऽन्यदापि भ्रान्तिव्यवहारप्रसङ्गेन प्रमाणव्यवहारोच्छेदात्। गृह्यमाणादेः प्रामाणिकस्फुरणे चाविद्ययाऽपि तावन्मात्रविवेकाग्रहायोगात् कदाचिदपि विभ्रमव्यवहारो न स्यात्। भेदवदभावोऽपि स्वरूपाद्वस्तुनो नातिरिच्यते चेत्, विवेकज्ञानस्यापि प्रागभावाभावात् सर्वदा सत्त्वमसत्त्वं वा प्रसज्येत। वस्तुनश्च ज्ञानेन बाधाभावात् ततो न भ्रान्तिबाधव्यवस्था। आनन्दादयश्च भाविकरूपेण चिदभेदात्तत्प्रतिभासप्रतिभाता अपि दुःखप्रत्यनीकत्वादिरूपेणापरामृष्टाः कल्पितभेदेनाप्रतिभाता इति युज्यते, प्रमित्यभावात्। सर्वत्रैव स्मृतिप्रमोषेणैव विभ्रम इति जरतां **प्राभाकराणां** मतम्; स च दोषसाध्य इति भ्रमोपपत्तिः; प्रमोषस्मृतेस्तत्तोल्लेखप्रागभावश्चेत्, उक्तो दोषः।

अथेन्द्रियस्य विशेषग्रहणशक्तिं निरुन्धन् भ्रमं प्रवर्तयति दोषः, तर्हि निर्विकल्पकप्रत्यक्षे प्रमाणेऽपि विशेषाग्रहाद्दोषमूलत्वसम्भवेन भ्रमव्यवहारः प्रसज्येत। अस्माकं तु

---

1. अध्यासस्य प्रपन्ना.
2. प्रागभावतावादोषा,

दोषस्य भ्रान्तिप्रतिभातार्थोपादानाविद्याक्षोभकत्वमेव । समसमयमेव तदारब्धविवर्ता-च्छादितविशेषांशस्याधिष्ठानस्य सामान्यांशस्फुरणमेवेन्द्रियेण । तेन दोषस्य भ्रमप्रवर्तकत्वं युक्तम् ।

अथ अत्रापि सादृश्यादिदोषेण स्थाण्वादाविन्द्रियासंयुक्तपुरुषादिस्मरणं साध्यत इत्यस्त्येवात्र भ्रमे तदुपयोगः, तदापि बहूनां स्मरणसम्भवात् सन्देहे प्राप्ते व्यवस्थितैकत-माभासहेतुत्वमन्तरेण दोषस्य भ्रमापर्यवसानमेव । तस्मादभ्युपेयत एव ज्ञानाद्वैराग्यवादिभि-रपि विभ्रमप्रत्ययः ; विभ्रमालम्बनं च न परमार्थसद्भावात् । उच्छेदश्चेत् अधिष्ठानतत्व-बोधाद्बाधः, तर्हि मुखाद्येकत्वं निश्चिन्वतोऽपि दर्पणाद्युपाधौ सति प्रतिबिम्बभेदादेरुच्छेदो-नास्ति इति परमार्थसत्त्वम् । पारमेश्वरमायाकार्यस्य च तथात्वात्प्राप्तम् । परमार्थसत्त्वाभाव-निश्चयश्चेत् बाधः; तथाऽपि बाधकोऽधिष्ठानतत्त्वबोध एव, निरवधिकनिषेधस्यासम्भवात् । स चेद्रज्जुभुजङ्गादिभ्रमोपादाननिवर्तनद्वारेण तस्य परमार्थसत्त्वाभावनिश्चयाय तदा भ्रान्ति-दृष्टोच्छेदो दुर्वार एव । स च नास्ति मायाकार्यादौ इति न बाधात्परमार्थसत्त्वाभावः ;

**उच्यते**—लोके तावत् करिनरतुरगादिमायाया उच्छेददर्शनात् वेदेऽपि **माया**शब्द उच्छेदवृत्त्येव, रूढिपरित्यागे च "निर्मिमते विकारान्" इति "माया प्रज्ञा" इति **योगवादिनो** विनोदस्स्यात् । "यदा '**तत्त्वमसि**' इत्येवञ्जातीयके-नाभेदनिर्देशेनाभेदः प्रतिबोधितो भवति अपगतं भवति, तदा जीवस्य संसारित्वम् ब्रह्मणश्च स्रष्टृत्वम्" इति **भाष्यकारै**स्संसारसहयोगेनेश्वरोपाधिनिवृत्त्यभिधानाच्च ।

"उक्ताक्षरात्मा वष्टि **तेन** किञ्चिदवशिष्यत" ?

इति **वार्तिकाच्च** । तस्मात् "रज्जुवत् प्रतिजीवाविद्यया स्रष्टृत्वादधिष्ठानम् । प्रतिजीव-विद्यया च ब्रह्म ध्वस्तस्रष्टृत्वादिप्रपञ्चम्" इति सूक्तम् । श्रूयते "तस्याभिध्यानाद्योजना-त्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः[1] इति । अत्र हि "नेह नाना[2] इत्यादि-परोक्षबाधे प्रपञ्चे पारमार्थिकसत्त्वभ्रमोपादानं निवर्तते, ब्रह्मैकत्वसाक्षात्कारे व्यवहारसत्त्व-भ्रमोपादानम्, अन्त्यसाक्षात्कारे च दग्धपटवत् प्रातिभासिकसत्त्वभ्रमोपादानं **माया** इति **भूयः श्रुते**रवगम्यते । निरुपाधिकभ्रमस्य चाधिष्ठानतत्त्वापरोक्ष्येऽनुवृत्त्यनुपपत्तेः ।

---

1. श्वे. 1. 10.
2. बृ. 4. 4. 19

औपाधिकभ्रमे च प्रातिभासिकसत्त्वभ्रमोपादानलेश एवानुवर्तते बाधे। अतः प्रारब्धफलकर्मणेव विदुषो दर्पणादिसन्निकर्षेणावरुद्धो मायालेशोऽपि प्रतिबन्धविगमापेक्षया समुच्छिद्यत इति नोच्छेदात्मकबाधे किञ्चिदवद्यम्। तत्त्वसाक्षात्कारेणानुच्छेद्यामिच्छन्तो मायां "पञ्चीकृतापञ्चीकृतमहाभूतस्थूलं केवलब्रह्मात्मैकत्वज्ञानापनोद्यम्" इत्युपदेशं स्मृतिं च विस्मृत्य अवगणय्य वा कथङ्कारं तदेकप्रमाणकाः नापत्रपन्ते।

अथ कथं मायानिवृत्तिरुच्छेदात्मको बाधः? यदि विरोधिविद्योदय एव तदुच्छेदः, तदा घटत एव; यदा ज्ञातत्वोपलक्षित आत्मैव सः तदा सैव नास्ति इति कस्य बाधचिन्ता? अनिर्वाच्यत्वे च तस्या मायातद्योगकार्याणामन्यतमत्वापत्तिः; निवृत्तिमत्त्वं चेत् तत्त्वप्रयोजकं स्वेष्टमायायां व्यभिचारः, अविद्यानिवृत्तिनिवृत्तेरपि पूर्वनिवृत्तिवद्विद्याविरोधात् तदुन्मज्जनायोगान्नापुनरावृत्तिगतिभङ्ग इति न साधनव्यापकत्वमपि। निवृत्त्यनवस्था च अनिर्वाच्यत्वेऽपि तत्सत्यत्वादिभ्रमनिवृत्तिपरम्परापत्त्या तुल्या। न ह्यनिर्वाच्यत्वप्रयुक्तोऽन्तर्भावः तद्वर्जं स्यात्। न च पञ्चमप्रकारा सा; सदसद्वैलक्षण्यं हि ख्यातिबाधाभ्यामविद्याद्यन्तर्भावविहत्या त्यज्यते, पञ्चमप्रकारत्वेऽप्यनात्मत्वप्रयुक्तः स पुनरुद्भवन्निर्णयं वारयति; तेन निवृत्तिरात्मा मोहस्येत्येव सूक्तम्। तदेवं बाधसिद्धौ विभ्रमालम्बनं विशिष्टख्यातिबाधदेशान्तरादिसत्त्वं सर्वथा, न त्वव्यवस्थापकप्रमाणादर्शनादिबलादनिर्वाच्यत्वमनृतम्। तदुपादानं चानृतम् अनिर्वाच्याविद्या सकलाध्यासप्रसरप्रसवभूमिः "अहमज्ञ" इति सम्प्रत्ययबलसिद्धा। न चात्र ज्ञानाभावोऽवभासते, न भावरूपमज्ञानम्; भाट्टानामनुमेयस्य ज्ञानाभावस्यापरोक्षत्वायोगात्। न च प्रमाणान्तरेणावसाय "अहं सुकृती" इतिवत् "अहमज्ञ" इति व्यवहरति लोक इति साम्प्रतम्; यतस्तस्य परोक्षत्वे परात्मनीव कदाचित् स्वात्मन्यध्यक्षत्वसन्देहस्स्यात्।

किञ्च "आत्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि" इति द्वयी गतिर्भवतामज्ञानस्य। तत्रापरिणामस्य स्वरूपतावन्मात्रत्वं चेत्, विषयभेदाभावात् अहंस्फूर्तिरेव तदा स्यात्, "नाहमज्ञ" इत्येव वा। अनज्ञानकालात्प्राक्कालावच्छेद एवात्मनि अज्ञत्वव्यवहारं प्रवर्तयति, तदाऽप्यात्मोल्लेखात् सति ज्ञाने कथं तत्प्राक्कालकल्पना विषयस्याप्यज्ञानावच्छेदकतया जायमानत्वान्न तज्ज्ञानप्राक्कालकल्पनाऽपि।

अथ वस्त्वन्तरज्ञानात् तत्रैव वा वस्तुन्यनुभवाभावात् स्मरणाभावाद्वा ज्ञाने सत्यप्यज्ञानव्यवहारः, तथाऽपि "अहं अज्ञः" इति सामान्यव्यवहारस्य सामान्यरूप-

मालम्बनं वक्तव्यं, विशेषकल्पनायास्तदुत्तरत्वात्; वस्त्वन्तरज्ञानस्य स्वपरगोचरज्ञातत्वाज्ञातत्वव्यवहारद्वयहेतुत्वसामञ्जस्याच्च। न च सति ज्ञाने ज्ञानप्रागभावसामान्यं संभवति इति भावरूपमेवाज्ञानं साधयति "अहमज्ञ" इत्यनुभवः।

अस्ति च तटस्थानां प्रतियोगिस्मरणाभावेऽपि स्वात्मन्यन्धकारकल्पाज्ञानानुभवः। एवं प्रत्यक्षाभाववादेऽपि। महाप्रलये च सिद्धं भावरूपमज्ञानं वेदादेः। "यद्यपि महाप्रलये नान्तःकरणादयः समुदाचरद्वृत्तयस्सन्ति, तथापि स्वकारणेऽनिर्वाच्यायामविद्यायां लीनास्सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपकाविद्यावासनाभिस्सहावतिष्ठन्त एव विक्षेपकाविद्याभ्रान्तय" इति **आचार्यवाचस्पतिना देवताधिकरणे**ऽभिधानाच्च ॥

विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत् इति वृद्धप्रयोगाच्च भावरूपाज्ञानसिद्धिः। अत्र सामान्याश्रयधर्मादिपूर्वज्ञानप्रागभावव्यवच्छेदाय प्रातिलोम्येन साध्यविशेषणानि। प्रागभावविषयान्धकारकुड्यादिमिथ्यार्थमिथ्याज्ञानव्यवच्छेदाय चानुलोम्येन। मिथ्याज्ञानस्यापि मिथ्यार्थप्रकाशकस्य तत्त्वांशावरकत्वं न विरुध्यते।

ननु प्रमाणज्ञानमुक्तसाध्यम् इत्युक्ते न तावत् सिद्धसाधनता परैरेवंभूतविषयावरणानङ्गीकारात्। नापि धारावाहिज्ञानभागे बाधः, तस्यापि तत्तत्कालावच्छिन्नानधिगताधिगन्तृत्वेनोक्तसाध्यत्वात्; अतो व्यर्थविशेषणः पक्षः इति, नैतत्; एकाज्ञानपक्षे शुक्त्यादिप्रमासु, तथा पूर्वपूर्वविज्ञानस्य विनश्यदवस्थायामेवोत्तरोत्तरज्ञानोत्पादात् स्वविषयावरणानिवर्तकत्वेन प्रत्यक्षज्ञानधारायां यथोक्तसाध्याभावेन भागे प्रसक्तबाधनिराकरणार्थत्वात् विशेषणस्य। सिद्धे हि विशिष्टाज्ञाने तत्रापि तत्पूर्वकत्वसाधनस्य विमतं ज्ञानं अर्थाव्यभिचारि इति प्रयोग इव समर्थप्रवृत्तिजनकत्वेन ज्ञानप्रामाण्येऽनुपेक्षणीयज्ञानेषु ज्ञानप्रामाण्यसाधनस्य शक्यत्वाच्च। तथा यथोक्ताज्ञानाभावे च सम्प्रसादे वेदोक्तब्रह्मप्राप्तिस्तात्त्विकी इति तदुत्थितानां व्याघ्रादिभावानुवर्तनकीर्तनं वेदस्य व्याहन्येत। न च स्वरूपग्रहणे नित्ये तदभावोऽग्रहणमावरणं घटते। आगन्तुकग्रहणाभावस्तु सवितरीव प्रदीपाभावो नावरणाय। न खलु स्वप्रकाशं विज्ञानं स्वविषयप्रमाणानुदये न भाति इति तद्वदिति। विपर्यासादेस्तत्राभावाच्च तत्संस्कारस्य च शुक्त्यादाविव तत्त्वानावरकत्वात्। न च कर्मापि नर्तक्या इव भ्रमणविशेषस्तत्त्वावरणं, तस्यापि संस्कार-

द्विशेषात् । अतः परिशेषादेभ्यो विलक्षणं भावरूपमज्ञानमावरणं चिदात्मनस्स्वरूपभूतं स्वप्रकाशब्रह्मणः ।

श्रुतयोऽपि—"तम आसीत् तमसा गूढमग्रे"[1] "नीहारेण प्रावृताः"[2] "अविद्यायामन्तरे वर्तमानाः"[3] इत्याद्याः । स्मृतयश्च :—"आसीदिदं तमोभूतम्"[4] इत्याद्या यथोक्तमज्ञानं समर्पयन्ति । "तुच्छेनाभ्वपिहितम्"[5] इति श्रुतौ तु तुच्छ-शब्दोऽनिर्वाच्यार्थः समन्ताद्वर्तमानब्रह्मापिधायकमायायाः प्रकृतित्वश्रुतेः । न चैवं प्रामाणिकमज्ञानं प्रमाणेन दुरुच्छेद्यमापद्येत; प्रामाणिकानामपि परैरीश्वरसाक्षात्कारे-णोच्छेदस्वीकारात् । सर्वैरपि प्रामाणिकसंशयादेः प्रमाणेनोच्छेदाभ्युपगमाच्च । अपरथा शास्त्रीयविचारवैफल्यात् । अत्र च प्रमाणाप्रमाणसाधारणसाक्षिसिद्धाज्ञानस्य पराभिप्रेत-रूपप्रतिषेधार्थत्वात् प्रमाणस्य, विनापि साक्षिणा सिद्धमज्ञानम्, "त्वदुक्तमर्थं न जानामि" इत्यादिव्यवहारस्य सुषुप्ते वा प्रमाणज्ञाने वाऽनुपपत्तेः ॥

ननु प्रतिवादिवचनादेव प्रतीयमाने प्रपञ्चसत्यत्वादौ साक्षिसिद्धत्वस्य वक्तु-मशक्यत्वात् आहार्यारोपत्वे सिद्धे प्रमाणज्ञानाभावादेव यथोक्तव्यवहारसिद्धेः अन्यथा-ऽप्युपपत्तिः इति चेत्, अत एव ज्ञानविशेषितोऽर्थः साक्षिसिद्ध इत्यनुपपन्नम् । वचन-व्यापारे सत्यपि मायैव सत्यत्वादिवृत्तिरूपेण परिणमते चेत्, चक्षुरादिव्यापारेऽपि सैव परिणमत इति प्रमा अन्तःकरणवृत्तिः, अप्रमा च मायावृत्तिः, इति व्यवस्था दुरवस्था स्यात्, **मैवम्**; प्रतिवादिवचनस्य प्रामाण्याभावनिश्चयेन मायावृत्त्युपस्थापकत्वात् तदुपा-दानमायासिद्धेः ।

"सम्यक्संशयमिथ्याख्यैर्धीरेवेयं विभज्यते"

इत्याचार्यवचनाच्चान्तःकरणपरिणामोऽप्यप्रमा इति न कश्चिद्दोषः । कामस्सङ्कल्पो विचिकित्सा इत्यादिश्रुतेर्मनोमय्या अप्रमावृत्तेरविद्याप्रधानत्वात् साक्षिसिद्ध्याक्षेपकत्वात् । अस्य चागन्तुकत्वे हेत्वन्वेषणायां किमप्यनाद्येष्टव्यमनवस्थापरिहाराय । तद्वरमस्यैवानादित्वं

---

1. तै. ब्रा. 2. 8. 9.
2. तै. सं. 4. 6. 6.
3. कठ. 2. 5.
4. मनु. 1. 5.
5. तै. ब्रा. 2. 8. 9.

तत्त्वज्ञानोच्छेद्यत्वाच्च भावत्वेन प्रतीतस्य तथात्वेन युक्त्या दुर्घटत्वमनिर्वाच्यत्वमपि । अस्याशेषदुःखनिदानस्य तत्त्वज्ञानेनोच्छेदः प्रयोजनस्यैका कोटिः स्वरूपसुखाविर्भावश्चापरा ॥

अत्र **नैयायिका** दुःखाभावं स्वतन्त्रं पुमर्थं वर्णयन्तो मोक्षदशायामानन्दं नानुमन्यन्ते ; तथा हि—यदि सुखं दुःखाभावे सत्येव भवति इति सुखसाधनान्तरवद्दुःखाभावोऽपि मृग्यते, न तु स एव पुरुषस्य समीहितः, तर्हि भोजनादिसुखे सत्येव बुभुक्षादिदुःखं निवर्तत इति दुःखनिवृत्त्यर्थमेव भोजनादिसुखं मृग्यते ; न पुनस्तदेव पुरुषस्य समीहितम् इति किन्न कल्प्यते ? क्वचिद्दुःखाभावे सत्यपि सुखस्येष्यमाणत्वात् इति चेत्, न ; दुःखनिवृत्तेरपि क्वचित् सुखाभावेऽपीष्यमाणत्वादेव । दुःखनिवृत्तौ सत्यां सुखमेव भविष्यति इत्यभिसन्धिः तत्रास्ति इति चेत्, न ; सुखावस्थायां नियमेन दुःखविरहो भविष्यति इत्यभिसन्धेः तत्रापि सम्भवात् । **अत एव** ज्ञातदुःखाभावस्य नियमेन सुखव्यञ्जकतया तच्छेषत्वं **इत्यपास्तम्** । तस्मात्, यद्यपि दुःखनिवृत्तौ सुखम् सुखे च दुःखहानिर्नियता, तथापि परस्परनिरपेक्षमेव पुमर्थत्वमनयोः, इच्छाया असङ्कीर्णविषयत्वात् ।

**ननु** तथापि यथा दुःखशबलं संसारसुखमनादेयं तथा सुखशबलं दुःखमप्यादेयं स्यात् । दृश्यन्ते हि सुखार्थिनो यागादिदुःखमप्यनुभवन्तः । ततो दुःखस्य हेयत्वाभावात्तदभावस्य पुमर्थत्वम् । **नैतत्** । मोक्षाधिकारिणः हेयहीनस्य मुक्त्यनुपदेशात् । तदुक्तम्—

> "यस्य दुःखमुपादेयं तस्य हेयं किमुच्यताम् ।
> हेयहीनस्य का मुक्तिः केन वाऽप्युपदिश्यते ॥"

इति । कस्य तर्हि मुक्त्युपदेशः ? यस्तु घनतरदुःखतिमिरनिरन्तरात् संसारकान्तारात् सुखखद्योतिकासु द्योतमानास्वपि बिभेति, तं प्रत्ययं निस्तमस्कतया सुगमो मार्ग उपदिश्यते ।

**ननु** दुर्गम एवासौ, यतः सततमनुभूतविविधविचित्रदेवाद्यानन्दपरिहारेण भावावस्थाप्रार्थना प्रेक्षाकारिणो दुरुद्भवा, **मैवम्** ; समानत्वात् । भावरूपोऽपि ब्रह्मानन्दः शतबारमाकर्णितोऽप्यननुभूतत्वादनुभूतानन्दवैरस्याय न विवेकवत् क्षयादिदोषदर्शनाभ्यासे

आविरिञ्चाद्यानन्दादुद्वेगस्तुल्यः, इतरत्रापि आब्रह्मलोकात् सुखस्य दुःखाविनाभाव-दर्शनान्मोक्षसुखस्यापि तदन्वयाशङ्कया । प्रत्युत भवन्मत एव मुमुक्षानुदयः :—

"अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः"[1] इति श्रुतेश्च । तुल्ये च सुख-दुःखयोः साधनान्वेषणे न सुखस्यैव नित्यत्वं स्वरूपत्वप्रमा च सङ्गच्छते, "यो वै भूमा तत्सुखम् नाल्पे सुखमस्ति"[2] इति सुखभूमार्थिनः साधनबाहुल्यमेवोपदिश्यते । तेन ब्रह्मण्यानन्दश्रुतिः दुःखाभावं सहजं परम आनन्द इति ब्रूत इति युक्तम् ।—

अत्र समाधिः :—अस्ति तावल्लोके सुखव्यवहारः ; स च दुःखाभावमात्रा-लम्बनो ग्रावादावपि प्रसङ्गात् दुस्सम्पादः ।

अथ दुःखसमानाधिकरणो दुःखाभावोऽनुभूयमानस्तद्विशिष्ट आत्मा वा तदालम्बनं इति न दोषः । न च सुखदुःखयोर्युगपदुपलम्भान्न दुःखाभावः सुखम्, प्रादेशिकयोः प्रदेशभेदादेव भावाभावयोरेकस्य एकत्रापि सम्भवात् । न च समग्रे वपुषि सुखदुःखे युगपदुपलभ्येते । न च क्षुधादिदुःखस्य येन केनाप्यशनादिना निवृत्तौ सुखे सम्पन्ने तद्विशेषोपादानं भावरूपं सुखं गमयति विशेषशून्यत्वादभावस्य विशेषवत्त्वे च भावत्व-प्रसङ्गः स्यात् इति वचनीयम् ; तदुपादानस्य कदन्नादिनिमित्तदुःखान्तरवर्जनार्थत्वात् "सन्तापयन्ति कमपथ्यभुजं न रोगाः" इति वचनात् । यच्च सत्यपि[3] दुःखे विस्मापन-विषयसंसर्गादाह्लाददर्शनम्, तदपि विद्यमानस्य दुःखाभावस्याभिव्यक्तिविशेषात् । ननु :—

"दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते ।
न हि मूर्छाद्यवस्थायां प्रवृत्तौ दृश्यतेसुधीः ॥"

इति उक्तत्वान्मोक्षावस्थायां च ज्ञानस्याप्युच्छेदादज्ञातो दुःखाभावः कथं पुरुषार्थ इति स्वप्रकाशरूपं सुखमङ्गीकार्यम्, मैवम् ; धर्माधर्मयोरिव यावत्सत्त्वमविज्ञातस्यापि दुःखा-भावस्य पुरुषार्थत्वोपपत्तेः....परमेश्वरसाक्षात्कारेण आगामिदुःखाभावानुभवाङ्गीकाराच्च; अतो दुःखाभाव एव सुखम् इति जरद्वैशेषिकाः ।

---

1. छा. 8. 1. 6.
2. Ibid. 7. 23.
3. असत्यपि.

नैवम्; अनेन मार्गेण गमने दुःखं न लभ्यते सुखं च लभ्यत इत्यादिव्यप-देशात् भिन्नमेव दुःखाभावात् सुखम् इति निश्चयात्। न च अत्राप्येवं कुर्वन् नापुत्रो भवति सपुत्रश्च भवति इतिवदेकार्थतैव। निमित्तभेदात्। चोराद्यभावनिमित्तो हि पान्थस्य दुःखाभावः, सुखं च पुरस्कारादिनिमित्तम्; दृष्टान्ते तु पुत्रजन्मैवैकं निमित्तम् इति वैषम्यम्। न चायं व्यपदेशो विद्यमानदुःखाभावस्याभिव्यक्तिविशेषाभिप्रायेण। विदग्ध-प्रयोगे हि तथा कल्पनात्; मुग्धप्रयोगे पुनर्नैवम्, दुःखाभाववति लौकिकानामुपचारेण 'सुखी' इति प्रयोगाच्च गम्यते मुख्यप्रयोगे सुखं भावरूपं, एकस्मिन्नेकरसे मुख्यामुख्य-वृत्तेरेकस्य शब्दस्य विरुद्धत्वात्। तेन भावरूपं सुखं लोके व्यवस्थितम्। देवादेश्शतगुण-दुःखानिरूपणान्न तदुच्छेदः सुखमौषधादिवन्मात्राश्रुतेश्च। न च तस्य भावत्वे काचि-दनुपपत्तिरस्ति। न च ब्रह्माद्यानन्दस्य प्रतिकल्पमनवच्छिन्नस्य कल्पभोग्यस्य स्वेच्छोप-नीतस्य सुराङ्गनाऽङ्गसङ्गादिमधुरस्य तृणवत्परिहारेण दुःखभावमात्रे मोहे प्रवृत्तेरनुप-पत्तिर्दोषः। तस्यार्धवैनाशिकादिमत एव प्रसरात्। अस्माकं तु सकलुषजलपरिहारेणेव निर्मलजले दुःखकोरकानाघ्रातब्रह्मानन्दे तत्परिहारेणापि प्रवृत्तिसम्भवात्। न च ब्रह्मा-नन्देऽपि लौकिकानन्द इव दुःखाघ्रातत्वं शक्यमनुमातुम्; सुषुप्तोत्थितस्य दुःखपरामर्श-स्यापि दर्शनात् तत्र च ब्रह्मासिश्रवणात् इति वचनीयम्; "कम् ब्रह्म खम् ब्रह्म"[1] इत्युपकोसलविद्यायां वैषयिकसुखतुल्यत्वव्यवच्छेदाय ब्रह्मसुखस्य खेन विशेषणात् तत्कल्पनायां च "शान्तं निरवद्यमभयमशोकम्" इत्यादिश्रुतिविरोधात्। यदाहुः:—

"अभावप्रत्ययालम्बना वृत्तिर्निद्रा"[2]। सा तु प्रबोधे प्रत्यवमर्शात् प्रत्ययविशेषः। कथं? 'सुखमहमस्वाप्सम्' प्रसन्नं मे मनः प्रज्ञां विशारदां करोति' "दुःखमहमस्वाप्सम्" "स्त्यानं मे मनो भ्रमत्यनवस्थितम्" "गाढं मूढोऽहमस्वाप्सम्" 'गुरूणि मे गात्राणि' "क्लान्तं मे चित्तम् अलसं मुषितमिव तिष्ठति" इति। स खल्वयं प्रबुद्धस्य प्रत्यवमर्शो न स्यात्। असति च प्रत्ययानुभवे स्मृतयस्तद्विषया न स्युः। तस्मात् प्रत्ययविशेषो निद्रा, अतो निद्रायां ब्रह्मभूयमनुभूयोत्थितस्य सुखावमर्शवत् दुःखमोहयोरपि परामर्शा-नैकान्तिकसुखोपेता ब्रह्मप्राप्तिः इति,

---

1. छा. 4. 10. 5.
2. यो. सू. 1. 5

**तत्र वक्तव्यम्**—निद्राप्रत्ययः प्रमाणम् न वा ? आदौ सत्त्वविकाराणां कान्तादीनां प्रमोदात्मकानां सत्त्वान्न जागराद्भेदस्स्यात् । विपर्ययश्चेत् "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्"[1] इति तल्लक्षणात् पृथङ्निद्रालक्षणं नाचक्षीत । अथ अभावाः प्रत्ययन्ते प्रतिगच्छन्ति लीयन्तेऽस्मिन्विकारे इत्यभावप्रत्ययः तमः तदालम्बना वृत्तिर्जीवस्य निद्रा इति विवक्षितम् ।

तर्हि "तमसा गूढमग्रे"[2] इत्यादिवेदानुसारान्न कापि वृत्तिः इति तमोवगमकत्वं स्यात् । न च **साङ्ख्ययोगानामा**त्मा सुखादिसमाहारः । अतस्तन्मते तद्विषयो नायं प्रत्यवमर्शः कस्यापि गमकः ।

**अथ वेदान्ति**मतेन स प्रमाणं सुखगमकः, तत्र हि माया सुखसाक्षिमोहाकारः परिणमते निद्रायामपि, मैवम्; तत्परिणामस्याप्रमाणत्वात् रजतादिबोधवत् । अस्तु वा यथाकथंचित् तथापि दुःखानुभवस्य गतिरशक्या इति नायं सिद्धान्तः ।

**अथ** तीव्ररोगाद्यभिभूतस्याचिरसुषुप्तेः स्वप्नान्तर्गतदुःखानुभवविषयोऽयं परामर्शः । सौषुप्तसुखानुभवोपेतस्यापि तस्याल्पकालत्वान्न परामर्शः । तर्हि स्वप्ने सुखानुभवबाहुल्यादचिरसुषुप्तेस्तत्परामर्श एवायम्, न सौषुप्तसुखानुभवस्य इति किं न स्यात् । **अथ** ब्रह्मस्वरूपमात्रालोचनव्यापृतस्य "आनन्दो ब्रह्म"[3] इति वाक्यात् "यो वै भूमा तत्सुखम्"[4] "एष ह्येवानन्दयाति"[5] **आनन्दयति** आनन्दरूपेण स्फुरति कूटस्थचिदात्मनस्तद्विकारत्वायोगात् इत्यादिश्रुतेश्च "आनन्द एव हि ब्रह्मत्वकारणादिधर्मवत्तया निरुपाधिब्रह्मरूपं निर्णीयते" इति वृद्धवचनाच्च सुषुप्ते ब्रह्मप्राप्तिश्रवणाच्च तत् सुखानुभवो निश्चीयते । **मैवम्**; आगमेन सुखस्वरूपत्वनिश्चयेऽपि सुप्तौ तदनुभवानिश्चयात् । किञ्च स्वतःप्रामाण्यमपि प्रमाणान्तरापेक्षया निश्चायकत्वे तदनुभवस्य हीयते । न च अनुभवोऽपि मुक्तिसहोक्तो ? यतः तर्हि मायया किमावरणं कृतं स्यात् ? यदि तथैव समुत्खातसकलद्वैतेन्द्रजालं सदेकरसं स्वप्रकाशानन्दविग्रहं ब्रह्मतत्त्वमाविर्भावितं स्यात् "सति सम्पद्य न विदुस्सति सम्पद्यामहे" इति च श्रुतेर्निर्विक्षेपमायावृतस्यैव ब्रह्मणः केवलं प्राप्तिरवधार्यते । तत्र सकलकर्मनिवृत्तिनिरोधे च प्रलयानुमाननिदर्शने सम्प्रसादे का कथा निरवद्यानन्द-

---

1. यो. सू. 1. 8.
2. तै. ब्रा. 2 8. 9.
3. तै. उ. 3. 6.
4. छा. 7. 23.
5. तै. 2. 7.

प्राकट्यस्य लब्धवृत्तिधर्मसन्दोहसाध्यस्य ? ततो नैष ब्रह्मसुखावमर्शो येन तत्र दुःख-मोक्षावपि सम्भाव्येयाताम्। अतो दुःखान्वयाशङ्कानुदयादानन्दस्य भावत्वेऽपि मुमुक्षोदय-स्स्यात्। न च भावत्वे जनिमत्त्वादिदोषः, नित्यत्वात्।

**यदपि** श्रोतव्यविज्ञानानन्दयोः सामानाधिकरण्यस्योपयोगित्वेन

> तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः।
> तत्सुखादि किमज्ञानं विज्ञानाभिन्नहेतुजम्॥

इति बाह्यसंवादेन विज्ञानाभिन्नहेतुकस्यानन्दस्य विज्ञानत्वं **ब्रह्मतत्त्वसमीक्षाकारै**रभ्य-धायि, **तदपि** व्यञ्जकवृत्तेरप्यनयोर्न विलक्षणत्वम् किमुत आकाशकल्पयोर्व्यङ्ग्ययोः ? इत्यभिप्रायेण; न त्वानन्दस्य जन्यत्वमपि इत्याशयः। "न विज्ञानत्वस्य सुखदुःखराग-द्वेषादिमहासामान्यत्वम्" इत्य**भियुक्त**वाचोयुक्तिः —

"मनसः परिणामोऽयं सुखदुःखोपलक्षणः"

इति **पराशर**वचनात् व्यञ्जकवृत्तेरेव मनोहेतुकत्वाभिप्रायेण; अतो नानन्दस्य जन्यत्वेन नाशादिनिमित्तदुःखसम्भावनापि भावरूपत्वे दोषः।

अथ शतगुणोत्कर्षेण श्रूयमाण आनन्दः कथमेकरूपब्रह्मणो रूपम् ? कोऽभि-प्रायः; किमानन्दोत्कर्षात् साधनोत्कर्षोऽपि इति तज्जन्यानन्दस्य कथं नित्यब्रह्मरूपता, किं वा तस्यैकरसब्रह्मरूपत्वे उत्कर्षेण वेदश्रुतिर्लोकप्रसिद्धिश्च पीड्येत भेदानुमानं चोत्कर्षतारतम्यलिङ्गकम्। **नाद्यः** प्रतिपर्यायं "श्रोत्रियस्य चाकामहतस्य"[1] इत्यभि-व्यक्त्युपयुक्ताकामहतलक्षणशुद्ध्युत्कर्षव्यतिरिक्तसाधनाश्रवणात्। शुद्ध्युत्कर्षोऽपि शत-गुणानन्दवत् न श्रूयत इति चेत्, उत्तरोत्तरलोकेषु तावन्मात्रेणानन्दोत्कर्षे च तत्र तत्रोत्कृष्ट-भोगसाधनश्रुतीनां तदुद्देशेनाश्वमेधादिविधीनां च प्राप्तं अप्रामाण्यम् "तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते। य उ चैनमेवं वेद" इति। अनधिकृतब्राह्मणवैश्ययोरश्वा-द्युपास्तेः "उषा वा अश्वस्य"[2] इत्यादेरधिकृतस्य च तदनुष्ठानात् तुल्यं फलम् इत्यादि-श्रवणात्। अकामहतत्वं च यल्लोकसाधनावलम्बनं ततोऽन्यत्र कामपरित्यागो विषयान्तर-प्रवृत्तिवारकतया चरितार्थश्च नानन्दविधायको ब्रह्मचर्यादिवत्तपोविशेषतया वा नानन्दस्य साध्यत्वं वारयति। श्रोत्रियस्य चाकामहतस्य मर्त्यलोकस्थस्यैव विवक्षायां तादृगानन्द-

---

1. तै. उ. 2. 8.

2. बृ. 1. 1.

लिङ्गानुपलम्भविरोधः " ये कर्मणा देवानपि यन्ति " इत्यादिश्रुतिविरोधाच्च । मुमुक्षुविवक्षया सम्पादनस्य च ब्रह्मानन्दसिद्धिसव्यपेक्षत्वात् । अतः श्रोत्रियकर्मैव साधकविशेष इति साधनोत्कर्षतारतम्यमन्यथा प्रशंसामात्रं स्यात् । बृहस्पतेर्हिरण्यगर्भस्याऽऽनन्दः श्रोत्रियेणावृजिनेनाकामहतेन सर्वाप्रत्यक्षमुपलभ्यते । " तस्मादेतानि त्रीणि साधनानि इत्यवगम्यत " इति भाष्यकारैर्व्याकृतत्वाच्च । "सोऽकामयत भूयसा यज्ञेन भूयो यजेय "[1]ति पूर्वजन्मकृतसाधनलब्धसर्वात्मभावः कामनापूर्वं तत्तत्सर्गकर्ता मृत्युनामको हिरण्यगर्भो **बृहदारण्यके** श्रुतश्च इति । एवमपि परमकाष्ठां प्राप्तस्य ब्रह्मानन्दस्य न साध्यत्वे प्रमाणमुक्तं भवति । अथैतस्यैवावयवशस्साध्यत्वमध्यवसीयते अभेदेऽप्युपचारात् । तथा हि—सार्वभौमसम्पदोऽन्ये मात्रामुपजीवन्ति इत्युक्तेपि तस्या अन्यसाध्यत्वानध्यवसायात् ।

अथ, " एतस्यैव " इत्यवधारणश्रुतेः न भेदेऽप्युपचारोऽयम्, तर्हि त्वयैव लौकिकब्रह्मानन्दयोरभेदावधारणात्, ब्रह्मणश्च नित्यत्वसंवादात् कूपाकाशवत् औपाधिकमानन्दस्य साध्यत्वं निरधारि । " तस्माद्वा एतस्मात् " ब्रह्मत्वेन प्रक्रान्तात् " यो वेद निहितं गुहायात् "[2] इति प्रत्यक्तया वेद्यत्वेनेपक्षिप्तादाकाशोत्पत्तिश्रुतौ तदेतच्छब्दयोः सामानाधिकरण्यात् तत्रैव च " आत्मन " इत्यात्मशब्दस्य च ब्रह्मणि प्रयोगात् जीवब्रह्मणोरैक्ये स्थिते " आनन्दाद्ध्येव खल्विमानि भूतानि "[3] " आनन्दो ब्रह्म " इति, तत्र आनन्दशब्दप्रयोगात् ब्रह्मात्मानन्दानामेकरसत्वाध्यवसायाच्च ; " तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा "[4] इति निरुपाधिकप्रयत्नेन जीवस्यानन्दरूपत्वावधारणाच्च न सार्वभौमसम्पद्भूतसर्वोत्कृष्टोऽप्यानन्दःसाध्य इति शङ्काऽवतारः । अत एव नेतरौ कल्पौ । न च अभिव्यक्तिपक्षे प्रकृष्टजन्मनैव शतगुणोत्कर्षाभिव्यक्तौ देवादिभोगसाधनानारम्भप्रसङ्गः । दर्पणस्येव शुद्धितारतम्ये वैराग्यतारतम्यमपि इत्युत्कृष्टोत्कृष्टविषयानुरागेण भोगभाजामानन्दनिकर्षतारतम्यापत्तेः, वैपरीत्यदर्शनाच्च । कालतारतम्येऽपि अदीर्घकालसार्वभौमादेः शतगुणोत्कर्षानन्दश्रुतिपीडनाच्च ततोऽनभिव्यक्तिः इति क्षोदक्षमः, मैवम् ; जन्मपक्षेऽपि प्रथमतृतीयदोषयोस्तुल्यत्वात्, उत्कर्षतारतम्यशालिपुण्योपस्थापितभोगसाधनसम्पर्कजन्यत्वमेव शुद्ध्युत्कर्षतारतम्यस्य प्रमोदव्यञ्जकस्य न वैराग्यतारतम्यम्, येनोक्तदोषस्स्यात् ।

---

1. बृ. 1. 2. 6.
2. तै 2. 1.
3. तै. 3. 6.
4. बृ. 1. 4. 8.

यथा च धवलरूपविशेष एव शुद्धत्वं व्यञ्जकतारतम्याद्व्यज्यते तारतम्येन शुक्लस्य "तथाऽस्तु स्वरूपमपि सुखम्, श्रोत्रियत्वावृजिनत्वे अविशिष्टे अकामहतत्वन्तु विषयोत्कर्षापकर्षतः" विशिष्यत इति **भाष्यात्**। आनन्दत्वं च ब्रह्मणः सिद्धं कृत्वा तस्य निरतिशयत्वसंकथनाय सातिशयानन्दकथने "श्रोत्रियस्य चाकामहतस्य" इति वदन्ती **श्रुतिः** कामत्यागस्य यथावदभिव्यक्त्युपायत्वं सूचयति, तत्र कश्चिद्दोषः; "तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनसम्पत्तिनिमित्त उत्कृष्टो यः स एव निर्दिश्यते ब्रह्मानन्दानुगमार्थम् अकामहतत्वाग्रहणं च तद्विशेषतः शतगुणसुखोत्कर्षोपलब्धेः अकामहतत्वस्य परमानन्दप्राप्तिसाधनत्वविधानार्थम्"[1] इति **भगवत्पादोक्तेश्च**।

"यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतष्षोडशीं कलाम्॥"

इति **व्यासोक्तेश्च**। भोगसाधनस्यापि निध्यादेः क्रयादिना सम्बन्धाभावेऽपि परासंसर्गमात्रेण दृष्टस्य पुमर्थत्वदर्शनात् कर्मकारकतया दर्शनाभावेऽपि एष्यतः स्वर्गादेः पुमर्थत्वाच्च। किमु वक्तव्यं सुखस्य परासंसर्गित्वेन साक्षात् पुमर्थत्वम् इति, "तदेतत् "प्रेयः पुत्रात्" इत्यादिका **श्रुतिः** आत्मनो निरतिशयसुखत्वेन परमपुमर्थत्वं व्यवस्थापयति। "उपादीयमानं सर्वं यदर्थं यच्चात्मातिरिक्तार्थं न भवति वस्तु तत् सुखम्" इति सुखलक्षणं चात्मनि सम्पादयति; अतो ब्रह्मणि प्रतीचि सुखस्यैवानन्दश्रुतिः। एतदनुरागोऽप्येतस्मिन्नेव प्रवर्तयन्नक्लेशेन मोक्षपर्यवसाय्येव। बलात्प्रवर्तितो हि न नियमेन फलपर्यन्तं प्रवर्तते। यथोक्तानन्दाविर्भावश्च तमःपटलपाटनेन विद्याया द्वितीया कोटिः।

यत्पुनर्दर्शनम्—"अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः"[2] विपर्यया इत्यर्थः। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिर**विद्या**[3]। **दृग्दर्शन**शक्त्योरेकात्मतेवा**स्मिता**[4]। **पुमान्** दृक्शक्तिः; **बुद्धि**र्दर्शनशक्तिः; तयोरेकस्वरूपापत्तिरिवास्मिता क्लेशः। अस्मि इत्यस्य भावोऽ**स्मिता** तादात्म्याभिमान इत्यर्थः। सुखानुशयी **रागः**[5]। सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गर्धः तृष्णा लोभस्स **रागः**।

---

1. तै. भा. 2. 8.　　　2. यो. सू. 2. 3.
3. यो. सू. 2. 5.　　　4. Ibid. 2. 6.
5. Ibid. 2. 7.

दुःखानुशयो **द्वेषः**[1]। पूर्ववद्दुःखे तत्साधने वा यं प्रति यो मन्युः जिहासा क्रोधः, स **द्वेषः**। स्वरसवाही विदुषोऽपि तथा रूढोऽ**भिनिवेशः**[2]। सर्वप्राणिनामियमाशीर्नित्या भवति। मा न भूवम् भूयासम् इत्येषा पूर्वानुभूतमरणत्रासं गमयति। कृमेरपि स्वरसतः प्रमाणव्यापाराकुशलस्यायुरुच्छेददृष्ट्यात्मकः, सोऽयं **अभिनिवेशः**, तथा विदुषोऽपि रूढः। अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्[3] प्रसङ्ख्यानवतः सतामपि क्लेशानां बीजसामर्थ्यं दग्धम् इति विषयस्य सम्मुखीभावे लब्धप्रवृत्तयश्चोदारा भवन्ति इति।

> सुषुप्तास्तत्त्वलीनानाम्, तनुदग्धास्तु योगिनाम्।
> विच्छिन्नोदाररूपाश्च क्लेशा विषयसङ्गिनाम्॥

इत्युक्तेश्च। तत्र बीजसामर्थ्यस्य 'वह्न्यौष्ण्यवत्' वस्तुसहभाविनो दाहे प्रधानस्याविद्यादिविकारकोशस्य दाहः केन वार्येत? तद्दाहे वा वह्नेरिवौष्ण्यं सामर्थ्यमपि नश्येत्। "न दृश्यते तत्त्वमनेन" इत्य**दर्शम्** तमोगुणः। तस्माद्बुद्धिपरिणतप्रधानपुंसोः संयोगः तादात्म्यं विपर्ययस्ततो बुद्धिविकाराणां आत्मनि समारोपस्संसारः।

तमोगुणस्य च नित्यत्वान्न विपर्यासाद्युच्छेदः मूषिकाघ्रातशालिशक्तिवत् दाहश्चेत् सोऽपि **योगः** चित्तवृत्तिनिरोधः।

विवेकख्यातावपि बुद्ध्यात्मनोरशुद्ध्यादिभावनया विरक्तचित्तस्य संस्कारमात्रतानिरोधोऽसम्प्रज्ञातसमाधिः **योगः**, अभ्यासवैराग्याभ्याम् तन्निरोधः; वैराग्याद्विषयाभिमुख्यनिरोधो, विवेकदर्शनाभ्यासेन च तावत्संस्कारशेषताख्यो **"निरोधः"** इत्यादिना स क्लेशः चेतसः क्षयाक्षयविभावनया मूर्च्छनामात्रोपदेशाद्दाह एव। एवम् "स तु दीर्घकालनैरन्तर्यसंस्कारासेवितो दृढभूमिः"[4] व्युत्थानसंस्कारेण न बाध्य, इत्यपि शक्त्युच्छेदमन्तरेण पारिभाषिकम्। दृष्टान्तेऽपि प्रतिबन्धमात्रं मन्त्रादिवशात् तत्परिहारात्। न च वाच्यम् "यत्रत्वस्य सर्वमात्मैवाभूत्"[5] इति मुक्तौ सर्वस्यात्मतावन्मात्रताश्रवणात् "आत्मैवेदमग्र" इति श्रवणात् पूर्वमपि आत्मैव सर्वम् इति पुनः सर्वात्मतावस्थानसम्भवात् तत्रापि मुक्तिप्रच्युतिः इति। "इन्द्रो मायाभिः"[1] इत्याद्यागमैरेकस्यैव मायोपधानतो बहुरूपत्वाभि-

---

1. यो. सू. 2. 8.　2. Ibid 2. 9.
3. Ibid 2. 4.　4. Ibid 1. 4.
5. बृ. 2. 4. 14.　6. 2. 2. 19.

धानात् । तत्त्वविद्यया तद्दाहे पुनः स्वरूपस्थितस्य प्रच्युतेरसम्भवात् पूर्वमात्मैकत्वा-धारणस्य च मायाशबलकारणमात्रविषयत्वात् । विश्वमायानिवृत्तौ न मायान्तरं पूर्वतनं नवं वा सम्भोभवीति । तेन **साङ्ख्यस्यैव** मोक्षासम्भवो, **नास्माकम्** । न च प्रधानस्य विवेकोऽस्ति, येनैतं प्रत्यहं कृतार्थं न मया पुनः प्रवर्तितव्यम् इत्यालोच्य, पुनः प्रवर्तते । अतो धर्माधर्मवैराग्यावैराग्यैश्वर्यानैश्वर्याज्ञानाख्यै रूपैः सप्तभिरेवं बध्नात्या-त्मानमात्मना **प्रकृतिः** । सैव च पुरुषस्यार्थं विमोचयति एकरूपेण ज्ञानाख्येन इति प्रकृतेर्मुख्यौ बन्धमोक्षौ पुंस्युपचर्येते इति अपास्तावकाशम् । अष्टाङ्गस्योपचारनि-मित्तसंसर्गाभावाच्च ।

तथा **तार्किकाणामपि** भाविकसंसारकारणस्य विपर्यासादेः तत्त्वसाक्षात्कारे-णोच्छेदासम्भवान्न मुक्तिप्रत्याशा । अपरथा शुक्त्यादितत्त्वज्ञाने रजतादिवत् तदज्ञानस्यापि विलयात् अनिर्वचनीयवादप्रसङ्गः । ज्ञानमात्रनिवर्त्यत्वनियमस्यानिर्वचनीयलक्षणत्वोक्तेश्च । एतेन कर्मोच्छेदोऽपि व्याख्यातः ।

यापि **परिभाषा** योगप्रभावात् कायनिकायनिर्माणेन अगस्त्यसमुद्रपानवदशेषकर्म-फलोपभोगादचिरेणैव मुक्तिरिति, सापि कथञ्चिद्वर्तमानपरिपाक एव घटते । यदा तु ब्रह्माण्डान्तरादिविशिष्टदेशकालयोः कर्मणः परिपाकः, ब्रह्माण्डान्तरादेराहर्तुमशक्यत्वान्न तदुपभोगसम्भावना । आहरणे वा मूर्तद्रव्याणां समानदेशत्वासम्भवादेतद्ब्रह्माण्डादन्यत्र ब्रह्माण्डकल्पना निर्मूला स्यात् । शापकृताकालजरादि[1] च शापादिकर्मणः तत्कालफलत्वा-न्नोदाहरणम् । न खलु तत्र कालान्तरभावि कर्मफलाहरणम्, अतद्भूतव्याघ्रादिभावस्यापि शापादिजत्वेन स्मरणात् । "स यदा पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समु-त्तिष्ठन्ति" "मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके"[2] इति । "स एकदा भवति त्रिधा भवति पञ्चधा भवति"[3] इति च **श्रुतेः** सत्यसङ्कल्पादिगुणैः अर्चिरादिमार्गप्राप्तसत्य-लोकाभिव्यक्तेः तादृग् देहयोगी तत्रैवाभिव्यक्तियोग्यैर्विशिष्ट उपासको यदा समनस्केन्द्रिय-शरीरवत्तां सङ्कल्पयति, तदा तत्सम्पत्त्या जाग्रत्पित्रादिभिः क्रीडति ; यदा तु समनस्कता-मात्रं सङ्कल्पयति, तदा स्वप्नमनोरथवत् इत्यवगम्यते । तत्र भोगाधिष्ठानशरीराणि दारु-यन्त्रवच्चेतनावता अहंबुध्यनाघ्रातानि न भवन्ति । यदवच्छिन्न आत्मनि भोगः तदिन्द्रिय-

---

1. यथा ययातेः शुक्रशापात्
2. छा. 8.2.1.
3. छा 7.26.

आद्यमन्त्यावयवि शरीरम् इति लक्षणात् । अन्यथा शरीरत्वायोगात् तत्त्वदर्शनाच्च मनसो भौतिकत्वेन शरीरवत्सृष्टिसम्भवात् ।

यद्यप्यन्तःकरणभेदात् जीवभेद इष्टः, तथापि भिन्नाविद्याजन्यात् । उपासकात्मन एकान्तःकरणावच्छिन्नस्यापि विद्यासामर्थ्यात् व्याप्तिसम्भवात्, अनेकान्तःकरणावच्छेदेन तत्र तत्राहंग्रहेण भोगोपपत्तेश्च । एकोऽपि विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वशरीराण्याविशति इति **भाष्याच्च । नैयायिकमते** च मायातो धर्माणामनभ्युपगमाच्च तद्द्वाराऽनेकशरीराधिष्ठानेन भोगः सम्भवति, योगप्रभावान्मुक्तिनियमे नैकस्यापि मुक्तिरभूत् इति मुक्तानां मनांस्यधिष्ठाय योगिनो भोग इत्यपि वार्तम् ।

ये तु च सगुणब्रह्मोपासनात् सहैव मनसा परमेश्वरसायुज्यं व्रजन्ति, न तेषां महाभूतकार्यब्रह्माण्डस्रष्टृत्वं, तत्स्रष्टृत्वेन पूर्वसिद्धेश्वरान्वे[षे]षणजिज्ञासनपूर्वकत्वात्तदैश्वर्यस्य । "आप्नोति स्वाराज्यम्" "सर्वेऽस्मै देवा बलिमावहन्ति" "तेषां सर्वेषु लोकेषु कामचारो भवति" इत्यादि**श्रुतयस्तु** यस्सवितृमण्डलादिषु विशेषायतनेष्ववस्थितः परमेश्वरः तदायत्तामेव स्वाराज्यप्राप्तिं दर्शयन्ति । यत्कारणं स्वाराज्यप्राप्तिमुक्त्वाऽनन्तरं "आप्नोति मनसस्पतिम्" इत्याह । यो हि सर्वमनसां पतिः पूर्वसिद्ध ईश्वरः, तं प्राप्नोति इत्यर्थः ।

सर्वेश्वरवादिनामुपास्ये ब्रह्मणि विद्यमानानामपि सत्यकामादिगुणवदुपास्यत्वेनाविधानादुपासकानां प्राप्त्यभावात् । प्राप्तावपि प्रथमोपासकस्यैव हैरण्यगर्भवत् प्राप्तेः, स एव पूर्वसिद्धशब्दभाक्, तस्य सर्गकामनादि मायावृत्तिरेव । "सोऽकामायत भूयसा यज्ञेन भूयो यजेयेति"[1] इति भूयश्श्रुत्या अश्वमेधयजनं कृतवत एव हिरण्यगर्भात्मना संवृत्तस्य इच्छापूर्वविराडादिस्रष्टृत्वश्रुतेश्च । ततो योगिनामिच्छया लोकान्तरसञ्चारस्तत्र तत्राणिमाद्यैश्वर्यं भोगाधिष्ठाननिर्माणञ्च । तच्च नाञ्जसं **न्यायमत** इति न योगप्रभावादपर्यायेण सकलकर्मफलभोगान्मुक्तिः । योगप्रभावहीनानामपि **जडभरतादीनां** मुक्तिश्रवणाच्च न तद्बलात्कर्मक्षयोपपादनं युक्तिमत् ।

**अस्माकं** तु "भिद्यते हृदयग्रन्थिः" इत्यादिश्रुतेरभुक्तकर्मणोऽपि क्षयः । न चैवं प्रारब्धफलानामपि क्षयात् सद्योमुक्तिरेव स्यात्, न जीवन्मुक्तिः इति शङ्कनीयम्; यत उत्सर्गोऽयं ब्रह्माधिगमे पूर्वयोः पुण्यपापयोर्विनाश इति । तस्य श्रुत्यादिप्रसिद्धब्रह्मविद्वावहिरण्यगर्भादीनां महाकल्पादिजीवनावधारणात् प्रारब्धफलकर्मोपष्टब्धमाया-

वेशं प्रति कुण्ठीभाव इत्यपवादः । अत एव भोगानुवृत्तिबीजकर्मवत् ब्रह्मात्मत्व-साक्षात्कारस्य आप्रायणमनुवृत्तिकारणज्ञानार्थयज्ञादिकर्मापूर्वशेषानुवृत्तिः इत्यपरोऽपवादः । **अत एव** ज्ञानप्रमोषसम्भवाज्जीवन्मुक्तस्य कर्मलोपेन उत्तरसंसारशङ्काऽपास्ता । "अथ सम्पत्स्य" इति श्रुत्या चास्मदादेर्देहादस्मादूर्ध्वं कैवल्यमवश्यम्भावि, "ज्ञानमप्रतिघं यस्य" इत्यादिशास्त्रादधिकारिणां ज्ञानाप्रमोषावधारणाच्च ।

तथाऽपि सति तत्त्वसाक्षात्कारे निरुपाधिकाहङ्कारादिभ्रममूलानुवृत्तिर्न युज्यत इति चेत्, **मैवम्**; "भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुतिविरोधेन सामान्यतो दृष्टा-नवतारात् । वैदिककर्मवत् वैदिकज्ञानस्यापि विचित्रशक्तित्वं वेदवादिभिरनपनोद्यमेव । तस्मात् सह ब्रह्मसाक्षात्कारेण मायावेशानुवृत्तिर्न दुष्यति । अपान्तरतमा वेदाचार्यः पुराणर्षिः **कृष्णद्वैपायनो**ऽभूत् । कृतब्रह्मसाक्षात्कारोऽपि **सनत्कुमारश्च स्कन्दस्त**-दाधिकारिकत्वात् यावदधिकारं प्रारब्धफलकर्मवशादेव देहान्तरं, कर्मणः सहजन्मादि-हेतुत्वप्रसिद्धेः । न च स [गु] णोपास्तिकर्मणस्स्वर्गभोगादस्य शेषात् ततो हीनजन्मा-नुपपत्तिः; ऐश्वर्याद्यविघातात्, तन्मूलत्वानिश्चयात् "सर्वेषु लोकेषु कामचार" इति **श्रुतेश्च** चन्द्रोत्तीर्णानां तद्दृष्टेर्न तच्छेषादावृत्तिः इति **सिद्धान्तो** न भज्यते ।

"ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः[1] ॥

निर्गुणादेव साक्षात्कारादविद्याकामकर्मतत्कार्यजन्मादिप्रहाणिः । सगुणध्यानाच्च "**विराट्सूत्रात्मापेक्षया तृतीयं पारमेश्वरं** विश्वनिर्माणाद्यैश्वर्यमनुभूय **कैवल्यम्**" इत्येतदाह श्रुतिः ।

येषां स्वतो विभक्ता ब्रह्मणो जीवा येषां चाविभक्ताः स्वतो ब्रह्मणैव क्रीडया विभूतिदर्शनेच्छया वा स्वातन्त्र्यख्यापनार्थं चाविभक्ताः, तेषामीश्वरस्य स्वतन्त्रत्वादेव **सेश्वरसाङ्ख्यपैलुकपैठराणां वेदान्तैकदेशिनां** च पुनः कोपो न ह्यनन्तमुक्तानपि निवारयेत् । न च श्रुतिस्मृतिलक्षणा तदाज्ञैव तं वारयेत्, साङ्कुशत्वान्निरङ्कुशत्वस्वातन्त्र्य-व्याकोपात्, आज्ञाया एव निरङ्कुशनियामकत्वात् । दृश्यन्ते च स्वाज्ञाभङ्गमाज्ञान्तरं च कुर्वाणाः स्वतन्त्राः केचित् ।

---

1. श्वे. 1. 11.

ऐकभविकमोक्षवादखण्डनम्

**अथ** प्रायणं सर्वकर्मणां व्यञ्जकम्, तानि च सर्वाणि मुमुक्षुदेहमारभन्ते। तत्र काम्यप्रतिषिद्धक्रियावर्जनात् नित्याद्यनुष्ठानात् प्रत्यवायानुदयात् उत्तरशुभाशुभदेहारम्भाभावात्, प्रारब्धकर्मणां च भोगेन क्षयात् वर्तमानदेहपाते कैवल्यमवश्यम्भावि इति मतम्, **तदप्यौत्प्रेक्षणिकमेव**; श्रुत्याद्यदर्शनात् आम्नायसिद्धानेकविजातीयदेहभोग्यफलानां कर्मणामेकदेहारम्भकत्वानुपपत्तेश्च। प्रायणस्य च व्यञ्जकत्वे युगपद्विरुद्धफलानां कर्मणां युगपदेव स्वफलदानं तेषां प्रसज्येत। क्रमेण चोपलभ्यते। प्रबलस्य प्रथमं कार्यारम्भे सप्तजन्मादिप्रारम्भोऽपि इति व्यर्था प्रायणस्य व्यञ्जकत्वकल्पना। कल्पने चामुमुक्षोरपि मोक्षः स्यात्। कर्मानधिकृतस्य निश्चितः, कर्माधिकारिणः प्रमादात् काम्यादिसम्भवात् सन्दिग्धश्च। अतः क्रियाजत्वे नित्यत्वहानात् नेयं कल्पना।

न च प्रदीपस्येव निर्वाणान्मोक्षः, "तस्य तायिन" इति वचनात्, व्यवहारसिद्धसोपप्लवविज्ञानसन्तानात्मकमुमुक्षोरुच्छेदो मोक्षः; मुच्यमानाभावे मोक्षानिरूपणात्। न शून्यमेव व्यवहारसिद्धमुमुक्षुभावं ब्रह्मैव विमुच्यते, तादृशस्य वन्ध्यापुत्रादेर्व्यवहारसिद्धमुमुक्षुभावस्यापि अप्रसिद्धत्वात्। **अत एव** तत्पूर्वको विशुद्धविज्ञानोदयोऽपि न मोक्षः, तत्राप्युपप्लुतसन्तानदेहस्य मुमुक्षोरुच्छेदेन मोक्षार्थानुपपत्तेः। अन्त्यक्षणानुपपत्तेश्च न सन्तानोच्छेदः। अर्थक्रियायां तस्यान्त्यत्वानुपपत्तेः; तदभावे च तस्यासत्त्वेन पूर्वपूर्वासत्त्वे सन्तानस्यैवासत्त्वात् कस्योच्छेद उदीयात्? **अथ** सर्वज्ञसन्ताने निरुपप्लवत्वेन सजातीयत्वेन स आरभते, तेन सत्त्वं स्वसन्ताने चान्त्यत्वम्, **तन्न**; आरभ्यारम्भकभावेन सन्तानभेदानुपपत्तेः। **अथ** सर्वज्ञज्ञानं प्रत्यालम्बनतयैव जनको, नोपादनतया, समनन्तरप्रत्ययस्तूपादानम्, तेन न तुल्यजातीयत्वेन सन्तानानुवृत्तिः, **तन्न**; यतो निरन्वयविनाशाभ्युपगमे कारणान्वयाभावान्नाभिन्नकारणस्वभावेन तुल्यजातीयत्वं इति। जनकतामात्रेण तुल्यत्वे न सन्तानोच्छेदः। तस्मात् **अस्मत्पक्ष एव रमणीय** इति **प्रयोजनसिद्धिः**॥

इति प्रयोजननिरूपणम्

---

## अधिकारिनिरूपणम् ।

**अथ अधिकारी** यथोक्तविचारे विचारणीयः ।

श्रुतिस्तावत्

"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठम् ॥"[1]

इति ज्ञानार्थश्रवणाय ब्राह्मणं गुरुपादोपसर्पणं कारयति । तस्मादौपनिषदात्मज्ञानादेः स्वतन्त्रनित्यमोक्षपुमर्थलाभः, "तमेव विदित्वा" इत्यादिवेदात् "**पुरुषार्थोऽतश्शब्दादिति बादरायण**[2]" इति **व्याससूत्रात्** । **अतः** यथोक्तज्ञानात्, **शब्दादुदाहृत**वेदात् ।

अत्र ब्राह्मणस्तावत्परीक्षणीयः । तत्र वृत्तं ब्राह्मणलक्षणम् इति वदन्तः प्रष्टव्याः कि[न्त]ज्झिद्विशेषणं वृत्तम् तथा, यद्वा शमादिव्यावर्तकम्, वैदिकोपसर्जनम् वा ब्राह्मणव्यवच्छेदकम् अथवा इति । ब्राह्मणशब्दार्थोऽपि जातिर्वोपाधिर्वा । लक्षणं च जातिव्यञ्जकम् वा दानादिपालता वा ? तत्र प्रथमद्वितीययोः शूद्रादेरपि ब्राह्मणशब्दस्य जातिपरत्वे ब्राह्मणत्वप्रसङ्गः ; तृतीये क्षत्रियवैश्ययोरपि ; तथा च—"ब्राह्मणोऽस्य मुखमासीत् "बाहू राजन्यः"[3] ब्राह्मणो बृहस्पतिसवेन यजेत "राजा राजसूयेन" सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः"[4] ब्राह्मणक्षत्रियविशां कर्माणि प्रविभक्तानि"[5] इत्यादि श्रुतिस्मृतिलक्षणविभागप्रामाण्यव्याकोपः प्रसज्येत । अथ ब्राह्मणे ब्राह्मण्यादुपाधेर्ब्राह्मणशब्दः तर्हि "अष्टवर्षं ब्राह्मणमुपनयीत" इति श्रुतिबाधः । न खलु पचिक्रियायोगात् प्रागेव पाचको भवति । अथ भाव्युपाधिमपेक्ष्यायं प्रयोगः, तर्हि राजन्यवैश्ययोरपि अयमेवोपनयनकालस्स्यात् तयोरपि तद्भावादनेन ब्राह्मणशब्देनाभिधानात् । तथा च कालभेदवचनं बाध्येत । **अथ** अग्रजन्मनि रूढो ब्राह्मणशब्दः, तर्ह्यलं वृत्तलक्षणेन । ब्राह्मणवृत्तं च सन्न्यासादि तज्जातेरेव इति । चतुर्थेऽप्यनिष्टापत्तिः । अतो ब्राह्मणत्वयोग एव तल्लक्ष्म ।

---

1. मु. 2. 12.
2. ब्र. सू. 3. 4. 1.
3. पु. सू. 1.
4. मनु. 1. 93.
5. भ. गी. 18. 41.

अतो वृत्तस्थस्य हीनस्यापि व्यपदिश्यमानं ब्राह्मणत्वं पात्रतैव । एवं ब्राह्मण एव ब्राह्मण-वृत्त[ा]सम्पन्नोऽब्राह्मण इत्यत्रापि । अतो ब्राह्मणत्वयोग एव तल्लक्ष्म ।

ननु तथाभूतोभयजन्या ब्राह्मणत्वव्यञ्जिका व्यक्तिर्विवक्षिता, अन्यतरजन्या वा ? आद्ये व्यासादीनामब्राह्मणत्वम् । द्वितीयेऽपि मातृतस्साजात्यविवक्षायां पितृतस्तस्यां धृतराष्ट्रादीनामग्रजन्मत्वम् । किञ्च ब्राह्मण्यां ब्राह्मणेन जात इत्येतन्मात्रं प्रत्यक्षैक-गम्यम् न ह्यश्वाश्वतर्यादिवदन्यतरजन्यत्वचिह्नं निर्णायकमस्ति । जननी च लज्जादिपरवशा चेन्नाचष्टे, तदा कथं विवेकः ; येन ब्राह्मणप्रेरणा स्यात् । न च व्यभिचारासम्भवोऽनादौ संसारे, कुण्डगोळकादिवर्णनवैफल्यात् ।

"ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा ।
शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः ॥"

इति स्मरणाच्च । एवं चैतदुपपन्नम् यदाह—

"अनादौ किल संसारे निर्बाधे मकरध्वजे ।
कुले च कामिनीमूले का जातिपरिकल्पना ॥"

इति । अतो जातिलक्षणपक्षेऽपि "ब्राह्मणो निर्वेदमायात्"[2] "ब्राह्मणमुपनयीत" इति "ब्राह्मणो वसन्तेऽग्नीनादधीत"[3] इति "ग्रीष्मे राजन्यश्शरदि वैश्य" इति शूद्रस्या-प्युक्ताग्न्याधानश्रवणं वेदाधिकारप्रयोजनम्, तदा "ब्राह्मणो यजेत" इत्याद्यनुपपन्नम् ; अत्रोत्तरम्—

अस्ति तावत् ब्राह्मणस्य यथाक्रमं वर्णत्रये पत्नीपरिग्रहाभ्यनुज्ञा, अस्ति चास्यां जायमानस्तव इति समयबन्धेनापि विवाहविधानम् । तत्र परिणीतायाः पतिगोत्राचरणादि-वत् भाषापुत्रस्य विवक्षितजातिः विधिबलादेव । ततः क्षत्रियाज्जातस्य व्यासादे-र्धृतराष्ट्रादेश्च ब्राह्मणत्वं क्षत्रियत्वं च न विरुध्यते । विश्वामित्रस्य च ब्राह्मचरु-प्रसूतत्त्वादमोघसङ्कल्पदेवताप्रसादाच्च स्थाणुपल्लवितत्ववत् ब्राह्मणत्वम् । वृत्तस्थतामात्रेण जातिसङ्क्रमे तत्पुत्रपौत्रादीनां विनिर्बाधं ब्राह्मणत्वं देवताप्रतिष्ठितानामिव स्यात् । व्यभिचारश्च

1. मु. 2. 12.
2. तै. ब्रा. 1. 1.

"युगमहिम्ना दण्डार्हे" इत्यादिना वा वार्यते । क्वचिदपवादेऽपि ज्ञातकुण्डगोलवर्जन-सम्भवान्न दोषः । ऋषिवंशानां च निर्बाधत्वात् तदुद्देशेन श्रुतिप्रवृत्तिरपि । अतो ब्राह्मण-सिद्धौ कुशलस्यापि वर्णगुरुत्वात् तस्य गुरुपादोपसर्पणं, सम्प्रदायस्य प्रामाणिकत्वाय युक्तमेव । "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठां अथर्वाय ज्येष्ठपुत्राय प्राह"[1] इति गुरु-पारम्पर्यश्रुतेः ।

"आचार्यदेवो भव[2]" "गुरवोऽनुवृत्तगुरव[3]" इति वेदाचार्यवचोभ्यामपि "ब्रह्मनिष्ठम्" इति गुरूणां निष्ठासङ्कीर्तनेन चात्रास्यावधानोपदेशः "एष पन्था एतत्कर्म एतत् ब्रह्म" इति "तत्सत्यम् तस्मान्न प्रमाद्येत्तन्नादीयान्नह्यत्यायन् पूर्वे येऽत्यायंस्ते पराबभूवुः"[4] इत्यैतरेयकश्रुतेश्च, "न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे"[5] इति काठक-श्रुतेश्च । 'परीक्ष्य' इति कौशलं गुरूणामपि चमत्कारकरमुपदिश्यते । तथा च बृहदारण्यकम् —"अत्र ह याज्ञवल्क्यो बिभयाञ्चकार मेधावी राजा सर्वेभ्यो मान्तेभ्य उदरौत्सीत्"[6] इति "त्वादृङ्नो भूयान्नचिकेतः प्रष्टा"[7] इति कठश्रुतेश्च । अकुशलाय सर्वज्ञोऽप्युपदिशन् विफलोपदेशो भवति । यथा शक्रविरोचनाभ्यां "य एषोऽक्षिणि पुरुषो दृश्यते"[8] इत्याद्युपदिशति । "स लोकेश्वरः" "लोकान् कर्मचितान्"[9] इति विशेषणादभ्युदयात्मकत्वं गम्यते । कुशलेन बुभुत्सावता तत्र निर्देशः कार्यः —

"श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते[10] ॥"

इति काठकश्रुतेः मोक्षाभ्युदयसाधेने श्रेयःप्रेयसी, मनुष्यश्चाधिकारी ।

अथवा एवं व्याख्या-मनुष्यलोकादारभ्य यथा सङ्कल्पं कुर्वाणः क्रियाभेदान् आब्रह्मलोकाच्छतगुणोत्कर्षेण श्रूयमाणानन्दार्थी तान् कर्मचितान् लोकान् परीक्ष्य

---

1. मु. 1. 1.
2. तै. 1. 11.
3. बृ. वार्ति. 1. 2.
4. ऐ. आ.
5. कठ. 2. 5.
6. बृ. 4. 3. 33.
7. कठ. 2. 9.
8. छा. 8. 7. 4.
9. मु. 2. 12.
10. क. 2. 2.

समन्तादवलोक्य "एषोऽस्य परम आनन्द" इति श्रुतौ पूर्वोदितेषु स्वानुभवलब्ध-विश्वासतया दृढजातश्रद्धः तमानन्दं कामयमानो ब्रह्मलोकस्थितक्षुद्रेषु निर्वेदवानुपसर्पति गुरुम्" इति।

"[1]यस्यैतेऽष्टाचत्वारिंशत् संस्काराः गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनाम-करणबहिर्निष्क्रामणान्नप्राशनचूडाकरणोपनयनमेधाजननानि, अष्टौ वेदव्रतानि "स्नानं सहधर्मचारिणीसंयोगः; पञ्चानां यज्ञानामनुष्ठानम्, सप्त सोमसंस्थाः सप्तपाकसंस्थाः अनश्नन् संहिताध्ययनम्, प्रायणकर्णजपोत्क्रमणौर्ध्वदेहिकभस्मसमूहनास्थिसञ्चयन श्राद्धानि।"

"अष्टौ गुणा दया क्षान्तिश्शौचमायासवर्जनम्।
अनसूयाथ माङ्गल्यमकार्पण्यास्पृहे तथा॥"

इति स्मृत्युक्तसंस्कारवतः, "स ब्रह्मणः सायुज्यं सलोकतां गच्छति" इति फलाभि-धानादपि कर्मभिर्ब्रह्मलोकगतस्य ब्रह्मविचारः सम्भाव्यते। ततो नात्राधिकारिविधुरा मीमांसा प्रणेतव्या इति युक्तमेवमपि। एवमेव तु युक्तम्; शुद्धचेतसः कस्यचित् पुरुषधौरेयस्याप्रजन्मनस्साङ्गोपाङ्गवेदाध्ययनवतः सहसा जातपरमानन्दानुरागस्यानुक्रमणार्थं अत्रापि मीमांसा प्रणेतव्यैव; यतः

"यथा काष्ठमयो हस्ती, यथा चर्ममयो मृगः।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति॥"[2]

इति मनुनाऽनध्ययनस्य निन्दितत्वाच्च।

अथ कथं चेतसः शुद्धिः? नित्यादिकर्मणः प्रत्यवायपरिहारः फलम्, यद्वा पितृलोकादि; सर्वथाऽपि न चित्तशुद्धावुपयोगः; अपरथा नित्यानां भोगार्थानामपि शुद्धिप्रधानत्वे तत्सौलभ्यात् प्रायश्चित्तस्यापि तत्प्रसङ्गाच्च भूयानर्थो मुमुक्षूणाम् इति;

"मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये"[3]

इत्यादि बाध्येत। अविशुद्धचेतसश्च मुमुक्षानुदयात् वेदानुवचनादौ विविदिषार्थप्रवृत्ते-

---

1. गौ. ध. सू. 1. 8.
2. मनु. 2.157.
3. भ. गी. 7. 3.

रप्यनुदयो, दूरत एव वेदार्थश्रवणादौ प्रवृत्तेः । न च परमानन्दरागोऽपि, येन परवशीकृतः प्रवृत्तिमारभेत । तस्मादधुना शुद्ध्यर्थकर्मणा मुमुक्षा, तया च तद् इति परस्पराश्रयग्रस्तम् ;

अत्र भण्यते :—यत्तावन्न नित्याद्यन्तर्गतम् नापि कामकषायप्रवर्तितम् , नापि प्रतिषिद्धं कर्म, यथा भिक्षात्रयमावश्यकम् ; तदुपरि स्वाहारमध्यादधिकदानादि तस्य चित्तशुद्धिपर्यवसानमेवोचितम् । स चाधिकशुद्धये मुमुक्षाङ्कुरमुद्भावयति, परमपि परमेश्वरार्थं कर्म कारयति । तदुक्तम्—

" तस्यैवं दुःखतप्तस्य कथञ्चित्पुण्यशीलनात् ।
नित्येहाक्षालितधियो वैराग्यं जायते हृदि ॥ "

इति । विविदिषाश्रुतिर्विहितकर्मणामावश्यकतत्फलात् । एवमेव कृतानां चानावश्यकतत्फलत्वात् इति कथञ्चित् इत्युक्तम् ।

ननु—

" कुर्यात् क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम् ।
एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम् ॥ "

इत्युक्तत्वात् ' विविदिषन्ति ' इति वर्तमानापदेशात् कथं विधिलाभः ? नायं लट्प्रत्ययान्तशब्दः, किन्तु लेट्प्रत्ययान्तः ; स च विधौ " लिङर्थे लेट् " इति स्मरणात् रूपसादृश्येऽपि प्रत्ययभेदादर्थभेदो न दोषाय ।

अथवा ब्राह्मणस्य सत्त्वगुणप्रधानत्वात् जन्मनैव शुद्धबुद्धिता । दृश्यते च सत्यकामादेः । " तं ह कुमारं सन्तं दक्षिणासु (यज्ञियगोषु) नीयमानासु श्रद्धा विवेश "[1] इति श्रुतेश्च । निमित्तान्तरात्तु क्वचिदन्यथात्वम् । एतदपि ब्राह्मणश्रुत्या दर्शितम् । अथ ईदृशी लोकपरीक्षा—

यदि लोका भुवनानि, तदेकदेशा वा, तन्निवासिजना वा; परीक्षणञ्च तेषां प्रत्येकलक्षणपरिशोधनम् ; तत्कल्पायुषाप्यशक्यम् । अथ कथञ्चित्सङ्ग्राहकधर्मात्मनावधारणं,

---

1. क. 1. 12.

तत् किं भौतिकत्वेन, प्रकृत्यात्मना वा मिथ्यात्वेन वा; त्रिधाऽपि न निर्वेदोदयं पश्यामः । **निर्वेदो** हि वीतरागता, **वेदनं** वेदस्तदभावो वा ? नाद्यः ; तत्रोक्तहेतुः साध्यश्चन्दनादेर्भौतिकत्वज्ञानेऽपि रागदर्शनात् । अणिमाद्यैश्वर्यस्य प्राकृतत्वज्ञानेऽपि तथा । प्रतीपादिव्यामोहकेन्द्रजालादेर्मिथ्यात्वज्ञानेऽपि च । द्वितीयद्वितीये निर्णयज्ञाने ज्ञानाभावो दृष्टविरुद्धत्वाद्दुरनुष्ठेयः ; । यदि वीतरागतैव निर्वेदः , स च व्यामोहकारिणस्स्वस्य मिथ्यात्वनिश्चयाधीनः ; नैवमपि, तथाभूतस्यापि चित्रकामिनीस्तनोन्नत्यादेर्मिथ्यात्वेन निश्चयेऽपि प्रेक्षणादिरागदर्शनात् ।

अथ संपतत्यनेनास्मादमुं लोकं फलभोगाय इति **सम्पात** इष्टादिकर्म । बह्वायासं कर्म कृत्वाऽपि चन्द्रलोके कर्मभूमाविव देवानामुपचारपरः परतन्त्रः फलं भुक्त्वा तदन्ते न भोगायतनस्थूलदेहरहितो भोगान्तदर्शनजशोकाग्निता [सृ]त्त्वा व्योमादितुल्यः कालं क्षिपन् वृष्टिद्वारेण जीवान्तरभोगाधिष्ठानव्रीह्यादिदेहेन प्रवासिवत् संसर्गमनुभूयानुपभुक्तरमणीयादिकर्मभोगाय व्रीह्यादेरतुर्देहं प्रविश्य रेतोद्वारयोनिगर्भाद्यनुभवति इत्यालोचनात् निर्वेदोदयार्थः " यावत्संपातमुषित्वा "[1] इत्याद्याकर्णनात् द्यां प्रति दुःखमयत्वभावनया रागो विरमति दारादीन् प्रति च दृष्टदोषादेव । बाह्या अप्याहुः--—

" सर्वं दुःखम् " इत्यादि ।

**तर्हि** दुःख एव लोके व्युत्पन्न आनन्दशब्दो ब्रह्मणस्तदात्मतामात्रमुपदिशन् वा कथं मोक्षायोत्थापयेत् प्रेक्षाकारिणम् । यदि च कल्पायुषामप्यानन्दस्य पृथग्भावत्वे सत्यैवैषा भावना ततोऽप्युक्तानन्दलाभप्रारम्भाय, तदाऽपि सन्ततमनुभूत (य) प्रमोदभरनिदानवृन्दारकवनितादौ दुःखमयत्वाभावात् तथा दुस्सम्पादतया भग्नोद्यमानामयतनानामिव का कथा वैराग्यस्य । अत्रापि ब्राह्मणश्रुत्यैव दत्तमुत्तरम् " ब्राह्मणो हि शाश्वतधर्ममूर्तिः " [इति] । यथा तद्विरुद्धाधर्मकार्यरागादेवोद्विजन् मानसमेव धर्ममनुवर्तयन् —

" श्रुतिः स्मृतिस्सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुस्साक्षाद्धर्मस्य लक्षणम् ॥ "

इति सप्रमाणकं ब्रह्मभावमनुभूयैव निरुद्योगो भवति । तदाह स्म **मनुः** :—

---

1. छा. 5. 10. 5.

"उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥"[1]

इति । तस्य च लोकेषु दुःखमयत्वभावनाया ईषत्करत्वाद्युक्तो निर्वेदः । तादृशपरिसङ्ख्यान-साध्यो हि रागविरोधिचेतोवृत्तिभेदो वैराग्यम् । कर्मचितान् इति कर्मणो ब्राह्मण्या-द्यध्यासमूलत्वात् लोकानामविद्यात्मकत्वेन सन्याससंस्कारपूर्वकश्रवणादिफलत्वज्ञानहेयत्वेन ज्ञानार्थमुद्योजयति श्रुतिर्निर्वेदस्य त्यागफलत्वात् ।

ननु नैवं तथा निर्विण्णोद्गारः—

"हतो भ्राता हता माता हतः काञ्जिकया पिता ।
तथाऽप्येनां स्वगोत्रघ्नीं निन्दामिच पिबामि च ।"

इति । तथा वेदेऽपि, ब्रह्मविद्याचार्यस्य याज्ञवल्क्यस्य "नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयम्"[2] इत्युद्घोषपूर्वकं गोपरिग्रहभूपालोपदेशकरणाद्युदाहरणात्, "चर्मखण्डं द्विधा भिन्नम्" इत्यादिनिर्वेदवर्णनपरस्य वेदान्तसूत्रकृतोऽप्सरोदर्शनमात्राद्रेतस्कन्दनपुत्र-विलापाद्यभिलापाच्च । अतो धूर्तप्रलाप इव त्रयीमार्गोऽपि प्रतिभाति ।

**नैतत्सारम्**; नाचिकेतप्रभृतीनाम् —

"देवैरत्रापि विचिकित्सितं पुरा नहि सुविज्ञेयमणुरेष धर्मः" ।
"अन्यं वरं नचिकेतो वृणीष्व" इत्यादिना दुर्लभवरैः प्रलोभ्यमानानामपि
"देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुविज्ञेयमात्थ" ।
"वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥"[3]

इत्यादिना मोक्षमार्गादप्रस्खलनश्रवणात् । **याज्ञवल्क्यस्य** च "एतावदरे खल्व-मृतत्वम् इति होक्त्वा याज्ञवल्क्यः प्रवव्राज[4]" इति पारिव्राज्याम्नानात् । **व्यासस्य** च वासुदेवस्यैव भगवल्लीलावतारत्वादप्रतर्क्यचारित्राविरोधात् । अयं च साधकानामुपदेशो न सिद्धानाम् इति न कश्चिद्विरोधः । न च 'एतया रौद्रेष्ट्या निषादस्थपतिं याजयेत्' इति श्रुतिबलात् निषादस्यैवाधिकारवत् 'ब्राह्मणो निर्वेदमायात्'[1] इति विशेषादेव

1. मनु. 1. 98.
2. बृ. 3. 1. 2.
3. क. 1. 1. 22.
4. बृ. 4. 5. 15.

क्षत्रियादेरनधिकारः, देवर्षीणां निर्वेदपूर्वकब्रह्मविद्याश्रवणात् "त्यजतैव हि तज्ज्ञेयम्" इति श्रुत्यन्तराच्च (अ)त्यागिनश्चावश्यकं ब्रह्मश्रवणम् इति ज्ञानफलत्वात् ध्रुवं त्यागेनामृतत्वम्। "अरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छम्"[1] रौति जीवब्रह्मणोरैक्यं इति रुद्वेदान्तभागः तत्पराङ्मुखान् सालावृका गृहपालसारमेयाः तेभ्यः प्रायच्छम् इति इन्द्रवाक्याच्च।

ननु किमनेन क्लेशसङ्कुलकलत्रादित्यागानुष्ठानेन यथाकामं वर्तमानानामपि वाराणसीमरणमेवानुष्ठेयम्, तत्र हि शम्भूपदेशभक्त्या ज्ञानान्मुक्त्युपपत्तेः। "अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षी भवति" इति जाबालश्रुतेस्तारकं संसारसागरात् प्रणवः। (प्रमाणतं वा) केचिदेतदेव ब्रह्म इत्याहुः।

प्रणवो हि "अकारो वै सर्वावाग्[2]" "वाचारम्भणं च विकारो[3]" व्योमादि जगदर्थरूपं नामधेयमेव इत्यकारः सर्वात्मको गम्यते। अकारस्य चैकदेशत्वात्। किमुत न्यायेन सर्वात्मकता "एतद्वै सत्यकाम परश्चापरं च ब्रह्म यदोङ्कार[4]स्सर्वात्मक" इति श्रुत्यन्तरादवगम्यते। न च ओङ्काराभिधेयस्य ब्रह्मणस्सर्वात्मकत्वम् तदभिधाने, तत्रोच्यते—ओङ्कार इति कारप्रत्ययान्तत्वादर्थपरत्वाभावात् "वर्णात् कारः[5]" यत्र वर्णस्वरूपमेवाऽभिधेयत्वेन विवक्षितम्, तत्र केवलात् समुदिताद्वा वर्णात् परः कारप्रत्ययो भवति इति स्मरणात्। एवकार इति समुदायात् परस्यापि दर्शनात्। तस्मादकारादिवर्णसमुदायात्मकात् प्रणवात् परकार(ल्यु)प्रत्ययस्य श्रवणादोंकार इति तस्यैव सर्वात्मकत्वं गम्यते। सर्वं च वाच्यं वागनुविद्धमेव स्फुरति 'किं संज्ञकोऽयम्' इत्यादावपि सामान्यानुवेधोऽस्त्येव। निर्विकल्पकेऽप्येवम्। तच्च सामान्यरूपमनादिनिधनं कूटस्थस्फोटाख्यं ब्रह्मैव।

तदयुक्तम्; "अशब्दम्"[6] इत्यादिश्रुतेः। शब्दार्थयोरभेदे च पृथक्त्वादिवत् कुम्भादिषु शब्दत्वजातिः श्रोत्रग्राह्यत्वं च स्यात्। अर्थस्यापरोक्षे संज्ञायास्स्मर्यमाणत्वाच्च नानयोरैक्यम्।

---

1. कौ. 3. 1.
2. ऐ. आ. 2. 3. 6.
3. छा. 6. 3.
4. प्र. 5. 1.
5. पा. सू. वा. 3. 3. 103.
6. क. 1. 3. 15.

ससम्बन्धमपि भास्वररूपवदज्ञानतमोनिरासि, किमु वाच्यम् प्रमारूपं तथा इति। स्वरूपज्ञानं च प्रमात्वनपेक्षत्वात् साधारणम्।

ननु अनात्मा सर्वोऽपि मायामरीच्युदकादिवन्न वस्तु; केवलमात्मवस्त्वेव परमार्थ इति विवेकवतो ब्रह्ममीमांसायामप्यधिकारात् शास्त्रेणापि अस्यैवार्थस्य साध्यत्वात् कथं न वैयर्थ्यम् तदारम्भस्य; मैवम्, आपातपरोक्षापरोक्षविभागोपपत्तेः। तत्र च परोक्षविवेकस्य यद्यपि अनात्मप्रपञ्चे प्रवृत्तिवारकत्वम्, तथाऽप्यस्योच्छेदहेतुत्वाभावात् तदर्थतत्त्वसाक्षात्काराय यतमानस्यानुग्रहाय शास्त्रारम्भोपपत्तेः, परोक्षविवेकस्यापि तारतम्याच्च; प्रपञ्चश्च चन्द्रद्वित्वादिवदनिर्वाच्यत्वात् तत्त्वसाक्षात्कारेण निवर्तत एव। न च अनिर्वाच्यत्वमेवाप्रसिद्धम्। कविनाऽपि तमोवाय्वादिवर्णनव्याजेन तत्प्रसिद्धेर्दर्शितत्वात्—

"व्यसरन्नु भूधरगुहान्तरतः
पटलं बहिर्बहुलपङ्करुचि।
दिवसावसानपटु नभसो
बहिरेत्य चाधिकमभक्तगुणः॥"

"किमलम्बताम्बरविलग्नमधः
किमवर्धतोर्ध्वमवनीतलतः।
प्रससार तिर्यगथ दिग्भ्य इति
प्रचुरीभवन्न निरधारि तमः॥"

इति। प्रावादुकाश्च प्रपञ्चस्येतरेतराभिप्रेतत्वादिप्रतिषेधेन दाडिमीफलमिव स्वरूपं निष्कुलीचक्रुः। तदाहुस्तत्र भवन्तो गौडपादाः :—

"स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्।
परस्परं विरुध्यन्ते तैरयं न विरुध्यते॥"

इति। तथा हि—

विशेषात्मकमेव जगत् इति **बाह्यवादिनः**। तेषु कल्पितमेकत्वं सामान्यव्यवहारं प्रवर्तयति द्वयमप्यकल्पितं पृथक् पृथक् वस्तु इति **वैशेषिकादयः**। सामान्यं विशेषात्मकं एकं वस्तु इति **कौमारिलाः** अनैकान्तवादिनश्च।

ननु तर्ह्यात्मनोऽप्यनिर्वचनीयत्वम् प्रावादुकैर्विरुद्धरूपेण निरूपणात्, **मैवम्**; भेदकल्पनाया अभेदोपादानत्वात्। धर्मिप्रतियोगिनोर्व्यासज्य वर्तते चेद्भेदः, तदा प्रत्येक-

गतमेकत्वं तत्सत्तोपादानं; यदि प्रतियोगिनमनपेक्ष्य धर्मिण्येव वर्तेत, तदा धर्म्यैक्यं तदुपादानम् । न च नित्यभेदे प्रमाणमस्ति दृश्यते चैकस्मिंश्चन्द्रे भेदसमारोपः इति अभेदोपादानक एव सः अनिर्वाच्यस्याधिष्ठानत्वानुपपत्तेश्च । आत्मनश्चाभेदात्मकत्वान्नानिर्वाच्यत्वम् ।

ननु यथा मुखाद्यभेदस्य प्रसिद्धं दर्पणादिषु प्रतिमुखादिभेदोपादानत्वम्; न खलु तत्र मुद्रायोगात् प्रतिमुद्रावन्मुखाद्याकारः; तथा सति समानपरिमाणत्वम् मुखाद्यसन्निधानेऽपि स्थितिश्च स्यात् । परिणामेऽप्येवम् । अतोऽनिर्वचनीय एव तत्र मुखाद्याकारो भेदश्च । तथा वनादौ भेदोपादानाऽभेदकल्पना, तत्र कुतो निर्णय इति,

**उच्यते**—भेदस्यैवाधिष्ठानत्वे परमाणोरभेदसमारोपाधिष्ठानम् न परमाणुद्वयं एकसिध्यपेक्षत्वात् द्वयस्य । तयोरपि द्वयसिद्धिपूर्वकत्वात्; किन्तु तदवयवा वक्तव्याः । तेषामपि प्रत्येकमेकत्वसमारोपे तदवयवाः, तत्राप्येवम् इत्यनवस्थितेः परमाण्वैक्यस्य समारोपासिद्धेः । अनन्तावयवत्वे चोक्तनीत्याऽणोरपि पर्वतपरिमाणत्वप्रसङ्गात् । भेदश्च व्यावृत्तिरूपः । स च व्यावर्त्यव्यावृत्तिमत्परतन्त्रः । स्वरूपैक्यं च न तथा । तस्मान्न सर्वत्र भेदस्याधिष्ठानत्वम् ।

यः पुनः पादपेषु एकं वनम् इति समारोपः सन्मूलाधिष्ठानस्यैक्यविघाती; तथा हि—"सन्मूलाः सौम्येमास्सर्वाः प्रजा" इति सदेकरसं ब्रह्म महाभूतभेदग्रामाधिष्ठानं श्रूयते; तथा 'त्रीणि रूपाणीत्येव सत्यम्' इति भूतभेदस्य स्वकार्यभेदाधिष्ठानत्वम्, तत्कार्याणां च पादपानामभेदभ्रमाधिष्ठानत्वम् । अतो जीव इव स्वप्नाध्यासपरम्पराया ब्रह्मैव सर्वस्या अस्या अध्यासपरम्पराया अधिष्ठानम् । न च वनैक्यवत् ब्रह्मैक्यं कल्पितं युक्तम्, प्रत्येकं पादपानां वनत्वाभावात्, समुदायस्य चावस्तुत्वात् तद्गतबहुत्वसङ्ख्यायाश्चैकवस्तुत्वेऽपि वनत्वव्यवहारालम्बनत्वस्य पद्मादिष्वदर्शनादनुपपत्तेः पादपत्रये तस्या अविशेषिताया विद्यमानत्वेऽपि वनत्वव्यवहाराभावात् अस्मिन्वने सहस्रं पादपा इति भेदेन व्यवहाराच्च उक्तं वनैक्यं समारोपितम् । ब्रह्मैक्यकल्पनायां पुनर्न बीजं पश्यामः । न तावद्विचित्रकार्यजनकत्वं भेदमूलम्, येनैक्यं कल्पितं स्यात् । एकैकस्यापि बीजस्याङ्कुरपत्रकाण्डादिविचित्रकार्यदर्शनात् ।

अथ तत्राप्यवयवानां भिन्नानामेव कारणत्वम् । तत्र वक्तव्यम्—किं बीजावष्टब्धा अवयवा अङ्कुरमारभ्य चरितार्थाः, अन्य एवादृष्टानुकृष्टाः पलाद्यारभ्य फलाद्यारभन्ते, किं वा बीजावयवा बीजान्तरमारभन्ते, परे तु अङ्कुरादि बीजान्तरादर्वाक् । आद्ये

विजातीयानेककार्यव्यवधानेऽपि नीलाकारज्ञानस्य सजातीयनीलाकारज्ञानोपादानत्ववत् साम्प्रतजबीजाकारावयवानां विजातीयाङ्कुरादिकार्यव्यवधानेन सजातीयबीजोपादानत्वम् इति कल्पना भज्येत । द्वितीये बीजावयवानामल्पतमत्वात् पार्थिवावयवेषु वर्तमानाप्यतैजसाद्यवयवानामिव कार्ये स्वजातिव्यवहारहेतुत्वं न स्यात् । तृतीये बीजादङ्कुरो जायत इति प्रवादोऽस्तमियात् । तस्मादनिर्वाच्य एवात्र कार्यकदम्बं प्रति कारणभावो वक्तव्यः । स च नैकस्याप्यनुपपन्नः ।

किञ्च यथैवावयवानां बीजादिचूर्णानाममृदा प्रविष्टानां घटाकारोऽपि इति विचित्रकार्याविरोध एकैकशेनापि, तथा ब्रह्मणोऽप्यवयवानां सहकारिसव्यपेक्षाणामेव चेत्तथाभावः, तर्हि ब्राह्मणोऽप्यस्ति माया सहकृत्वरी सजातीयानां संयुक्तानामनेकेषामारम्भकत्वं द्रव्यं प्रति इति नियम आरम्भवादेन । विवर्तपक्षे त्रिवृत्करणस्य तासां त्रिवृतं त्रिवृतमेकैकामकरोत् इति श्रुत्या निरूपणात् केवलसजातीयनियमस्य दुर्लभत्वाच्च, "यदग्ने रोहितं रूपं तेजसस्तद्रूपम् यच्छुक्लं तदपाम् यत्कृष्णम् तदन्नस्य" इति त्रिवृत्करणलिङ्गश्रुतेः । न चैवम् एकभूततयैव व्यवहारः प्रसज्येत, भूतान्तरभागस्याल्पत्वात् । अल्पचणकचूर्णादिप्रक्षेपेऽपि हिङ्ग्वादाविवासङ्कीर्णव्यवहारोपपत्तेः । पञ्चीकरणं च न श्रुतम् ।

नापि गुणोपसंहारन्यायेन वाय्वाकाशयोरिव छन्दोगश्रुतावस्योपसंहारः, तद्वदस्य श्रुत्यन्तरेऽप्यश्रुतत्वात् श्रुतिन्यायाप्रसिद्धस्योपलक्षणादतिप्रसङ्गात् । न चामिश्रितत्वे तयोर्भोगसाधनत्वं न स्यात्; मिश्रणेऽपि महतो रूपवतो रूपादर्शने तत्तदसाधनत्वादपञ्चीकृतवदविमिश्रणेऽपि कार्यारम्भोपपत्तेश्च मुधा मिश्रणकल्पना, तेजोऽबन्नानां श्रुतमपि मिश्रणं प्रपञ्चसृष्टावुपसंह्रियते चेत् तर्हि रूपमपि स्वाभाविकम् पवनाकाशयोरुपसंहर्तव्यं स्यात् । न च अग्न्यादाविव वाय्वाकाशयोर्भूतान्तरस्थरूपादिदर्शनं मिश्रणलिङ्गमस्ति । न च अनुद्भूतत्वात् न तद्दर्शनम् अयुक्तित्वात् न्यायसङ्कृतश्रुतिविरोधेन ।

तथाहि—सत्यप्यभिभावके विपरीतरूपे वह्न्यादौ तुल्यभागक्षेपे च भूतान्तररूपमुद्भूतं दृश्यते, वाय्वाकाशयोस्तु विपरीतरूपाभावे स्वरूपेण रूपानारम्भकत्वे चान्यथा रूपमात्रप्रकाशप्रसङ्गात् तदनुद्भूतत्वं कथङ्कारं युक्तिमत् । न्यायसहकृतश्रुतिविरोधे च स्मृतेरपि स्वार्थाव्यवस्थापकत्वात् । तदाहुः भट्टपादाः—

"यत्राप्येकं श्रुतौ कर्म स्मृतौ चान्यत्प्रतीयते ।
मिथस्तयोर्विरोधे तु श्रौतेऽनुष्ठानमिष्यते" इति ।

यद्यपि पञ्चानाममिश्रणनिषेधो नास्ति, तद्विधौ च त्रयमिश्रणं लभ्यते, तथाऽपि त्रयः पिण्ड इति वचनमिवानुत्प्रेक्षिकपञ्चवचनं बाधकं भवत्येव। ततस्त्रिवृत्करणपक्ष एव साधीयान्। अस्तु वा पञ्चीकरणम्, यथासम्प्रदायं मायावादत्वात्; मायायाश्च सावयवत्वानवयवत्वाभ्यां रूपवत्त्वारूपवत्त्वाभ्यां तथा सत्त्वासत्त्वाभ्यामनिर्वाच्याया अवाच्यविचित्रकार्ययोनित्वस्य ब्रह्मोपाश्रयणेन युक्तत्वात् दावानलादिसंसर्गलब्धरौद्रस्पर्शातिरेके पवनस्यानुभूयमानेऽपि रूपानुभवाभावात्। वाय्वाकाशयोर्भूतान्तरमिश्रणे दोषाभावाच्च। सम्भावितार्थस्मृत्यनुमितश्रुत्या पञ्चीकरणं निर्णेतुं शक्यते।

इतश्च द्वैतस्य मायामयत्वमास्थेयम्। तथा हि—प्रत्यक्षादिः कुम्भादीनामेकान्तेन सत्त्वस्य व्यवस्थापने व्यापृतश्चेत् प्रध्वस्तो घट इत्याद्यसत्त्वव्यवस्थापने न व्याप्रियेत, ब्रह्मणस्सत्त्वव्यवस्थापकं प्रमाणमिव, व्याप्रियते च। तेन गम्यते ब्रह्मसत्त्वविलक्षणम् कुम्भादीनां सत्त्वम् इति। अथ चिराचिरत्वेन तुल्यत्वाभावेऽपि कालतस्तुल्यमेव बाध्यत्वे नास्त्येव, तत्त्वानुभूतेरेव प्रमाणत्वात्। प्रत्यक्षादेरपि तत्त्वावेदकतयैव प्रामाण्यस्य वक्तव्यत्वात्। अतो न प्रत्यक्षादिसिद्धस्य कुम्भादिसत्त्वस्य ब्रह्मसत्त्वस्येव केनापि कदाचिदपि बाधः सम्भाव्यते, देहात्मप्रत्यक्षस्य देहस्यान्नरसविकृतित्वस्य गुडादेरिवेक्ष्वादिविकृतित्वस्य ग्राहकमूलप्रत्यक्षेण बाधादप्रामाण्यं युक्तम्। अत्र तु तन्नास्ति इति।

यद्येवं तर्हि घटप्रत्यक्षस्य पूर्वभाविपिण्डप्रत्यक्षेण बाधादप्रामाण्यं कुतो न स्यात्, एवं ततोऽपि पूर्वावस्थाग्राहकप्रत्यक्षान्तरेण उत्तरोत्तरप्रत्यक्षस्य बाधादप्रमाणत्वं केन वार्येत? एवं घटप्रत्यक्षेण तद्ध्वंसप्रत्यक्षस्यानुमानादौ च तुल्यमिदम्; तेन तत्तदवस्थाव्यवस्थापनशूराणां सर्वेषामविरोधेन प्रामाण्यम्, रज्जुभुजङ्गादिबोधानामपि तत्प्रसङ्गात्। तथा च त्वयैव अध्यक्षादेरतत्त्वावेदकत्वमावेदितम्।

किञ्च तत्त्वानुभूतिः प्रमा इत्यत्र, तस्य भावः तत्त्वम् अनुगतं वस्तु न व्यभिचारि व्यभिचारात्मकवल्लसमिथ्यात्वयोग्यतासम्पन्नम् शुक्तिकलधौतादिवन्न भवति इत्यर्थः। न च तादृशं कुम्भादि, ततः कथं तदनुभूतिः स्यात् तत्त्वानुभूतिः। न च रज्जुभुजङ्गादेर्ज्ञानमात्रनिवर्त्यत्वान्मिथ्यात्वम् कुम्भादेश्च मुद्गरादिना तदनिवर्तकेन निवर्त्यत्वात्तद्वैलक्षण्यम् इति वचनीयम्, कुलालादेः प्रमाणव्यापारे सति जायमानत्वाच्च इत्यपि। ईश्वरज्ञानेन प्रपञ्चध्वंसाभ्युपगमात्, जन्मनाशयोरेव दुर्निरूपत्वाच्च।

ननु कथं दुर्निरूपत्वम् प्रलयशब्देन च कार्यशून्यं कारणमभिधीयते, न पुनः कार्यस्य कारणे लयः प्रलयः? एवं सत्यसदुत्पद्यते सन्निरुध्यत इत्ययमर्थ उक्तो भवति

इति न्यायवार्तिककारैर्निरूपितत्वात् इति चेत्, तदयुक्तम्; दग्धपटादेः कारणतन्त्वादि-नाशेनापि प्रलयाभ्युपायात् कार्यशून्यं कारणं प्रलय इत्यनुपपत्तेः। कार्यस्य निरन्वयनाशे च न कारणावस्थानेन प्रयोजनमपि पश्यामः। शक्त्यात्मनाऽपि कार्योच्छेदेऽत्यन्तासत एव उत्पत्तौ नियतकारणानिरूपणात् अकस्माद्वा यस्मात् कस्माच्चिद्वा कार्योत्पत्तिसम्भवात्। अतो न कार्यकारणव्यवस्था काचित्स्यात्। केनाप्याकारेण कार्यस्य कारणेऽनवस्थाने कारकव्यापरस्य निरर्थकत्वप्रसङ्गाच्च। कारणस्य निष्पन्नत्वेनातिशयानपेक्षणात् कार्यस्य चासतः तदाधारार्थताविरहात्। न च सतो विनाशोऽपि कार्यत्वादुक्तन्यायेन कारकव्यापारसाध्यः, सदसतोश्च नाशजन्मनी चेदात्मखपुष्पादेरपि किं न स्याताम्।

अत्राह साङ्ख्यः—

सत्यम्; न जन्मविनाशौ कस्यचित्; किन्तु व्यक्तितिरोभावौ तद्व्यवहारनिर्वाहकौ इति लयेऽपि सूक्ष्मरूपेण स्थितस्य स्थूलरूपेणाभिव्यक्तिः कारकव्यापारफलम् इति सत्कार्यवादिनां प्रक्रिया। नैयायिकोऽप्याह—

तच्चैतन्न, कस्मात्? उत्पत्तिविशेषकत्वात्। व्यक्तिरुत्पत्तिविशेषः। कथं? नानुपजातविशेषस्य व्यक्तिर्यतः। अथानुपजातविशेषं व्यज्यत इति मन्यसे, नित्यं व्यक्तिः स्यात्। एतेन तिरोभावोऽपि व्याख्यातः। तिरोभाव इति विद्यमानतैव नक्षत्रादिवत् न किञ्चिन्निवृत्तं चेत्, तन्न युक्तम्; न ह्यनिवृत्तविशेषस्य सर्वेषामग्रहणं युक्तिमत्। नक्षत्रादेरपि कस्यचित् दर्शनात्। नित्यकार्यपक्षे च पूर्वापरभावव्याप्तः कार्यकारणभावोऽपि कुतस्त्यः? व्यक्तेरपि नित्यत्वे व्यङ्ग्यत्वं न कारकप्रयोजनमपि। आगन्तुत्वे चासत्कार्यवादप्रसङ्ग इति। एवं नासत्कार्यवादे सत्कार्यवादे वा जातिनाशौ। अनिर्वाच्याविद्यानिर्वाच्यावेव परिशिष्टौ कार्येण सहैव—

> सतो हि मायया जन्म युज्यते न तु तत्त्वतः।
> तत्त्वतो जायते यस्य जातं तस्य हि जायते।
> असतो मायया जन्म तत्त्वतो नैव युज्यते।
> वन्ध्यापुत्रो न तत्त्वेन मायया वाऽपि जायते॥

इति गौडपादीयोक्तेश्च। कुलालादिव्यापारस्यापि न कुम्भादेः परमार्थसत्त्वाक्षेपकत्वम्। यथा खलु मायाविनो वर्णिकाग्रहणादिव्यापारो व्याघ्रादिभावाय न व्याघ्रादिभावपरमार्थत्व-

माक्षिपति। तस्मादद्वैतमेव तत्त्वपदार्थः । सर्वं चानेकात्मकम् एकवस्तुसापेक्षम् तत्समुच्चयरूपत्वात् । अत एकबुद्धिपूर्विकानेकबुद्धिश्चन्द्रादाविव भ्रान्तिः । एकबुद्धिस्तु नानेकबुद्धिमपेक्षते, अनेकबुद्धिविषये तस्या निरालम्बनाया उदयासम्भवेनानेकबुद्धेरेतत्प्रतिकूलत्वात् । अनेकालम्बनायास्तु बुद्धेरेकबुद्ध्यालम्बनस्य विषये निवेशसम्भवेनैकबुद्धेरप्रतिकूलत्वात् । ततोऽप्यद्वैतम् परमार्थः । "एकं सद्विप्राः बहुधा वदन्ति" इति वेदस्तीर्थकराणां सदादिविकल्पालम्बनमविकल्पमद्वैतम् सत्यमाह ।

**भगवत्पादाचार्या** अपि—

"सदसत्सदसच्चेति विकल्पात्प्राग् यदिष्यते ।
तदद्वैतं समत्वाच्च (तत्तु) नित्यं चान्यद्विकल्पितात् ॥"

इति । **मण्डनमिश्राश्च** :—प्रपद्यन्ते प्रवादिनः कश्चिदर्थस्वभावमेकं यस्यायं पञ्चषड्वा इत्यादिप्रभेदसङ्ग्रह इति । तेनाद्वैतविकल्पावलम्बनानां प्रमाणामिमतानां व्यवहारे विसंवादस्यादर्शनाद्व्यावहारिकं प्रामाण्यम्, न तत्त्वावेदनलक्षणम् । अतो नोऽद्वैतम् सर्वथोपपन्नम् ।

इदञ्चाद्वैतम् सन्दिग्धत्वात् सप्रयोजनत्वाच्च विचारगोचरः । सन्देहश्च साधारणप्रतीतिमन्तरेण नावतरति इति साधर्म्यवदस्यापि लोकतो वेदतो वा सम्पाद्यत्वं इति समपादि । इदं तत्सत् अर्थं वस्तु इति सामान्यरूपेण दयाद्यात्मना तस्य प्रसिद्धत्वात् धर्मवत्, द्वैतस्य मिथ्यात्वोपपादनेन सम्भावितविषयत्वाच्च शास्त्रस्य संभावितविषयत्वात् आरम्भोऽपि सम्भाव्यते । अधिकारिणः प्रमितिजनको वेद इति न्यायात् । अनधिकारिभिः कुतूहलादिना शास्त्रमिदमुपाश्रितमपि न फलपर्यवसायि इति नासम्भावितप्रयोजनत्वाशङ्कापि । न खलु शूद्रादिना क्रियमाणमग्निहोत्रादि न फलावसानम् इति स्यात् अध्वरशास्त्रस्यासम्भावितप्रयोजनत्वाशङ्का । विषयप्रयोजनसूत्रणाय च प्राधान्येन प्रथमं सूत्रम् । तदुक्तम् तन्त्रान्तरेऽपि—

"अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम् ।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥" श्लो. वा. 1. 1. 11.

इति । आभ्यामाकृष्टोऽप्यधिकारी सम्भवति । न च अधिकारिण एते । दृश्यते हि वेतनादिना व्यापारस्य कर्तुरभावे स्वेनाप्यनुष्ठानम् सति प्रयोजनादौ । न च दिवाकीर्ति-

निर्व्यापारोऽस्त्यधिकारी इत्यकाण्डेऽपि मुण्डनं कार्यते । अत उक्तम्—प्राधान्येनेति शास्त्रीयचतुःसूत्रिकायां किञ्चित् किञ्चित् बालव्युत्पादनाय वक्तुं प्रकरणमिदमारब्धं तेन सूत्रावलम्बनम् । अत्र हि संक्षेपेण शारीरकार्थस्य समाविष्टत्वात् । न पुनः —

"उपोद्घातः पदञ्चैव पदार्थः पदविग्रहः ।
चालना प्रत्यवस्थानं व्याख्यानं तस्य षड्विधम् ॥"

इति व्याख्यानमेवारब्धम् । अतो न पदशो व्याख्याय

यदुपन्यस्य जिज्ञास्यं पञ्चाङ्गन्यायमानतः ।
निर्णीतं पञ्चधा ब्रह्म वेदव्यासेन तन्नुमः ॥

यश्चात्र परसिद्धान्ते पूर्वाचार्योक्तदोषोद्धारः, सोऽपि तस्य दोषत्वव्यवस्थापनायैव । न खलु कण्टकोद्धारस्तस्य पादतलदूषणत्वं प्रतिषेधति । शिष्याणां पुनः स्थापनार्थमूहाय च इति सकलमनाविलम् ।

उद्भिन्ननीलदलनीरजराजलक्ष्मी-
लक्ष्मीकटाक्षवलयार्पितलक्ष्मवक्षाः ।
श्रेयस्तनोतु भवतां भवतापहन्ता
चक्रायुधः श्रुतिवितानविनीततत्त्वः ।
गौरीपतिं गौरमयूखलेखया
विभ्राजितं बभ्रुजटावमृष्टया ।
वन्दामहे मन्मथदाह उल्ल-
रकपालखण्डभ्रमया भवच्छिदम् ॥

इति

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वयाश्रमपूज्यपादशिष्यस्य

भगवतो रामाद्वयस्य कृतौ वेदान्तकौमुद्यां

**प्रथमोऽध्यायः समाप्तः ॥**

॥ श्रीः ॥

# अथ द्वितीयोऽध्यायः ॥

—:o:—

आनन्दज्ञानदेहोऽप्यनुपममलस्वान्तसंसेवनीयो
यस्य स्वात्संविभज्य स्फुटमिव कमलामालयं मङ्गलानाम् ।
धत्ते वक्षः क्षमायां भ्रममिव विदधत्तार्किकाणां पुमर्थैः
सोऽस्मान् संसारचक्रभ्रमभिदुरदशां लिम्पतु ग्लानबोधान् ॥

अथ "जन्माद्यस्य यतः" इति ब्रह्मणो लक्षणं निरूपणीयम्, प्रमाणादिविचारस्य स्वरूपविचारापेक्षत्वात् । अत्र केचित् व्योमादिमहाभूतानां भौतिकानां च ब्रह्माण्डादीनां जन्मान्तगमकहेतुप्रयोजनान्यथानुपपत्त्योर्वक्तुमशक्यत्वादसम्भवि लक्षणमिदमाचक्षते । तथा हि—लक्षणं तावत् प्रसङ्गाप्रसङ्गविग्रहं केवलव्यतिरेकि । अभ्युपगतव्याप्यं प्रति [अ]व्याप्येनानिष्टप्रसञ्जनं च प्रसङ्गः । प्रसञ्जनं च स्वीकारार्हताबोधनम् अथ (व्याप्तिः) अस्ति ह्यप्रसङ्गोऽपि सम्भावना यदि जलं सहकारिभिस्संपत्स्यते तदा मे तृषं शमयिष्यति इति, मैवम्; प्रसञ्जनं च स्वीकारार्हताबोधनम् इत्याह आहार्यारोपरूपताया-स्तर्कस्योक्तत्वात् । सम्भावनाया अपि तथात्वात् इतरलक्षणस्य तदुपकरणत्वात्, यथा स्वव्याघातकमुत्तरं जातिः इति तात्पर्येण लक्षणं विवक्षन्, प्रयुक्ते हेतौ समीकरणाभिप्रायेण प्रसङ्गो जातिः इत्यवोचत् । कृते हि हेतुप्रसङ्गे स्वव्याघातकत्वस्यावतारयितुं शक्यत्वात् । एवमत्राप्याहार्यारोपसम्पादनार्थं यत्किञ्चिदुपलक्षणत्वेनोचे । अतो न दोषः । तथा च न्यायविदामग्रणीः आचार्यवाचस्पतिः स्मृतिरूप इत्याद्यध्यासलक्षणेऽवभासपद-मुद्धृत्य, "अवसन्नोऽवमतो वा भासोऽवभासः प्रत्ययान्तरबाधश्चास्यावसादोऽवमानो वा । एतावता मिथ्याज्ञानम् इत्युक्तं भवति । तस्येदमुपव्याख्यानं पूर्वदृष्टेत्यादि" इति विवक्षा-विशेषेण व्याचकार ।

"अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इति च अक्षपादाचार्यः । पुरोवर्तिन्यूर्ध्वे धर्मिणि सामान्यतो ज्ञातेऽविज्ञाततत्त्वेऽनिर्णीतयथास्वरूपे जिज्ञासा

तावद्भवति । ततः संशयः, किमयं स्थाणुः पुरुषो वा इति । तदनन्तरं कारणोपपत्तिसत्त्वे विपर्ययेऽनिष्टापत्तितो भवितव्यतात्मा भवति प्रत्यय ऊहरूपस्तर्कः - पुरुषेणान्येन भवितव्यम् इति । अनिष्टापत्तिस्तु (सततमिह वा भान्वाह यतिनाजेति) "न शक्यम् तृणमात्रकेणापि स्थातुमत्र किं पुनरियता स्थाणुना" इति । एतच्च सर्वं सम्भावनायां व्यक्तमेव ।

तथा चेत्थं प्रसङ्गात्मनाऽप्रसङ्गात्मना वा इदं ब्रह्म इति व्यवहर्तव्यं जगज्जात्यादि-हेतुत्वात् व्यतिरेकेणाविगीतवत्, सजातीयविजातीयाद्यवच्छिन्नम् वा । "सजातीय-विजातीयव्यवच्छेदो वा व्यवहारसिद्धिर्वा लक्षणप्रयोजनम्" इति उदयनेनोदीरणात् इत्युक्तौ हेतोरसिद्धत्वात् जगज्जात्यादिकारणत्वाभावस्य चेष्टत्वादसम्भवः, तस्यैव च लक्षणत्वात् । अत एव तर्कविशेषा अपि नात्र सावकाशाः ।

तथा हि— स्वस्याव्यवहितस्वापेक्षण**मात्माश्रयः** । अस्य च सम्बन्धद्वारभेदा-दाभासत्वम्, यथा प्रमेयत्वस्यात्मनि वृत्तौ । क्वचिन्नैवमपि—यथाऽनेककालस्थस्य घटस्य पूर्वकालवृत्त्यात्मन उत्तरकालवृत्तिमात्मानं प्रति कारणत्वे । अन्योन्यस्याव्यवहितान्योन्या-पेक्षण**मन्योन्याश्रयः** । अस्य व्यक्तिभेदादुद्धारः, यथा ज्ञानेन संस्कारस्य, तेन च ज्ञानस्य जनने । अन्तरितस्यापेक्षितत्वे तदेव द्वयमात्माश्रयोऽन्योन्याश्रयश्च **चक्रकम्**, यथा—बीजेनाङ्कुरः, तेन च स्तम्बः, तेन च बीजम् जन्यत इत्यत्र । विरुद्धसमुच्चयो **व्याघातः** । अस्य च कालभेदादिनोपाधिनाऽनवकाशः यथा जननादौ । उपपाद्योपपादक-प्रवाहोऽनवधि**रनवस्था** । क्रियायाः परम्परानन्त्यानपेक्षणादस्या उद्धारः । यथा सामग्र्या कार्यजननाय स्वसामग्र्यानन्त्यानपेक्षणे । तामेतामधो धावन्तीमनवस्थामाचक्षते । क्वचि-न्नैवमपि—यथा स्वाश्रये भिन्नबुद्धिजननाय स्वगतभेदानुपजीवनादपि भेदस्यानन्त्य-प्राग्लोपादिदोषात्—

"प्राग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवेत् ।"
अनवस्थितिमास्थातुरचिकित्स्या त्रिदोषता ॥

भिन्ने भेदस्थित्यङ्गीकारे भेदव्यवहाराय पूर्वभेदवैयर्थ्यम् । अनेकभेदानां युगपद्धर्मिसम्बन्धे किंभेदविशिष्टे किम्भेदस्थितिरनवस्थितिः, युगपदनन्तभेदग्राहकाभावाच्च । तामेतामूर्ध्वं धावन्तीमनवस्थामाचक्षते । स्वाभ्युपगतदोषतुल्यता प्रतिबन्दी विशेषादनवकाशोऽस्याः । यथा धूमानुमाने (वा विंशत्या)प्रतिबन्द्यां तर्कानुकूलत्वाद्विकल्पेनान्वययोग्येनैकस्मिन्नभ्युपगते

तदेकदेशान्वयनियमनिर्धारणाशक्यत्वमविनिगमस्सत्प्रतिपक्षहेत्वोरिव निर्धारयितुं शक्यान्वययोः परस्परप्रतिक्षेप एव पर्यवसानात् ।

ननु अन्यतरमादायाविप्रकृतस्योपपत्तिसम्भवेनाविनिगमस्य दोषत्वमेवानुपपन्नं केवलं पुंसः तत्र यदि संशयस्स्यात् स च किं न स्यात् इति चेत्, न; भावानवबोधात् । प्रमाणासम्भवेन कश्चिदपि (इति)विशेषः कथमभ्युपगन्तुं शक्यो यमादाय वस्तुगत्याऽप्येकस्यान्वयः स्यात् । ननु एवं प्रमाणाभावदोषस्स्यात्, नाविनिगम इति चेत्, तस्याविनिगमोन्नेयत्वेनाविनिगमस्यैव प्रथमोपनतस्य उपन्यासौचित्यात् । बाहुल्यदृष्टमपेक्ष्याबाहुल्यदृष्टतया दुर्बलस्यानुपगमार्हता **उत्सर्गः** । तद्यथा स्वस्थस्य जानतो ज्ञाने प्रामाण्याप्रामाण्यनिर्धारकप्रमाणानुपनिपाताविशेषेऽपि विना बाधकं प्रामाण्यमभ्युपगच्छन्तं प्रति स्यात् न तु[अ]प्रामाण्यम्; यं तर्कमतेनावलम्ब्याहुः —

"तस्माद्बोधात्मकत्वेन" इत्यादि ।

ननु बलवदेककोटिकसंशयत्वात् उत्सर्गस्य स कथं तर्कः स्यात् इति चेत्, न; उत्सर्गस्य सम्भावनायाश्चार्थस्थित्यनुकूलतयाऽवलम्ब्यत्वात्, संशयस्यानेवंभावात् उत्सर्गस्यैककोटियथात्वात् । संशयस्य कोटिद्वयावगाहित्वम् सुगमासुगमयोरसुगमदुर्बलत्वं कल्पनागौरवं, दृष्टजातीयमपेक्ष्यादृष्टजातीयं दुःखेन प्रतीयते समपेक्ष्य बहु इत्याद्यखिलजनानुभवसिद्धमेतत्; यथा नैयायिकादीन् प्रति क्षित्यादिषु प्रतिकार्यं कर्तॄणां भिन्नानामभ्युपगमापादके; यथा च सौगतं प्रति प्रत्येकं कारणानां समर्थानामनेकसमानदेशकालनीलादिव्यक्त्युत्पादापादके च दूषणानुकूलमिदम् । तदेतद्व्यतिरेकेण कल्पनालाघवं साधनानुकूलं समर्थानेककल्पनागौरवं समर्थाल्पकल्पनालाघवम् इति चाहुः । प्रामाणिकाव्यवहार्यमसमाधेयजातीयमौचित्यं **वैयात्यनामकम्** । तस्य भेदाः प्रश्नवैयात्यादयः । प्रश्नविषयमप्रमिण्वति प्रष्टरि प्रश्नानौचित्यं **प्रश्नवैयात्यम्** । यथा वस्तुनि विधिनिषेधयोः किमिच्छसि इति प्रमाणव्यवहारे सौगते अप्रतिसमाधेयप्रश्नपरम्परायां **मौनं वैयात्यम्** इत्याहुः ।

त एते सोद्धारास्तर्का नात्रावसरं लभन्ते; तथा हि—यदि जगज्जात्यादि तत एव तदात्माश्रयः, जन्म नाशतो नाशतश्च जन्म इत्यन्योन्याश्रय इत्यादिप्रकारेणावकाशो वक्तव्यः जन्माद्यभावे च कथं नः स्यात् ।

अथ महाविद्याऽनुमानेन जगदनित्यत्वं साध्यते; तथा हि—केवलान्वयिनि व्यापके प्रवर्तमानो हेतुः पक्षे व्यापकप्रतीत्यपर्यवसानबलादन्वयव्यतिरेकि साध्याभिमतं साधयन् महाविद्या इत्युच्यते। तस्य च महाविद्यात्वमसिद्ध्यादिसकलदोषविरहात्। प्रमेयत्वादीनां निर्णीतापक्षवृत्तित्वेन पक्षधर्मत्वासिद्धेरसम्भवात् केवलान्वयिसाध्याभावाप्रसिद्धौ साध्याभावाधिकरणविपक्षाऽसम्भवेन यस्य कस्यचिदुपाधित्वेनाभिधीयमानस्यावश्यकपक्षेतरत्वदोषग्रस्तत्वेन उपाधित्वासिद्धौ व्याप्यत्वासिद्धेरपि निरस्तत्वात्।

अथ स्वर्गापूर्वादिकं कस्यचित् प्रत्यक्षम् प्रमेयत्वात् करतलादिवत् इत्यत्र केवलान्वयिन्यप्ययोगिप्रत्यक्षत्वमुपाधिः। तथा च न सर्वज्ञकर्तृशून्यं (स)कार्यम् आकाशवदकार्यत्वप्रसङ्गात् इति केवलव्यतिरेकिण्यपि कर्तृशून्यत्वमुपाधिः, तदसारम्; योगिनमनङ्गीकुर्वतो न तद्व्यवच्छेदायायोगी इति विशेषणम् यतः। प्रत्यक्षत्वस्य साध्यव्याप्तौ सत्यां साधनाव्यापकत्वार्थमेवायोगिविशेषणोपादानात् पक्षेतरता च।

अथायोगिप्रत्यक्षता चातदपेक्षिता विप्रकर्षोपलक्षणम्, नैवम् साधुः विप्रकृष्टत्वे सति प्रत्यक्षत्वोपाधेः पक्षेतरत्वात् साध्यव्याप्तौ सत्यां साधनव्याप्त्यर्थं विशेषणोपादानात् एतस्यैव पक्षेतरलक्षणत्वात्। अविप्रकृष्टत्वमेवोपाधिश्चेत्, तस्य विषमव्यापकत्वे यत्पुनर्विप्रकृष्टम्, न तत् कस्यचित् प्रत्यक्षम् इत्युदाहरणाभावात् साध्यव्यापकत्वम्। उपाधेः समव्यापकत्वे चाविप्रकृष्टत्वं विप्रकृष्टाभाववत्त्वमेव चेत्तन्न करतलादौ इति साध्याव्यापकत्वमेव; विप्रकर्षासहत्वं चेत् नित्यानुमेयादौ, तर्हि कालादिविप्रकर्षाभावे तद्भावेऽपि साध्याभावादसाध्यव्यापकत्वम्। विप्रकृष्टान्योन्याभाववत्वं चेत् अविप्रकृष्टत्वम्, तर्हि पक्षव्यवच्छेदार्थमेव विशेषणम् ततः पक्षेतरता। अर्थतः नित्यानुमेयेऽन्योन्याभाववत्त्वेऽपि साध्याभावात् न समव्याप्तिश्चेत्, तर्हि तत्तायां कस्यचित्प्रत्यक्षत्वेऽपि विशिष्टोपाध्यभावान्न साध्यव्याप्तिरेव।

एवं कर्तृशून्यत्वोपाधावपि कर्तृपदस्य पक्षमात्रव्यवच्छेदार्थत्वात् पक्षेतरता दुर्वारा पक्षद्वयेऽपि व्यतिरेकान्वयव्याप्त्योरयोगात् अन्वयव्यतिरेकनियतोपाध्यनुपपत्तेश्च। ततो यत्किञ्चिदेतत्। केवलान्वयिसाध्याभावाप्रसिद्धत्वेनैव च साध्याभाववन्मात्रवृत्तित्वसाध्याभावसाधकसमानबलसाध्याभावसाधकाधिकबलरूपाणां विरुद्धत्वानैकान्तिकत्वप्रतिपक्षबाधानामपि अनुपपत्तेः विपक्षाभावेन विपक्षवृत्तित्वाशङ्काऽसम्भवेन तन्निवृत्त्यर्थं तर्काकाङ्क्षाभावेन तर्कविरहादीनामप्यदूषणत्वात् इति। सा चेयं महाविद्या बहुप्रकारा; काचिदन्वयव्यति-

[रे]किण: पक्षं पक्षीकृत्य प्रवर्तते, काचित् सपक्षम् काचिद्विपक्षम्, काचित् साध्यम्, काचित् साध्याभावम् इति ।

तत्र पृथिव्यादि अनित्यम् कार्यत्वात् कुम्भवत् इत्यन्वयव्यतिरेकिणि महाविद्या—विमतम् स्वस्वेतरवृत्तित्वानधिकरणानित्यनिष्ठाधिकरणम्, मेयत्वात् घटवत्; ये पक्षे तदितरस्मिंश्च वर्तन्ते धर्माः, तेषु पक्षतदितरवृत्तित्वं नाम धर्मः तदत्यन्ताभावश्च स्वस्वेतरवृत्तित्वानाक्रान्तत्वं तद्वांश्च स्वस्वेतरवृत्तित्वानधिकरणम्; स चासावनित्यनिष्ठश्च तेन स्वस्वेतरवृत्तित्वात्यन्ताभाववदनित्यनिष्ठधर्मवान् पक्ष इति प्रतिज्ञार्थः । अयं च प्रमेयत्वादिहेतुः स्वस्वेतरवृत्तित्वानाक्रान्तानित्यनिष्ठधर्मवत्त्वं पक्षे गमयन् अनित्यत्वमन्तर्भाव्य गमयति । न हि पक्षेऽनित्यत्वमनधिगम्य पक्षमात्रनिष्ठस्यानित्यनिष्ठत्वं शक्याधिगमम् । नापि पक्षे पक्षमात्रनिष्ठानित्यनिष्ठधर्मवत्त्वमनधिगम्य तदितरवृत्तित्वानाक्रान्तानित्यनिष्ठधर्मवत्त्वं शक्याधिगमम्; पक्षव्यतिरिक्तमात्रवृत्तिधर्मस्य पक्षे व्याघातेनोपसंहर्तुमशक्यत्वात् । तदिदं व्यापकप्रतीतेरनित्यत्वादिकमनालम्ब्यानुत्पत्तिरूपमपर्यवसानमाहुः ।

इदानीं सपक्षं पक्षीकृत्योच्यते—अयं घट एतद्घटपक्षीकृतपृथिव्याद्यन्यान्यानित्यान्यः मेयत्वात् आकाशवत् । एतद्घटपक्षीकृतपृथिव्याद्योः ये अन्यत्वे तदुभयत्वरहितः एतद्घटपक्षीकृतपृथिव्याद्यन्यान्यः स चासावनित्यश्च तदन्यत्वाधिकरणम् इत्यर्थः । एतद्घटपक्षीकृतपृथिव्याद्यन्यान्यानित्यान्यत्वं च एतद्घटान्यत्वेन वा स्यात्, पक्षीकृतपृथिव्याद्यन्यत्वेन वा स्यात् । पूर्वस्मिन् व्याघातः, न ह्ययं घट एतस्माद्घटादन्य इति सम्भाव्यते । द्वितीये तु पृथिव्याद्यनित्यत्वसिद्धिः, यदि पक्षीकृतं पृथिव्यादि नानित्यम्, कथं पक्षीकृतानित्यान्यत्वं घटे स्यात् ।

अथ विपक्षीभूतं ब्रह्म पक्षः एतत्पृथिव्यादीतरानित्यनित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणम् मेयत्वात् । अनित्यनिष्ठाधिकरणम् इत्युक्ते प्रमेयत्वादिभिरनित्यनिष्ठैरेतत्पृथिव्यादिनित्यत्वेऽप्युपपद्यमानैरर्थान्तरता स्यात्, तन्निवृत्त्यर्थमेतत्पृथिव्यादीतरानित्यनित्यवृत्तित्वरहितग्रहणम् । एतत्पृथिव्यादीतरानित्यनित्यवृत्तित्वरहिताधिकरणम् इत्युक्ते नित्यत्वतद्वान्तरैः ब्रह्मनिष्ठैरेतत्पृथिव्यादिनित्यत्वेऽप्युपपद्यमानैरर्थान्तरता स्यात्, तन्निवृत्त्यर्थं नित्यनिष्ठग्रहणम् । नित्यनिष्ठत्वरहितानित्यनिष्ठाधिकरणम् इत्युक्ते व्याघातः । न हि नित्यनिष्ठत्वरहितो नित्ये ब्रह्मणि सम्भवति, तन्निवृत्त्यर्थम् एतत्पृथिव्यादीतरानित्यग्रहणम् ।

यद्यपि ब्रह्मणि नित्यवृत्तित्वरहितो धर्मो व्याहतः, तथाऽप्येतत्पृथिव्यादीतरानित्ये नित्ये च ये वर्तन्ते, तेषु यदेतत्पृथिव्यादीतरानित्यनित्यवृत्तित्वं धर्मः तद्रहितो धर्मो ब्रह्मणि न व्याहतः । एतत्पृथिव्यादीतरनित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणम् इत्युक्ते व्याघातः । यस्य कस्यचिदपि ब्रह्मधर्मस्य एतत्पृथिव्यादीतरनित्यब्रह्मनिष्ठत्वेन तद्रहितत्वानुपपत्तेः, तन्निवृत्त्यर्थम**नित्य**ग्रहणम् । एतत् पृथिव्यादीतरनित्यनिष्ठत्वरहितधर्मस्य ब्रह्मणि व्याहतत्वेऽप्येतत्पृथिव्यादीतरानित्यनिष्ठत्वरहितधर्मस्याव्याहतत्वात् । एतत्पृथिव्यादीतरानित्यनिष्ठत्वरहितानित्यनिष्ठाधिकरणम् इत्युक्ते चाप्रसिद्धविशेषणता । न ह्येतत्पृथिव्यादीतरानित्यत्वसिद्धेः पूर्वम् एतत्पृथिव्यादीतरानित्यनिष्ठत्वरहितस्यानित्यनिष्ठत्वं शक्याधिगमम् , तन्निवृत्त्यर्थं **नित्य**पदम् ।

एतत्पृथिव्यादीतरानित्यनिष्ठत्वरहितानित्यनिष्ठाप्रसिद्धत्वेऽपि एतत्पृथिव्यादीतरानित्यनित्यनिष्ठत्वरहितानित्यनिष्ठस्यैतत्पृथिव्यादीतरानित्यत्वादेस्सुप्रसिद्धत्वात् एतत्पृथिव्यादीतरानित्यनित्यवृत्तित्वरहितो धर्मः एतत्पृथिव्यादीतरानित्यमात्रवृत्तिर्वा नित्यमात्रवृत्तिर्वा, एतत्पृथिव्याद्येतत्पृथिव्यादीतरानित्यमात्रवृत्तिर्वा, एतत्पृथिव्यादिमात्रवृत्तिर्वा, एतत्पृथिव्यादिब्रह्मव्यतिरिक्तनित्यमात्रवृत्तिर्वा, एतत्पृथिव्यादिब्रह्ममात्रवृत्तिर्वा ? प्रथमतृतीयपञ्चमा ब्रह्मणि व्याहताः । द्वितीयस्त्वनित्यनिष्ठग्रहणेन दूरनिरस्तः । षष्ठस्य त्वनित्यनिष्ठत्वम् एतत्पृथिव्याद्यनित्यत्वमन्तर्भाव्यैव सिद्धयति ब्रह्मनित्यत्वस्योभयवादिसिद्धत्वात् इति एतत्पृथिव्याद्यनित्यत्वसिद्धिः ।

अथ साध्यं पक्षीकृत्योच्यते—अनित्यत्वम् अनित्यत्वान्योन्याभावव्यतिरिक्त एतत्पृथिव्यादिनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वरहिताधिकरणम् मेयत्वात् घटवत् । अनित्यत्वान्योन्याभावव्यतिरिक्तश्चासावेतत्पृथिव्यादिनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वम्, तद्रहितश्चान्योन्याभावो वा स्यात्; तस्य स्वातिरिक्तत्वे सति इति विशेषणायोगात् । तत्त्वे सति एतत्पृथिव्यादिनिष्ठान्ताभावप्रतियोगिनिष्ठत्वरहितो वा । आद्यो व्याहतः ; न ह्यनित्यत्वमनित्यत्वव्यतिरिक्तम् इति सम्भवति । एतत्पृथिव्यादिनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वरहितश्चानित्यत्वे तर्ह्येव स्यात्, यद्यनित्यत्वं एतत्पृथिव्यादिनिष्ठात्यन्ताभावप्रतियोगि न स्यात् इति अनित्यत्वस्यैतत्पृथिव्यादिनिष्ठत्वसिद्धिः अनित्यत्वस्यान्योन्याभावमुपादाय घटे साध्यप्रसिद्धिः ।

अथ साध्याभावपक्षीकारः—अनित्यत्वात्यन्ताभावस्य चान्योन्याभावव्यतिरिक्तोऽभावोऽत्यन्ताभाव एव, तस्य प्राक्प्रध्वंसाभावविरहात् , अनित्यत्वात्यन्ताभावस्य चात्य-

न्ताभावोऽनित्यत्वमेव इति एतत्पृथिव्याद्यनित्यत्वसिद्धिः इति जन्माद्यपि पृथिव्यादे नित्यभावत्वादेव इति नासम्भवि ब्रह्मणो लक्षणम् ।

**अत्रोच्यते**—किमिदमनित्यत्वं साध्यते प्रध्वंसात्मकं वा अव्यवस्थितस्वरूपत्वम् वा? नाद्यः, लयवादिभिः सर्वत्र उच्छेदापरपर्यायप्रध्वंसानुपगमात् । अथ यथा नियोगवादिनां तस्य सदा साध्यत्वाकारानुपरमेऽपि तद्विषयरागादिनिष्पत्त्या प्रेरकत्वाकारोपरमः; अपरथा यागादिनिष्पादकानुपरमप्रसङ्गात्, तथा पृथिव्यादेरपि कस्यचिदाकारस्यानित्यत्वमुपरम इति चरमः पक्षः, तर्हि परिणामिनित्यत्ववादिनां तस्य सिद्धत्वेन सिद्धसाधनत्वात् ।

**अथ** नैयायिकप्रक्रियया सर्गध्वंसौ साध्येते । विगीतं जन्म प्रध्वंसवत् सावयवत्वात्, मध्यमपरिमाणत्वात्, विन्यासविशेषत्वात्, उपलभ्यमानस्पर्शाधिष्ठानत्वात्, एकदेशेनोत्पादध्वंसवत्त्वात् अरणिमथनादग्नेश्चन्द्रकान्ताज्जलस्य चोत्पाददर्शनात घटादिवत्,

**तदपेशलम्**; अवयवसमवायस्य समवायानङ्गीकारवादिनं प्रति सावयवस्यासिद्धत्वात्, अवयवारभ्यत्वस्य च साध्याविशिष्टत्वात् अवयवसहभावस्य च देशतो विवक्षायां द्व्यणुकावयवयोःपरमाण्वोर्नित्यद्रव्यतया देशाभावेनासिद्धत्वात्, अवयवेभ्योऽन्यत्रावयविनः समवायानङ्गीकाराच्च यथाप्रसिद्धसावयवत्वस्य च पुञ्जवादिनामिवानारम्भेऽपि सम्भवात्, मध्यमपरिमाणस्य च सावयवत्वसिध्यधीनत्वेनासिद्धेः, विन्यासविशेषस्य च विजातीयपरमाणोरिवाधाराधेयभावस्य विनाऽप्यारम्भं सम्बन्धविशेषादुपपत्तेः, उपलभ्यमानस्पर्शाधिष्ठानत्वस्य च द्व्यणुकेष्वभावादसिद्धेः तज्जातीयत्वस्य च परमाणुष्वपि भावेनानैकान्तात् पृथिव्यादेरेकदेशसर्गध्वंसाभ्यां परमाणुरूपपृथिव्यादौ प्रसङ्गादिष्टक्षतिकरम्; अतो नायं हेतुकलापः सर्गध्वंससाधनक्षमः क्षमादेः । एतेन क्षित्यादेः सकर्तृकत्वानुमानमपि पूतिकूष्माण्डीकृतम् । तथा हि प्रयुञ्जते—क्षित्यादिकं सकर्तृकम् कार्यत्वात् कुम्भवत् ।

ननु कार्यमात्रस्य तद्विशेषस्य वा सर्वज्ञाशरीरिकर्त्रा न क्वापि व्याप्तिरुपलब्धा । अथ कर्तृमात्रेण व्याप्तिरस्ति इत्यनुमानेन कर्तृमात्रसिद्धौ सर्वज्ञत्वादिकं तस्यानुपपत्तिलभ्यम्, **तदसुन्दरम्**; कतिपयपरिचयमात्रेणापि कर्तृत्वोपलम्भात् । न हि कुम्भकारोऽदृष्टं निमित्तं ज्ञातुमीष्टे । नापि मधुधारणादिप्रयोजनविशेषं; नापि कर्तृपुरुषविशेषम्, नैवम्; विशेषोपपत्तेः । कुलालो हीश्वरपरतन्त्रो यथा कथञ्चित् करोतु नाम । ईश्वरः पुन-

रीश्वरानवस्थापरिहाराय स्वतन्त्रः सत्त्वादिसर्गे प्रवर्तमानः कथङ्कारं सेवाफलदानव्यापृतः सार्वभौम इवाविज्ञाय तत्तदुचितं प्रवर्तेत। न च महतः प्रासादादेः कार्यस्य बहुकर्तृकत्वोपलम्भादत्रापि तदापत्तिः, सार्वभौमन्यायेनैकस्यापि सम्भवात्। आदिसर्गे बहूनां शरीरादिरहितानां ज्ञानेच्छायत्नाः कल्पनीया नित्या एव। अतो वरमेकस्यैव तत्कल्पनम्।

**अतः** कार्यमहत्त्वस्य बहुकर्तृकत्वेन व्याप्तत्वात् न कल्पनालाघवन्यायावतारः; किन्तु गौरवमेव युक्तम्। तथा—एकस्य शरीरादिरहितस्य नित्यज्ञानेच्छाप्रयत्ना इति परस्यैव कल्पना गरीयसी इति न **दूषणावकाशः**। न च एवमपि कल्पनालाघवादेकानेककर्तृसन्देहे एकः कर्तेति सम्भावनैव, न निर्णय इति वाच्यम्; उक्तन्यायेन बहुकर्तृकत्वानङ्गीकार्यत्वे तन्निर्णयात्।

**यदपि** यथा पचियोगात् पक्ता तथा कृतियोगात् कर्ता। अतः पक्षधर्मताबलात् कृतिसम्बन्धे सिद्धेऽपि प्रमावत्संबन्धः कथं सिद्ध्यति भ्रान्त्युत्प्रेक्षादिपूर्वककृतिमत्त्वस्य कुलालादावेव बहुलमुपलम्भात् इति; **तदप्यसमीक्षिताभिधानम्**; भ्रान्त्यादिकारणमधर्माज्ञानरागादिकं क्षित्यादिकर्तुरसंसारित्वेन न सङ्गच्छते यतः, नियतयुगधर्मग्रहनक्षत्रसञ्चारादिलिङ्गैरनुमीयमानस्य कर्तुर्ज्योतिश्शास्त्रादिप्रणेतुरिव प्रमावत्तयैव गम्यमानत्वात् अविज्ञातप्रमातृभाववेदनिर्मातृत्वेनापि तस्यानुमानादेव; **यच्च** तदुपादानसाक्षात्काराधीनं कृतिमत्त्वम्, तदनेकान्तम्; अस्मदादीनां शब्दकर्तृत्वेऽपि तदुपादानसाक्षात्कारानभ्युपगमात्। न च तस्यापि पक्षता, अनादिप्रसिद्धकर्तृकादन्यत् सकर्तृकम् **इत्युदयनेनोद्धारात्** इति,

**तदप्यलीकम्**; विमतं सकर्तृकम् कार्यत्वात् इति सामान्यतो दृष्टाभिप्रायेण **उदयनेनोद्धारात्**। विशेषविवक्षायां हि यथोक्तसाध्यवतो घटादेरेव दृष्टान्तत्वेन शब्दादेरपि पक्षनिक्षेपात् व्यजनाभिघातात् द्व्यणुकादिप्रक्रमेण पवनस्य, आरणेयस्यारणिमथनात्, पाषाणोत्पाटनादिना शारीरजलस्य जन्मनः प्रसिद्धत्वात् यथैवास्मदादिकर्तृकमेतदनादिपक्षनिक्षिप्तम्, तथा शब्दादिकमपि इति सन्तोष्टव्यम्। न च वाच्यम्-तादृशोऽनुपलभ्यमानोऽपि कर्ता यदीष्यते, तदा नरशिरसि शृङ्गमप्ययोग्यत्वादनुपलभ्यमानमस्त्येव इति प्रसङ्गः स्यात्-इति, पिशाचादेरनुपलभ्यमानस्यापि भेदेन सङ्क्रान्तस्यैव कर्त्रन्तरस्य कार्यविशेषेण सत्त्वसम्भवेनाप्रसङ्गात्। अपरथाऽनीश्वरवादिनामपि पिशाचादेरनुपलभ्य-

मानस्य सत्त्वे नृशङ्गादेरपि सत्त्वं केन वार्येत? तस्माच्चोद्याभासा अमी। तदेतत् सकर्तृकत्वानुमानं कार्यत्वस्य सावयवत्त्वसम्पाद्यत्वेन तदपाकरणादपाकृतम्।

अथापि अङ्कुरादिकार्यम् उपादानगोचरापरोक्षविज्ञप्तिचिकीर्षाकृतिमज्जन्यम् कार्यत्वादेव कुम्भवत्, ततोऽस्मदादिविलक्षणकर्तृसिद्धिः, एवमप्यसाधु।

अस्ति तावत् कर्मणः फलहेतुत्वं प्रसिद्धम्, तच्चाङ्कुराद्युत्पादमन्तरेण सम्भवति। ततः कर्तार एव कर्मद्वारेणाङ्कुरादीनुत्पाद्य तत्फलं सम्पादयन्ति। तेन कार्यत्वमन्यथाऽपि सेत्स्यति इति न विलक्षणकर्तरीदं प्रमाणम्।

ननु न तावद्धर्माधर्मावङ्कुरोत्पत्तौ व्यापारमर्हतः सुखाद्युत्पत्तावेव तयोर्हेतुभावात्; न हि धर्मादि दृष्टं कारणम्; शास्त्रं तु धर्मादेरर्थादिहेतुतामाचष्टे, नाङ्कुरादेर्हेतुताम्। न च अङ्कुराद्युत्पादमन्तरेण सुखादेरपर्यवसानात् तत्रापि धर्मादेर्हेतुत्वकल्पना इति वाच्यम्; कुम्भाद्युत्पत्तावपि तत्प्रसङ्गात्। तथा च कर्तृनियमासिद्धिः। तत्र चातिरिक्तव्यापारकल्पनेऽत्रापि तत्कल्पनम् न्याय्यम् दृष्टानुसारात्।

तन्न चोपपन्नम्; प्रमाणाभावात्। न ह्यङ्कुरादयोऽस्मदादिव्यापारेणान्वयव्यतिरेकावनुभवन्तोऽनुभूयन्ते शास्त्राच्च न धर्माधर्माभ्यां ऋतेऽन्यं कर्तृगं व्यापारं प्रतिपादयितुमीष्टे। न च अङ्कुरादीनामकर्तृकत्वं न्याय्यम् कार्यत्वव्याघातात्। न चान्यो व्यापारः कर्तृत्वोपयोगी, कृतेरेव तदुपयोगात्। कल्प्यमानाऽपि कर्तृगामिनी कृतिर्न सर्वकर्तृगा कल्प्या, कल्पनागौरवात्; अनुपयोगाच्च। कृतेर्नित्यत्वे जीवव्यतिरिक्तकर्तृसिद्धिः अनित्यत्वेऽपि तथैव, तस्या इच्छापूर्वकत्वात्, इच्छायाश्च ज्ञानपूर्वकत्वात्। न चास्मदादीनामङ्कुराद्युपादानगोचरसाक्षाद्विज्ञानादिकं सम्भवति इति सर्वज्ञकर्तृसिद्धिः इति केचित् प्रगल्भन्ते,

तेऽपि प्रतियन्त्रणीयाः जात्यायुर्भोगाः कर्मविपाक इति शास्त्रात् अङ्कुरादीनां च जीवविशेषाणां स्थावरजातिः कर्महेतुः इति शास्त्रं सिद्धमेव इति शास्त्रं धर्मादीनामङ्कुरादिहेतुत्वं नाचष्ट इति विस्पष्टं वचो वैयात्यमूलमेव। "फलिन्यो न ओषधयः पच्यन्ताम्" "फलिन्यो ह वै तत्रौषधयः पच्यन्ते। यत्रैतेन यज्ञेन यजन्त[1]" इति

---

1. तै. ब्रा. 3. 8. 13.

यजुर्मन्त्रब्राह्मणाभ्यामङ्कुरादेः कर्मकार्यत्वावगमाच्च। धर्मत्वं च चोदनैकप्रमाणकम्। अपरथा सर्वज्ञाभिमतबुद्धाद्युपदिष्टचैत्यवन्दनादेरपि धर्मकोटित्वमग्निहोत्रादिवत् केन वार्येत। यदीश्वरस्य योगिनां वा धर्मः प्रत्यक्षः कुतस्तदा बुद्धस्य न स्यात् विप्रलम्भार्थमन्यथोपदेशश्चेत्तर्हि वेदविरुद्धसिद्धान्ताविशेषात् नैयायिकाभिमतेश्वरकल्पनायां न विश्वासलेशः स्यात्, निराकरिष्यते च प्रत्यक्षत्वं धर्मस्य। अतो वेदैकवेद्यस्य धर्मस्य वेदोदितं तत्तदुचितफलजनकत्वं विनापि प्रयत्नान्तरं न विरुद्ध्यते। दृश्यते च विनाऽपि प्रयत्नं निधनादिप्राप्तिः। कुर्वन्तोऽपि महान्तमुद्योगं दुर्गता एव केचित्। ततो विज्ञायते धर्माधर्मार्थप्रयत्न एव प्रयत्नान्तरनिरपेक्षः शुभाशुभफलहेतुः। एतेन—

"तस्माद्दृष्टविरोधेन देवताराधनात्फलम्।
न त्वपूर्वात्कर्मणो वा केवलात्तद्विरोधतः॥" भा. ३. २. ४१.

इति आचार्यवाचस्पत्युक्ताभिप्रायः, "फलमत उपपत्तेः" इति व्याससूत्रमपि शिथिलीकृतम्। भूपालस्य सेवादिकर्मणा प्रसादनवदग्निहोत्रादिना महेशप्रसादनानुमानस्यावैदिककर्मणाऽपि प्रसादने दृष्टान्तलाभादग्निहोत्रादिना प्रसादननियमासिद्धिप्रसङ्गेन पराहतत्वात्। "वसुदान" इत्याद्यागमस्य च उपासनार्थगुणारोपपरत्वादग्निहोत्रादिफलदातरि न मानत्वम्, येनैतदनुमानम् तदर्थसम्भावकं स्यात्। तथा च सौषुप्तप्राणप्रेरणोपयुक्तः प्रयत्नो जीवस्य ज्ञानेच्छाभ्यामनुत्थापितोऽपि नैयायिकैरङ्गीकृतः। सुकृतादिवासनैव तथा, व्यापकस्य तस्य तत्तदङ्कुराद्यनुकूलः प्रयत्नः किमपि नाङ्गीक्रियते।

किञ्च, ईश्वरप्रयत्नोऽपि न कुलालादिप्रयत्नतुल्यः, युतायुतकरणशून्यत्वात्तस्य। न चैवं बहुकर्तृगामिनी कृतिः इति कल्पनागौरवम्, साधारणकार्यस्य जीवानां प्रत्येकमदृष्टकल्पनायामिवागौरवात्; अत एव नानुपयोगः। नित्यानां च कृतौ नादृष्टापेक्षापि युक्तिमती, ईशस्य परोद्युक्तस्य निर्विषयप्रयत्नासम्भवेन स्वयमेव सर्गादिसम्भवात्। एवं चानवच्छिन्नतया इदानीमिव सर्गप्रलयौ स्याताम् नात्यन्तिकौ, ज्ञानेच्छयोरपि प्रयत्नप्रवर्तकयोरीशस्यैकरूपत्वात्।

यदप्याह किरणावलीकारः—"यद्यपि भगवत इच्छा अस्ति इत्येवमाकारैकैव, तथाप्युपाधिभेदात् सञ्जिहीर्षा चिकीर्षा इत्यादिरुच्यते उपाधिरपि कालविशेषो वर्षशतान्तादिशब्दवाच्यः, तदुत्पत्तिरेवेच्छाया उत्पत्तिः" इति, तदप्यचारु, उपाध्यनेकाकार-

त्वमन्तरेणासम्भवेन परस्परव्यपेक्षत्वात् । तथा हि—सर्गानुकूलः सर्गेच्छामन्तरेण संहारानुकूलश्च सञ्जिहीर्षामन्तरेण कथमुत्पद्येत उद्वाहादिवाञ्छयैव तदनुकूलकालसाधनदर्शनात् ।

यदि लब्धवृत्ति प्राण्यदृष्टं भगवदिच्छानियामकं तर्हि, तस्य वृत्तिलाभोऽपि तदधीन इति स एव दोषः । सहकारिलाभ एव वृत्तिलाभः । सहकारि च वर्षशतान्तादिकाल इति ब्रुवतश्चादृष्टवृत्त्या सहकारिकाललाभेनेच्छानियमः, ततः कालनियम इति पूर्वदोष एव ।

किञ्च अदृष्टस्य भगवदिच्छाकृतिनियामकस्याङ्कुराद्युपादाननियामकता केन वार्येत? न चैवम् घटाद्युपादाननियामकताऽपि प्रसज्येत । अथेश्वरवादिनामीश्वरप्रयत्नस्य घटादावङ्कुरादौ च तुल्यत्वेऽपि कुलालादिप्रयत्नावकाशः, तथाऽदृष्टवादिनोऽपि सम्भवात् । इतश्च नात्यन्तिकसर्गप्रलयौ ; प्रलये हि चिरकालं भोगो विच्छिद्येत, न च तद्युक्तम् ; कर्मवतां युगपद्वृत्तिनिरोधस्याप्रामाणिकत्वात् । तदाहुः भट्टपादाः :—

"न च कर्मवतां युक्ता स्थितिस्सम्भोगवर्जिता ।" इति । (श्लो. वा. 1. 5. 69)

**स्यान्मतम्** विवादास्पदानि सर्वप्राणिकर्माणि कदाचिदपर्यायं फलारम्भवैमुख्यभाञ्जि कर्मत्वात् सुषुप्तकर्मवत् , **नैतत्** ; दृष्टान्ते साध्यवैकल्यात् ; यस्माज्जात्यायुर्भोगाः कर्मविपाक इति त्रैविद्यवृद्धाः । न खलु जात्यायुषी अनारभमाणानि तानि भोगाय कल्पन्ते, तत्र यद्यपि सुप्तकर्माणि न जातिमारभन्ते, नापि भोगम् ; तथाऽप्यायुरारभन्त एव । तथा च श्रुतिः—"प्राणेन रक्षन्नवरं कुलायम्" इति । "प्राणोऽपि तत्कर्मवशादेव शरीरं परिपालयन् वर्तते स्वप्नसुषुप्तयोः मृतभ्रान्तिपरिहाराय" इति सम्प्रदायकर्तृवचनाच्च । अत एतदनवकाशम् यदाहुः—"पूर्वारम्भपरिक्षयादुत्तरारम्भवैमुख्याच्चान्तरालकालःप्रसुप्तिः" इति । अतः साध्यविकलो दृष्टान्तः ।

यदप्युवाच **उदयनः** — सुषुप्तवद्वृत्तिनिरोधश्चेत्क्रमेणैव प्रलयः स्यात् इत्याशङ्क्य न च स्वहेतुबलायातैः कारणैः कार्यैर्वा क्रमेण भवितव्यम् अनियतत्वादेव । अतो युगपत्प्रलयः सर्वग्रासोपरागवत् त्रिदोषसन्निपातवद्वा । तथा हि—वातपित्तश्लेष्मणां च प्रकोपप्रशमक्रमाभावेऽप्येकदा सन्निपातः स्यात् तदा देहसंहारः तथा अनिलानलपवनमहार्णवानां सन्निपाते, ब्रह्माण्डदेहप्रलयावस्थायां युगपदेव भोगरहिताश्चेतनाः स्युः इति, **तदसारम्** ; साम्प्रतमिवाहोरात्रस्यानादिकालमहोरात्रपूर्वकत्वानुमानेन प्रलयासम्भवात् ।

**यद्प्यूचे**—अहोरात्रमात्रपूर्वकत्वे सिद्धसाधनत्वम्, निरन्तपूर्वकत्वे चाप्रयोजकत्वम् सर्गानुवृत्तिनिमित्तब्रह्माण्डस्थितिरूपकालोपाधिनिबन्धनत्वात्तस्य, तदभाव एव व्यावृत्तेः। उदयनस्य उक्तोपाधिव्यावृत्तौ साध्यव्यावृत्तेः प्रलयानङ्गीकारकरणोपन्यासवन्तं प्रत्युदाहर्तुमशक्यत्वेनोपाधेः साध्याव्यापकत्वात्। अथ समव्यापकोऽयमुपाधिः, एवमपि दिनमणिभ्रमणपूर्वकाहोरात्रस्य ब्रह्माण्डस्थितिकालत्वेनैव सम्भवेन साधनव्यापकत्वात्, तथाऽपि सर्गाद्याहोरात्रपक्षीकारादाश्रयासिद्धिः इति चेत्, मैवम्; स्वप्रसिद्धस्वायम्भुवमन्वन्तरादेवाद्याहोरात्रपक्षीकरेणाप्यस्यार्थस्य साधयितुं शक्यत्वात्। ततो न सर्गप्रलयसद्भावः, नाप्यनयोः फलमस्ति, देहादिसर्गप्रलयमात्रेणापि कर्मफलभोगसिद्धेः।

अथापि क्रीडार्थं स्वातन्त्र्यप्रकटनार्थं वा भगवान् करोति, तर्हि सृष्ट्यन्तरमपि तथैव कुर्यात्। किञ्च कर्मणां वैफल्यम् वैषम्यनैर्घृण्यादिदोषः, अतः कर्मपरतन्त्र एव करोति इति तेषां प्रसुप्तानामुद्बोधकं वक्तव्यम्। तच्चेदीश्वरेच्छा, तर्हि सैव कर्मोद्बोधमिव कर्मनिरपेक्षैव सर्वं किमिति न कुर्यात्। तस्याश्च कर्महेतुकत्वे उक्तो दोषः। अथ तस्या निमित्तान्तरं भविष्यति तर्हि तदेव तामिव सर्वं कुर्यात्। तदाहुर्भट्टपादाः :—

> "कर्मणां वाप्यभिव्यक्तौ किन्निमित्तं तदा भवेत्।
> ईश्वरेच्छा यदीष्येत सैव स्याल्लोककारणम्॥
>
> ईश्वरेच्छावशत्वे च निष्फला कर्मकल्पना।
> यद्वा तस्या निमित्तं यत्तद्भूतानां भविष्यति॥"[1]

इति। भूपालदेरनित्येच्छायास्सेवादिकर्मजन्यत्वसंभवात् फलदाने प्रवृत्तिहेतुत्वं युक्तम्, न नित्यैकरूपायाः।

**एतेना**ग्निहोत्रादिफलं सम्प्रदानादिविज्ञानवता दीयमानं व्यवहितफलत्वात् सेवादिफलवत् इत्यपास्तम्। न च नित्यत्वे ज्ञानेच्छादौ प्रमाणम्। **अथ** अयं घट एतज्जनकानित्यज्ञानेतरज्ञानजन्यः जन्यत्वात् पटवत् इत्यनुमानात् नित्यज्ञानसिद्धिः। एवमिच्छाप्रयत्नविशेषणात् तयोरपि सिद्धिः इति मतम्, नैतन्मनोहरम्; उक्तविधज्ञानाद्यजन्यादृष्टजन्यत्वेनापि जन्यत्वोपपत्तेरप्रयोजकत्वात्। एतज्जनकानित्यादृष्टेतरादृष्टजन्यत्वानुमानप्रसराच्च।

1. श्लो, वा. 1, 5, 72, 73. संबन्धाक्षेपपरिहारे

अथात्मत्वम् नित्यविशेषगुणवन्निष्ठं आत्मत्वात् सत्तावत् । न च स्पर्शसह-भावित्वमुपाधिः, पृथिवीत्वस्य स्पर्शसहभावित्वे नित्यविशेषगुणवन्निष्ठत्वाभावेन साध्या-समव्यापकत्वात् विषमव्यापकत्वाङ्गीकारेऽपि यत्र स्पर्शसहभावित्वं नास्ति, नास्ति तत्र विशेषगुणवन्निष्ठत्वम् मनस्त्व इव इति व्यतिरेकव्याप्तौ अनात्मजातित्वस्य उपाधित्वात् (सत्तायाप्यलत्वाच्च) । न च पृथिवीत्वं नित्यविशेषगुणवन्निष्ठम् परमाणुजातित्वात् सत्तावत् इत्यतिप्रसङ्गः ; " पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यनुकूलश्रुतिवदत्र प्रमाणवैधुर्येण पृथिवीविशेषगुणानां पाकजत्वग्राहकप्रमाणविरोधेनानु-मानानुत्थानात् । ततो नित्यज्ञानादिसिद्धिः ।

**नैतच्चतुरश्रम्;** आत्मत्वं न विशेषगुणवन्निष्ठम् जलाद्यवृत्तित्वात् पृथिवीत्ववत् इति प्रत्यनुमानात् आगमस्य चागमान्तरानुसारेण निर्गुणवस्तुपरस्य वा जीवगतज्ञानात्मक-शक्तिपरस्य वाऽत्रौदासीन्यात् ।

अथ पार्थिवद्व्यणुकादि नित्यविशेषगुणवज्जन्यम् कार्यत्वात् आप्यद्व्यणुकादिवत् । न च नित्यविशेषगुणसमवायिसिद्ध्यार्थान्तरता, पार्थिवाणूनां नित्यविशेषगुणत्वस्य उभया-संवादात् । नैषोऽपि साधुः प्रयोगः ; तादृक् समवायिजन्यत्वेन परमाणुजन्यत्वाभावानु-मानात् ।

अथ वायुत्वं रूपात्यन्ताभाववन्नित्यविशेषगुणवन्निष्ठात्यन्ताभावप्रतियोगि द्रव्यत्व-व्याप्यजातित्वात् इति प्रयुज्यते । न च वायुनिष्ठात्यन्ताभावप्रतियोगित्वमुपाधिः पक्षेत-रत्वात् इति । भवतामीश्वराभिमते वर्तमानात्मत्वेन व्यभिचारान्न तत्प्रयोक्तव्यम्, तत्र द्रव्यत्वव्याप्यजातित्वे सत्यपि यथोक्तसाध्यभावात् ।

यच्चेश्वरज्ञानं नित्यम् द्विष्ठव्यतिरेके सति ईश्वरनिष्ठत्वात् तन्महत्त्ववत्, न चैवं जीवज्ञानमपि नित्यम् द्विष्ठव्यतिरेके सति जीवनिष्ठत्वात् तन्महत्त्ववत् इति अतिप्रसङ्गः, जीवज्ञानस्यानित्यत्वग्राहकविरोधात् । तच्च न, ईश्वरस्य स्वनिष्ठप्रत्युत्पन्नघटादिसंयोगाद्या-धारत्वधर्मस्य घटादीतरधर्मित्वेन साम्प्रतमेव क्रियमाणनिर्णयव्यावर्तनीयपक्षत्वेन च तन्निष्ठेन व्यभिचारात् । ईश्वरज्ञानेच्छाप्रयत्ना आश्रयव्यापिनो नित्यगुणत्वात् रूपवत् इत्यप्रयोगोऽत एव नित्यत्वस्य दुर्वचत्वात् । तस्मान्न नैयायिकप्रक्रिययाऽपि जगज्जन्मादिरिति सुशकम् इति ब्रह्मलक्षणमसम्भवदुष्टम् इति सिद्धम् ।

एवं प्राप्ते सिद्धान्तः—"**जन्माद्यस्य** यत" इति ।

"यतो वा इमानि भूतानि जायन्ते इत्यादिका सर्गप्रलयोपवर्णनमुखेन **तद्ब्रह्म तद्विजिज्ञासस्व** इति दैवपुरुषकारप्रभावप्रदर्शनार्थम् । सर्वे हि तत्प्रभावेन प्रवर्तन्ते तदुपरमे वोपरमन्ति" इति **भट्टपादै**रुक्तत्वात् नैव श्रुत्याऽपि सर्गादिसिद्धिः, इदमसमञ्जसम्; शब्दस्य वह्न्यादाविव स्वार्थबोधनेऽनाधेया शक्तिः इति, औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति स्थितत्वात् । यदि पौरुषेयसङ्केताधेया शब्दे शक्तिः, तदा तदाधानात्प्रागबोधकतया शब्दे न सङ्केत एवावतरेत् । **अथ** सर्गकाले सर्वज्ञेन सङ्केतिताश्शब्दाः अस्मदादीनां व्यवहार्याः । **न च** आद्यसङ्केतकरणमपि 'इदं नामास्य' इति इदमा निर्दिश्यैव इति स्वाभाविकत्वासिद्धिः प्रमाणान्तरसिद्धे सामान्यविशेषशब्दयोः सङ्केतात् प्रथमव्युत्पत्तौ; अतस्सङ्केताधीन एव शक्तिरस्य इत्यादिसामान्यशब्देऽपीष्टादिशब्द इव, **मैवम्**; प्रतिशब्दं प्रयोगकल्पनस्य वाचकशक्त्यालोचनपूर्वकत्वाभावे प्रमात्वायविशेषापातात् । प्रतिशब्दं तथा सङ्केते च द्रव्यगुणकर्मादिशब्दार्थाव्यवस्थितत्वापत्त्या बहुकल्पनाप्रसङ्गात् । ततः पूर्वपूर्वकल्पप्रयोगानुसरणेन भगवानपि प्रयोगान् कल्पयति इति न तेनाप्याधेया शब्दे शक्तिः; ततः पुरुषबुद्ध्यपेक्षाभावादपौरुषेयत्वे संबन्धस्यानपेक्षतालक्षणं शब्दस्य प्रामाण्यं स्थितम् । औत्पत्तिकं च शब्दस्य विवक्षितार्थत्वम् । क्वचित्तु प्रमाणान्तरविरोधादविवक्षितार्थत्वमपवादः; अङ्कुरादीनामिव तेषामपि जीवविशेषाधिष्ठितत्वेन भोगोपयोगिभावसम्भवात् । अन्यथा मनुष्यादिशरीरादिष्वेव कर्मानुसारेण सञ्चारोपपत्तौ तत्सर्गादिक्रमपि न स्यात् । एतत्स्थूलशरीरमात्मन इति पञ्चीकरणप्रकरणे भाष्यकारवचनाच, कर्मविपाकस्मृतेश्च—

> "ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च ।
> उत्तमां सात्विकीमेतां गतिमाहुर्मनीषिणः ॥"

इत्यादेरव्याकृताख्यमूलाभिमानपर्यन्तं कर्मफलावगमात् अङ्कुरादीनां रेतोगर्भाद्यभावेऽपि कर्मफलस्थानत्ववत् आकाशादेरपि तथात्वम् । तेषां लीलादेहेन विशेषभोगसम्भवाच, पृथिव्यादेर्लीलाविग्रहस्मरणाच । न च त्रिवृत्करणादौ विभज्यमानानां पूर्वाधिष्ठातृभिः परित्यागनाशादिव्यवहारः, वृक्षादेरवयवशेषस्यापि जीवनदर्शनाच, जलोदरादिवृद्धाविव भूतान्तरागमेऽपि तत्त्वाविघाताच, भूतेषु कारणदेवताया जीवात्मनाऽनुप्रवेशश्रवणाच

वृक्षादेः स्वपरकर्मफलोपभोगार्थसर्गादिसम्भवाच्च । "शतायुर्वै पुरुष"[1] इति स्थितिकाल परिमाणश्रवणात् तदन्ते प्रलयाच्च सर्गप्रलयसद्भावसिद्धिः । प्रलयकालपरिमाणं तद्विधायक स्मृत्यनुमितश्रुतिप्रमाणकं नापनेयम् । जीवमायाविषयीकृतस्य ब्रह्मणः तत्र विद्यमानमाया विकारैस्सर्वज्ञत्वादिगुणस्य व्योमादिनिमित्तोपादानभावसम्भवाच्च ।

अथात्माऽविद्याऽव्यक्तादिरूपेण प्रथते तदा ।
तन्निवृत्तौ निवृत्तिःस्यान्निवृतिःकेवलात्मना[2] ॥

इति वार्तिकाच्च । इतश्च न सर्गादिप्रयोजनाभावः, विध्यनुसारेण "तं यथायथोपसते" "तस्याभिध्यानात् तृतीयं विराट् सूत्रात्मापेक्षया विश्वैश्वर्यम्[3]" इति च श्रुतेरविकृते-श्वरोपासकस्य तद्भावफलार्थत्वात् अनिर्वाच्यसर्गे प्रयोजनानपेक्षणात् । न च विधौ ब्रह्मणि वा तात्पर्यवत्तां वचसां न देवतादौ प्रामाण्यम्, येन "देवो भूत्वा देवानप्येति[4]" इति श्रुतिः प्रमाणं स्यात् इति वचनीयम्; सोमेन यजेतेति सोमद्रव्ययुक्तयागविधौ गुणांशे तात्पर्याभावेऽपि प्रामाण्यवदत्राप्युपपत्तेः । महेश्वरचन्द्रयोः प्रसिद्धात् सोमशब्दा-दन्यत्र एतद्वाक्यात् लताया अप्राप्तत्वात् ।

अथ सोमेन यजेत इति सिद्धवदनुवादेन सोमगुणस्यार्थसिद्धविषयप्रमाणान्तरा-क्षेपात्तद्विशिष्टविधेरेव तत्र प्रामाण्यम् । विशिष्टविधेर्विशेषणविध्याक्षेपकत्वाभ्युपगमात् । सोममभिषुणुयात् सोमाभावे पूतिकानभिषुणुयादिति विशेषणान्तरग्रहणादभिषवणयोग्य-द्रव्यविशेषावगमाच्च; तथाऽपि सर्वत्र विशेषणस्य मानान्तरासिद्धत्वात् तथैव श्रुत्योन्मीलि-तस्य सोमादिगुणस्य "ऐन्द्रन्दधि" इत्यादिना देवतागुणस्यापि प्रामाणिकत्वमपह्नोतु-मशक्यमेव

"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः[5] ॥"

इति अपूर्वस्य कर्मणोऽनेकगुणविशिष्टस्य विद्ध्यङ्गीकाराच्च चतुर्थ्यन्तशब्दमात्रस्य तदुद्भा-सितरूपविशिष्टस्य वा बुद्धिशरीरस्य देवतात्वे "वज्रहस्तः पुरन्दरः" इत्यादिविशेष-

---

1. तै. ब्रा. 3. 8. 60
2. बृ. वा. Page 386.
3. श्वे. 1. 11.
4. बृ. 6. 1. 2.
5. तन्त्रवा. 2. 2. 6.

स्वरूपवर्णना, अहल्याजारत्व - वृत्रवधकर्तृत्व - तीर्थप्रणेतृत्व - मेघवरदानादिवर्णना विफला निर्मूला च प्रसज्येत ; कल्पमन्वन्तरादिकालभोग्यकर्मविशेषफलानां च मर्त्यदेहभोग्यत्वासम्भवात्तद्विषयाः वेदवादाः बार्हस्पत्यानामिव विकत्थिताः स्युः । प्रमाणान्तरप्राप्तिविरोधयोश्चासतोः देवतादौ मन्त्रादिपदसमन्वयस्यापाकरणायोगाच्च । अन्तर्धानानेकशरीरधारणादिशक्तियोगाच्च न यागादौ दर्शनयुगपद्भागग्रहणासम्भवादिदोषप्रसङ्गः, एकदेहत्वेऽपि तस्या भानोरिव तदुद्देशेन युगपदनेकेषां हविस्त्यागो नमस्कारवन्न विरुद्ध्यते । अतः सर्वथाऽस्त्येव विग्रहवती देवता ।

तस्याश्चानित्यत्वेऽपि शक्रत्वादिजातेर्नित्यत्वाङ्गीकारात् । शक्रादिव्यक्तीनां क्रमेणानेकत्वात् तदनुगतजातित्वोपपत्तेश्च । "युगपत्कार्त्स्न्येनानेकत्र वर्तमाना जातिः" इति लक्षणे च प्रलये ज्ञानत्वादिजातिरीश्वरज्ञानादिषु दिनादौ दिनत्वादिजातिश्च न स्यात् । अनेकत्र कार्त्स्न्येन वर्तमाना जातिः इति लक्षणाच्च । तस्याश्च शक्रादिशब्दार्थत्वेन शब्दार्थसम्बन्धस्यानित्यत्वाप्रसङ्गाच्च विग्रहवत्त्वे न कश्चिद्दोषः । तत्र स्थावरभावादारभ्य यावदव्याकृतभावस्तावत् सर्वं कर्मविपाककुटुम्ब एव, तेन कर्मफलोपपादनार्थमेवात्यन्तिकसर्गप्रलये । महालये जात्युच्छेदेऽपि सुप्तोत्थितवत् अनादौ संसारे लयोत्थितस्य धातुः पूर्वतुल्यप्रवृत्तेरदोषः ।

यदि नाव्याकृतभाव उपासनादिक्रियाफलम्, किन्त्वनादिविक्षेपप्रधानमायायामविद्यामय्यां तद्विलक्षणायां वा स्वोपहितेश्वरस्वरूपानावरकत्वात् प्रतिबिम्बितं चैतन्यम् ईश्वरो जगत्कर्ता जीवानां प्रशास्ता न कदाचित्संसारि न कदाचिदन्योपाधिप्रध्वंसेन केवलबिम्बकल्पचैतन्यात्मना स्थितिमागव्याकृताह्वयोऽनादिसिद्ध एव तदापि यदि तदुपासकः फलभाक्, तदा पूर्वसिद्धेश्वरभावस्येदानीमसाध्यत्वादुपहितस्योपासकस्य उपहितैक्यायोगाच्चानन्ताव्याकृतेश्वरप्रसङ्गो दुर्वारः । तथा च इष्टसिद्धिः :—

> "विद्याक्रियाभ्यां न ब्रह्मपूर्वसिद्धं भवेदयम् । [सदाभूतं भविष्यति]
> कुलालव्यापृतेः किं स्यात्पूर्वसिद्धघटादयः ॥" (इ. सि. 2. 88.)

इति । न च स्वरूपविषयप्रामाणिकसाक्षात्कारे सति कदाचिदप्यनुच्छिद्यमाना माया माया भवति । मायायाः साक्षात्कारे व्याघ्रादिभावलक्षणमायायाश्च्छेददर्शनात् । हिरण्यगर्भस्यापि सहैव ब्रह्मविदसमाजेन तथाऽन्येषां च विद्यया कैवल्याशा समुच्छिद्येत भगवतो मायाया अनिवृत्तौ । न च मिथ्यात्वेऽपि अनादित्ववदनुच्छेद्यत्वमपि मायायाः

उच्छेदात्मकबाधाभावे मिथ्यात्वस्यैवायोगात् । अतो यथा प्रतिकल्पं भिद्यते हिरण्यगर्भस्तथैवाव्याकृतेश्वरोऽपि । न चैवम् "नेतरेऽनुपपत्तेः" इत्यादिन्यायस्य जीवस्य सर्गकर्तृत्वादिनिषेधकस्यानवकाशः, यतो हिरण्यगर्भावधिरेव जीवव्यपदेशः अव्याकृतः पुनरीश्वरव्यपदेश एव ; यथा ब्रह्मभूयंगतस्य बिम्बतैव ।

किञ्च हिरण्यगर्भोऽपि प्रायः परत्वेनोच्यते, किमु अव्याकृतः । "हिरण्यगर्भः उपाधिशुद्ध्यतिशयापेक्षया प्रायशः पर एवेति श्रुतिस्मृतिवादाः प्रवृत्ताः । संसारित्वं तु क्वचिदेव दर्शयति" इति बृहदारण्यकवृत्तावाचार्यैरभिधानात् । तस्मात् बिम्बमेव अनादिरीश्वरः, तस्य प्रतिबिंबत्वे अनादिप्रपञ्चभ्रमाधिष्ठानस्य निरङ्कुशनियन्तृत्वाद्यनुपपत्तिः प्रतिबिम्बस्य प्रतिबिम्बनियन्तृत्वाद्यसिद्धेः प्रसज्येत । तथा च श्रुतिः—

"यथा वटबीजसामान्यमेकमनेकान् स्वाव्यतिरिक्तान् सबीजानुत्पाद्य तत्र पूर्णं सन्तिष्ठति एवमेवैषा माया स्वाव्यतिरिक्तानि पूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति सैषा चित्रा सुदृढा" इति एकेनैव ब्रह्मण आभासेन स्वयमविद्याव्यपदेशवती जीवव्यवहारं, कर्मविद्याविशेषाभ्यां तिरस्कृतावरणसामर्थ्यात्, जीवानां तूपाधिगताशुद्धिबाहुल्यात् संसारित्वमेव प्रायशोऽभिलप्यत इत्याचार्योदीरणात्, मायाव्यपदेशवती चेश्वरव्यवहारं प्रकृतिः करोति इत्यर्थः । "चित्रा सुदृढा" इति चित्रव्योमादिविवर्तवती, न स्वप्नवद्दृढा ; किन्तु जाग्रद्व्यवहारस्य कर्मकाण्डानुबन्धस्य निर्वाहहेतुत्वेन सुदृढा । (नृसिंहो. 9)

तथा च श्रुतिः—(नृसिंहो. १)

"हिरण्यगर्भस्त्रिरूप ईश्वरवद्व्यक्तचैतन्यः सर्वगो ह्येष ईश्वरः क्रियाज्ञानात्मा सर्वं सर्वमयं सर्वे जीवाः सर्वमायास्सर्वावस्थास्थितिः" हिरण्यगर्भो हि व्याकृतजगदात्मस्वरूपभावनया तदात्मभावफलभागी तस्य वृक्षस्येवाव्याकृतम् जडमज्ञानलक्षणं क्रियाज्ञानवासनोपेतं जगदङ्कुरावस्थामूलं "तद्धेदं तर्ह्यव्याकृतमासीत्" इति श्रुत्योक्तम् । मूलोच्छेदे हि संसारवृक्षस्योच्छेदस्संभवति इत्यतो मूलवर्णनम् इत्याचार्याः ।

ब्रह्मणस्स्वयं कारकत्वाभावान्न मायाब्रह्मणी सूत्रद्वयवद्रज्ज्वाः कारणं मायासहकृतं वा ब्रह्म, किन्तु जगदात्मना विवर्तमानमायाधिष्ठानस्यैव ब्रह्मणः कारणत्वम् इति स्वीकारात् । अन्तर्यामी चेश्वरो नियम्यजीवकार्यकरणैरेव कार्यकरणवान् नियन्ता इति सिद्धान्तकारोऽपोषीत् । जीवाविद्ययैवाविद्यावान् इत्यपि सम्भवात् । अतः समस्तसाक्ष्ये-

वान्तर्यामी वक्तव्यः। अतो नोपाधिभेदो युक्तः हिरण्यगर्भस्यैव लिङ्गसमष्ट्यात्मकस्य भूतानां पञ्चीकरणेन स्थूलविराडादिकारणत्वसम्भवात्। यदि चोपाध्यन्तरमव्याकृतमीश्वरस्य, तर्हि हिरण्यगर्भस्य बीजावस्थेयम्। एतदुच्छेदेन संसारवृक्षोच्छेद इत्यादिभाष्यवार्तिकविरोधः।

अथ अनन्तजीवोपाध्यनन्ताज्ञानावयवसमाहाररूपा मायैवाव्याकृतम्, तत्त्वज्ञानेन च तदवयवा उच्छिद्यन्ते; ततो न विरोधः, तदापि समष्टिसृष्टेः कारणसमष्टिशरीरहिरण्यगर्भोपाधिमायावयवोपाधेरेवेश्वरस्य साधारणसृष्टिकर्तृत्वम् जीवोपाध्यविद्यावयवानां साधारणसृष्टिपरिणामानभ्युपगमात्। अथ तत्तदवयवोच्छित्तौ समष्टीश्वरोच्छित्तिभयात् स्वतन्त्रैव काचिन्माया परोपाधिरव्याकृतशब्दार्थः, तर्हि तस्य जीवगततत्त्वज्ञानेनोच्छेदानङ्गीकारात् भाष्यविरोधस्तदवस्थः।

"यन्तृत्वहेतुविध्वस्तावेष सम्पद्यतेऽक्षरम्"[1]

प्रत्यगात्मनो नियन्तृत्वं कारणत्वञ्चाज्ञानहेतुकम् तस्य ज्ञानान्निवृत्तावेष आकाशः कार्यकारणविलक्षणमक्षरम् सम्पद्यत— इति **वार्तिकाच्च**।

किञ्च "कस्मिन्नहमुत्क्रान्त" इत्यादिना प्रागेव प्राणादिसर्गतत्सङ्कल्पपूर्वजीवसर्गाङ्गीकारश्चेत्, तन्मध्यपातिमन्त्रादिशब्दवाच्यवेदादिसर्गस्यापि तन्मूलत्वेन प्रत्येकं सर्वस्रष्टृत्वं जीवानामनिवार्यम्।

"विज्ञानपुरुषस्येदं स्वभावादेव सर्वदा।
आत्मैव हि जगत्कृत्स्नं साधारणविशेषवत्॥

अभिव्यक्तेः पुराऽप्येतद्रूपमासीत्स्वभावतः।
अभिव्यक्ता तु तत्साक्षात्समष्टिव्यष्टिलक्षणम्॥"[2]

इति वार्तिकाच्च प्रत्येकं सकलप्रपञ्चलाभः। अथ इयमपि मायोपाधिसृष्टिः, गतम् तदा षोडशकलोच्छेदवादेन, दृश्यते च चन्द्राद्यधिष्ठानस्समारोपिताकाशविशेषो भूमिष्ठैः, स च जीवाविद्याजन्योऽभ्युपेयते, असाधारणत्वात्। एवं तत्र तत्र उपादानतयाऽनुवर्तमाना-

---

1. बृ. वा. 3. 8. 43.  2. बृ. वा. 5. 16. 48, 50.

ऽविद्या पटान्तरकल्पमायावयवत्वशालिनी स्यात् । "अनेन जीवात्मनाऽनुप्रविश्य"[1] "स एष इह प्रविष्ट[2]" इति श्रूयमाणः प्रवेशः किमीक्षणकर्तुः कारणस्य, चिन्मात्रस्य वा? आद्ये, नित्यमुक्तत्वम् बद्धत्वं च मायोपाधेः । अन्त्ये अन्यस्येक्षणप्रवेशसङ्कल्पः, अन्यस्य प्रवेश इति किम् केन सङ्गतम् ?

अथ अनादिसिद्धे प्रतिबिम्बतया प्रवेशे पिपतिषावत् सङ्कल्पश्रुतिरुपचरितार्था इति मतम्, तर्हि व्योमादिसर्गसङ्कल्पो मुख्य इति का प्रमा । चेतनस्य स्वगतविकाराभावान्मायावृत्तय एव सङ्कल्पादिरूपाः स्वरूपज्ञानेनान्तर्बहिर्भास्यमानास्तद्धर्मतया समारोप्यमाणा ईक्षणादिवेदप्रामाण्याय, तच्च न स्वतन्त्रमेवोपाधिमपेक्षते । विशेषतश्च तत्त्वज्ञानेनाप्यनुच्छेद्यम् ।

किञ्च यदि विच्छिन्नोपाधिः, तदा तस्यापि यद्विज्ञानात्सर्वविज्ञानम् तत्सर्वभ्रमाधिष्ठानमायाविषयीकृतम् तत्त्वम्पदार्थ इति तत्पदार्थत्वे स्थिते स्फुटमजागलस्तनायमानत्वम् । यच्च स्वतन्त्रोपाधिकृतं कारणत्वम् जीवानामतद्भ्रमहेतुः, स एवोपाधिश्चेत्भ्रमान्तरस्यापि स्यात् । अतः स्वोपाधिकृतः कारणत्वज्ञानमात्राध्यासः, तदा जीवदृष्ट्या नास्ति कारणत्वं नामार्थ इति तत्पदवाच्यं निरालम्बनं ज्ञानमात्रं स्यात् । यदा पुनरनिश्चितरज्जुन्यायः, तदा प्रत्येकम् "पूर्णमदःपूर्णमिदम्"[3] इत्याद्युपदेशेन सर्वजडांशस्य सर्पादिवदुच्छेदेन तत्त्वम्पदार्थयोस्सैन्धवघनवद्विज्ञानघनताविर्भावो मोक्षः क्षोदक्षमस्स्यात् । अपरथा, एकतरोपाध्यनुच्छेदेनार्धजरतीयं भवेत् ।

"बोधाबोधौ नभो दृष्ट्वा कृत्स्नधीनीडगौ यथा ।
बाध्येतरात्मकौ स्यातां तथेहात्मनि गम्यता ॥"

इति जीवगताज्ञानविषयतया जगद्धेतुतादिभ्रमवर्णनाच्च । एतदेव स्फोरयति —"सर्वे जीवास्सर्वमया" इति । यदाहुः :—

"यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमुत तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवत्" इति । प्रतिजीवं विद्यया सर्वस्य आत्मतयोपसंहारश्रुतेश्च प्रतिजीवोपादानत्व-

---

1. छा. 6. 3. 2. 2. बृ. 1. 4. 7.
3. बृ. 5. 1.

प्रतीतेः । ततो नात्यन्तिकसर्गप्रलययोरसम्भवः । अत एव च "आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति स इमान् लोकानसृजताम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठान्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः[1]" इति लोकमात्रसृष्टिः अन्यत्रापि महाभूतसृष्टेरुपलक्षणार्था । "नान्यत्किञ्चित्" इत्यत्रापि कात्स्न्येनाभावश्रवणात् प्रसूतिरपि कात्स्न्येन गम्यते । कारणात्मावशेषश्रवणाच्च शून्यकारणवादोऽप्यपास्तः । छन्दोगश्रुतौ च "तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतस्सज्जायत" इति पूर्वपक्षत्वेन शून्यकारणवादमुत्थाप्य "कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतस्सज्जायेत" इति निर्युक्तिकत्वेन तन्निराकृत्य "सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् तदैक्षत बहु स्याम् प्रजायेय" इति सत्कारणवादं निर्दधार भगवती श्रुतिः । ततोऽन्यत्रापि "असद्वा इदमग्र आसीत्" इत्यादौ व्यक्तकार्यविधुरे सत्येव कारणे प्रयुक्तोऽयमसच्छब्द इति गम्यते । न च "असद्वा इदमग्र आसीत् ततो वै सदजायत"[2] इति "[3]असदेवेदमग्र आसीत् तत्सदासीत् तत्समभवत्" इति च शाखान्तरीयोऽसद्वादोऽनुदितादिहोमवदितरत्र निन्द्यत एव, न वस्तुतो निरस्यत इति वाच्यम्; "अस्ति ब्रह्मेति चेद्वेद" इत्यादिना ब्रह्मणि सति वर्णिते "तदप्येष, तत्र चैषश्लोको भवति असद्वा" इत्यवतारणात् "अव्यक्तनामरूपं सदेवासत्" इत्युक्तं इत्यवधारणात् । "तत्सदासीत्" इत्युत्तरसच्छब्दात् वन्ध्यासुतादौ कार्योन्मुखत्वेनाप्यप्रवर्तनात् "असदेवेदम्" इत्यत्रापि सन्निर्देशावगमाद्वैदिकत्वसिद्धेः ।

ननु नैवम्; बौद्धसिद्धान्ते तावत् आकाशम् निरुपाख्यम् । न च शब्दस्याश्रयान्तरानिरूपणात् तदाश्रयस्य नभसो न शून्यत्वं; शब्दतन्मात्रं नभोऽजायत इतिवदत्र आश्रयाश्रयिभावानिरूपणात् नित्यं च विभु च द्रव्यं स्वतन्त्रं शब्द इति वदतोऽपि । योगपैठरादिमते तु विनाऽपि विकृतिं कर्णशष्कुल्यवरोधमात्रेण नभसः श्रोत्रत्वव्यवहारवत् भेर्याद्यवरोधमात्रेण तदुपाधिकशब्दसमवायित्वव्यवहारसम्भवादनुपाख्यमेव नभः । छन्दोगश्रुतावेव च साम्नो निस्सीमप्रतिष्ठाविचारे —"[4]अस्य लोकस्य का गतिः इति आकाश इति होवाच सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो हे(ह्ये)वैभ्यो ज्यायानाकाशः परायणम् स एष परोवरीयानुद्गीथस्स एषो-

---

1. ऐ. 1. 1.
2. तै. 2. 7
3. छा. 3. 19. 1.
4. छा. 1. 9. 1.

ऽनन्त " इत्याकाशस्य जगन्मूलत्वमुक्तम् । असतश्च सत्प्रतियोगिकस्य सन्ततभावाभावात् कारणावस्थानं मा भूत् इति तस्य करणत्वप्रतिषेधोऽयम् " कथमसतस्सज्जायेत " इति न तन्निष्प्रतियोगिकस्य, तस्य सन्ततभावात् । अत एव ' सदेव ' इत्यादिवेदेनास्यैवानुच्छित्तिधर्मतया " न प्रेत्य संज्ञाऽस्ति " इति च श्रुतेः सङ्कीर्तनम् ; न मोक्षे किमपि ज्ञानमस्ति इत्यर्थः । सर्वस्य च तदभिमतस्य " नेह नानास्ति किञ्चन " " अस्थूलमनणु " इत्यादिनिषेधाद्धि सदेव परमार्थ इति गम्यते । न च निषेधस्यावधित्वेन सदवशेषलाभः स्वप्नरजतादिनिषेधे शुक्तिकाद्यवधेर्दर्शनात् । अत एव सदधिष्ठान एव भ्रम इत्यप्ययुक्तम् । न च वाच्यम् स्वप्नप्रपञ्चस्सह तत्तदारोपमालया सदात्माधिष्ठानस्तदवधिनिषेधश्च इति न शून्यवादावकाश इति । तस्याद्यापि विचार्यत्वात् ।

ननु तथाऽपि न निर्णयो, जागरेण सदधिष्ठानत्वस्यापि दर्शनात्, मैवम् ; स्वाप्नदृष्टान्तेन जाग्रत्प्रपञ्चमिथ्यात्वस्योभयसम्प्रतिपन्नत्वात् । तदेतदाहुः :—

" इदं वस्तु बलायातं यद्वदन्ति विपश्चितः ।
यथा यथार्थाश्चिन्त्यन्ते विविच्यन्ते तथा तथा ॥

बुद्ध्या विविच्यमानानां स्वरूपं नावधार्यते ।
अतो निरभिलप्यास्ते निस्स्वभावाश्च देशिताः ॥

इति । विचिन्त्यन्ते न कचिदपि व्यवतिष्ठत इत्यर्थो, न तु निर्णीयन्त इति ।

ननु बाधो विभ्रमस्याधिष्ठानविषयप्रमाणात् इति परीक्षकाः । प्रमाणञ्च प्रकाशातिशयं वा ज्ञानावरणध्वंसं वा विदधाति निरुपाख्ये च नोभयं संभवति ; ततो बाधायोगान्न शून्याधिष्ठानो जगद्भ्रमः । अथ समारोप्यस्य न्यायाघातासहिष्णुत्वमेव बाध्यत्वम् , तन्न, मूलप्रमाणविकलन्यायस्याभासत्वात् । अतस्तत्त्वावेदकप्रबलपरिपन्थिप्रमाणोपनिपातमन्तरेण प्रपञ्चावेदकप्रत्यक्षादेः कथङ्कारं व्यावहारिकप्रामाण्यव्यवस्थापनेन शून्यमेव परमार्थ इति व्यवस्थाप्येत । ब्रह्मवादिनां पुनर्नायं दोषः ; तत्राविद्यावरणध्वंसस्य प्रमाणफलत्वाङ्गीकारात् इति ।

" अकारणमकार्यं सत् कार्यकारणतामगात् ।
मोहादेव ततश्शास्त्रं तदुच्छित्तौ प्रवर्तते ॥ " बृ. वा. P. 327.

इति जगत्कारणत्वप्रयोजकमोहोच्छेदाय शास्त्रारम्भ इति सुरेश्वराचार्योक्तेश्च । जिज्ञास-

ब्रह्मविद्यया आश्रितद्वैतोच्छेदस्य सम्भावनाय प्रपञ्चमिथ्यात्ववर्णनस्याचार्यवर्यैः श्रुतफलस्य कर्मण इवापूर्वादिवर्णनस्याख्यानाच्च नायम् दोषः। कस्यचिद्विप्रलम्भकस्य वाक्यात् वन्ध्या-पुत्रो धावति इति विभ्रमे वन्ध्यापुत्रस्य तुच्छस्यैव धावनभ्रमाधिष्ठानत्वम् तुच्छत्वालोचनया धावनासम्भवेन तद्बाधावधित्वं च यथा तत्प्रतिपादकवाक्यस्य च यावद्बाधं प्रामाण्यम्, तद्वदत्रापि सम्भवात्। अतः शून्यकारणवाद एव श्रुतेरप्यभिप्रेत इति।

अत्र समाधिः :—"नाभाव उपलब्धेः" जगत्कारणमभावः शून्यं न भवति श्रुत्या प्रमाणेन सत्कारणविज्ञानात्। "एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलास्सोम्येमाः सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः" इति छन्दोगश्रुतिः "तत्तेजोऽसृजत" इत्यादिना सतः कारणत्वमुपन्यस्य सत्त्वाख्यापनमनुमानमूचे यतः।

ननु सतोऽपि निर्विकारत्वादौपचारिकमेव कारणत्वं एकस्यानेकत्वं च। अनि-र्वाच्याविद्या च जगदाकारेण विवर्तमाना उपचारहेतुः। एतच्च शून्यपक्षेऽपि तुल्यम् तेनाविद्यावच्छून्यमेव शुङ्गलिङ्गानुमेय इति चेत्।

मैवम्; अविद्यायास्साधकं न शून्यमेव तुल्यत्वात्। न च स्वप्रभत्वं अविद्यात्वव्याघातात्। न च प्रमाणं तस्यास्साधकम्, बाधकाभावप्रसङ्गात्। न च प्रपञ्चस्येव प्रत्यक्षादि साधकम्, व्यवस्थाप्रमाणभेदेनाविद्यायां प्रत्यक्षादीनामपि शून्यपक्षे चिदंशहीनानां साधकत्वात्। "अहमज्ञः" इत्याश्रयतया प्रतीयमानो यदि शून्या-न्नातिरिच्यते वन्ध्यापुत्रवत्, नैवं प्रतीयेत। न च शून्यस्यावरणीयं रूपमस्ति, येन तद्विषयत्वमविद्याया वर्ण्येत।

ननु चिदात्मनोऽपि निरंशस्य नावरणीयं किञ्चिदस्ति, सत्यम्; रूपान्तरभावेऽपि स्वरूपमावरणीयमस्ति जात्यादावन्यापोहत्वात् इति भ्रमवन्नाधिष्ठानसामान्यग्रहणादेर्भ्रम-प्रयोजकत्वम्। किन्तु अविद्याया एव। अन्यच्चापि, तस्य च प्रकाशात्मकस्य सवितुरिव जलदाद्यविद्यावरणं सम्भवति, जडस्य त्वप्रकाशमानत्वान्नाविद्यावरणकृतम्, किन्तु जडत्व-कृतमेव; तेनाविद्यापर्यालोचनया न शून्यतत्त्ववादः। अत औपचारिकमपि कारणत्वं सत एव। चेतनस्यैव च मायासचिवस्य मुख्यं कारणत्वं वेदान्तेषु स्थितमेव, अन्यस्य मुख्यस्यानिरूपणात्। न च ब्रह्मण्यविद्याविरहात् राजादिवत् स्वगतव्यापारसमारोपाभावेन वेदोक्तप्रशासनानुपपत्तिः अन्यारोपितव्यापारेण प्रधानादेरपि नियन्तृत्वं प्रसज्येत इति

वाच्यम् ; व्यापारप्रशासने व्यापारान्तराभावेऽपि चैतन्यस्यैव प्रशासनात् समारोपित-व्यापारेणापि चेतनस्यैव प्रशासनोपपत्तेः। अन्यथा साक्षात् स्वगतो व्यापारो मायाया एव इति प्रशासनकर्तृत्वं केन वार्येत ? मायाक्षोभकत्वं भ्रामकत्वादिवदुपाश्रयत्वाप्रतिबिम्बत्व-योर्युक्तम्। ततश्च सद्वस्तुन एवाविद्यातत्कार्यसमारोपाधिष्ठानत्वात् "नेह नानाऽस्ति किञ्चन" इत्यादिनिषेधोऽपि तदवधिक एव इति न शून्यपरमार्थता। मोक्षेऽपि तदनु-वर्तत इति "न प्रेत्य संज्ञाऽस्ति" इति विशेषज्ञानाभावसङ्कीर्तनमात्रम्।

न च प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधवत् बुद्धिपूर्वाबुद्धिपूर्वविनाशवदाकाशम् निरुपाख्यम्, निरोधस्यापि निरुपाख्यत्वे साध्यत्वानुपपत्तेः साधनोपदेशवैयर्थ्यात्। आकाशस्य च प्रतिबिम्बप्रदत्वान्मुखादिवन्न निरुपाख्यत्वम् प्रत्यक्षवादिनां प्रत्यक्षसिद्ध-त्वाच्च। न च आलोकाभाववन्मूर्ताभावसमारोपितनीलरूपः प्रतिबिम्बादिनिर्वाहकः, निरुपाख्यभ्रमाधिष्ठानापरोक्षभ्रमादर्शनात् केशोण्डुकभ्रमस्यापि तेजोवयवाद्यधिष्ठानत्वात्। न च मूर्तानामत्यन्ताभाव आकाशं, वन्ध्यासुतवन्मूर्तादर्शनप्रसङ्गात्। अन्योन्याभावश्च घटादीनां इतरसन्निष्ठ एव, न स्वतन्त्रो य आकाशव्यवहारालम्बनं स्यात्। प्राक्प्रध्वंसा-भावावपि मृत्पिण्डकपालादिनिष्ठौ आत्मनस्सकाशादाकाशस्योत्पत्तिश्रवणाच्च नानुपाख्य-त्वम्। न च एषा श्रुतिर्गौणी ; "आकाशाद्वायुःवायोरग्निः" इत्यादावपि तत्प्रसङ्गात्। न खलु सकृत्पठितस्यापौरुषेयस्य शब्दस्यैकत्र गौणत्वम्, अपरत्र मुख्यत्वम् इति युज्यते।

ननु वाय्वादावपि गौणत्वमेव सम्भूतश्रुतेः, परमाणूनामनुत्पादात् सजातीय-द्व्यणुकादेश्च स्वमात्रारभ्यत्वात् ; तथाऽपि तावत् "पृथिव्या ओषधयः ओषधीभ्योऽन्न-मन्नात्पुरुष" इत्यत्र तवापि मुख्ये बाधकाभावान्न गौणत्वम्। सूक्ष्माणां च तेजो-जलादीनां विरोधाभावान्न कार्यकरणभावासङ्गतिः। न च निरंशद्रव्यत्वादात्मवदाकाशस्या-नुत्पादः, स्वाप्नवदनिर्वचनीयस्योत्पादसम्भवात्। सावयवत्वानवयवत्वाभ्यामनिर्वाच्यमाया-कार्यत्वेनानवयवत्वसम्भवाच्च। न चांशवत्त्वे वायोरिव व्यजनाभिघातादिना भेदेऽपि निमित्तविशेषेणोत्पादप्रसिद्धिः स्यात्, खननादिना विवराद्युत्पत्तिप्रसिद्धेरभिव्यक्तिपरत्वात् इति शङ्कनीयम्; उत्पादेऽपि रूपस्पर्शविधुरत्वेन तमोवद्वायुवच्च दर्शनस्पर्शनायोग्यत्वेन तत्प्रसिद्ध्यभावसम्भवात्।

ननु आरब्धद्रव्यस्य रूपस्पर्शयोरन्यतरवत्त्वेनैव भोगसाधनत्वं, विषयरूपेण वाऽस्य तत्त्वम्। न च आकाशकार्यं शरीरं प्रसिद्धम् ततो नास्योत्पादः ; मैवम् ; अनिर्वाच्य-

वादान्नियमासम्प्रतिपत्तेश्च अविगीतप्रामाण्यवेदस्मृतिप्रतिपादितजीवविशेषाणां देहादित्वे-नोपयोगाच्च नारम्भवैफल्यं व्योम्नः। आसमन्तात् काशत इति आकाश इति योगवृत्ते-रपि न्यायोपगृहीतत्वात् साधोः विभुत्वादिगुणयोगात् "आकाशवत्सर्वगतं" इत्यादि-वेदात् क्लृप्ताद्रूढार्थैकदेशग्रहेण छन्दोगश्रुतौ च आकाशशब्दं ब्रह्मैव। गुणलक्षणाद्वारा-ऽर्थान्तरवृत्तेर्गौण्या इव साक्षाल्लक्ष्यार्थवृत्तेर्लक्षणायाः। श्रुतौ च आकाशशब्दं ब्रह्मैव, ततो न प्रमाणशून्येन शून्येन ब्रह्मलक्षणस्यार्थान्तरता।

अथ "न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीति अण्व्य इवेमा धाना भगव इति आसामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्च न भगव इति तं होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति" इति छन्दोगश्रुतौ सूक्ष्मतम-कारणस्योपपत्त्या निरूपणात् परमाणव एव जगत्कारणम्। नैतच्चतुरश्रम्। "यतो वा इमानि" इति 'यत' इति पञ्चमीश्रुत्या ब्रह्मणो जगन्निमित्तोपादानत्वाध्यवसायात् "जनिकर्तुः प्रकृतिः"[1] इति जायमानकर्तुरस्योत्पादनेऽपादानसंज्ञां विधाय "अपादाने पञ्चमी"[2] इति तत्र पञ्चम्या विधानान्मृदादिदृष्टान्तैः कारणविज्ञानात् सर्वविज्ञानप्रतिज्ञाया उपपादनात्, वटधानादृष्टान्तेन परमाणूपादानत्वोपपादेन च निमित्तादेस्तद्विज्ञानासम्भवात् प्रतिकूलत्वपरिहारार्थं तस्या आनुगुण्येन कारणब्रह्मगतसूक्ष्मत्वपरत्वेनाणिमदृष्टान्तनयनाच्च।

"मृदादयो हि दृष्टान्ताः प्रतिज्ञामनुरुन्धते।
धानास्तामुपरुन्धाना भक्तिमार्गं प्रपेदिरे॥"[3]

इति च कल्पतरुः। "स य एषोऽणिमैतदात्म्यमिदꣳसर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो" इति ब्रह्मण्यप्यणिमकीर्तनात् तदेव मायामहिम्ना लब्धपरिणामभावं पटाद्युपा-दानमपि।

अणोरणीयान्महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम्।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः॥[4]

---

1. पा. सू. 1. 4. 30.
2. पा. सू. 2. 3. 28.
3. क. 1. 4. 28.
4. कठ. 1. 2. 20.

इति कठश्रुतावपि अणीयश्शब्दश्चेतने प्रयुक्तः । " तदैक्षत बहु स्याम् "[1] इतीक्षणपूर्वक-बहुभावप्रार्थनया निमित्तत्त्वमुपादानत्वञ्चावेदयति वेदाचार्यः । न च पुत्रपौत्रादिना बहु-भावप्रार्थनवदिदं निमित्तत्त्वेऽपि घटते । अपरथा " तत्तेज ऐक्षत बहुस्याम् प्रजायेय " इति "ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि" इति प्रत्येकमीक्षणबहुभावप्रार्थनावर्णन-वैफल्यात् " तदात्मानं स्वयमकुरुत "[2] इति " आत्मा वै जायते पुत्रो " " अर्धो वा एष आत्मनो यत्पत्नी "[3] इत्यादिवद्योज्यम् इति शङ्कनीयम् ; तत्तदुपाध्युपरक्तस्य तस्यै-वेक्षणपूर्वकतत्तदवान्तरबहुभावप्रार्थनसम्भवान्मायाप्रकृतिमायोपाधिबहुरूपत्वादिश्रुत्यनुसारेण तदात्मानम् इत्यादिश्रुतयोऽनिर्वाच्यविकारात्मना पूर्वसिद्धमात्मानमकुरुत देवदत्त इवात्मानं व्याघ्रम् इति योजनीयाः । अतो नाणुभिरप्यर्थान्तरता न । चाणूनामुपदानत्वेऽपि मानम् ।

अथ मन्त्रवर्णात् परमाणूपादानत्वसिद्धिः—

" विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो हस्त उत विश्वतस्पात् ।
संबाहुभ्यां धमति सम्पतत्रैर्द्यावापृथिवी जनयन् देव एकः[4] ॥ "

" अत्र प्रथमेन सर्वज्ञत्वम्, चक्षुषा दृष्टेरुपलक्षणात् । द्वितीयेन वक्तृत्वम्, मुखेन वागुपलक्षणात् । तृतीयेन सर्वसहकारित्वम्, बाहुना सहायोपलक्षणात् । चतुर्थेन व्यापकत्वम्, पदा व्याप्त्युपलक्षणात् । पञ्चमेन धर्माधर्मलक्षणप्रधानकारणकत्वम्, तौ हि लोकयात्रावहनात् बाहू षष्ठेन परमाणुरूपप्रधानाधिष्ठेयत्वम्, तेन गतिशीलत्वात् पतत्रव्यपदेशः सन्धमति सञ्जनयन् इति व्यवहितोपसर्गसम्बन्धः ' व्यवहिताश्च[5] ' इति पाणिनिस्मरणात् । संयोजयति समुत्पादयन् इति चार्थः । द्यावा इत्यूर्ध्वसप्तलोकोपलक्षणम् भूमी इत्यधस्तात् । एक इति अनादिता " इति कुसुमाञ्जलिकारः । ततः परमाणूपादा-नत्वसिद्धिः,

**तदप्यसारम्** ; एकः सर्वथा भेदासहिष्णुः देवः स्वप्रकाशश्चिदात्मा एवम्भूतोऽपि सम्बाहुभ्याम् सतः परमात्मनो बहुभावकारणाभ्यां विचारासहाविद्याभ्याम् द्यावाभूमी

1. छा. 6. 2.
2. तै. 2. 7.
3. तै. ब्रा. 3. 3. 4.
4. तै. आ. 10. 1. 3.
5. पा. सू. 1. 4. 82.

जनयन् एतदुपलक्षितगगनादिसर्गकारी इत्युपादानकारणम् । तत एव विश्वतश्चक्षुः इत्यादिविशेषणम् । तथा सम्पतत्रैः पतनात् सम्यक् त्राणकारणैर्लीलावतारैः, धमति बृह्मणं करोति शब्दयति वा शास्त्राण्युपदिशति इति निमित्तकारणमपि स इति व्याख्यायास्सकलवेदान्तानुकूलतया गरीयस्त्वात् । परमाणुकारणवादे संयोजयति इति दुर्योजम्, निरंशपरमाणूनां कर्माभावात् संयोगानुपपत्तेः ।

तथा हि—निरंशः परमाणुः **किरणावलीकारेण** न्यरूपि । स्थूलकार्यस्य लोष्टादेरवयवक्रियाविभागादिन्यायेन विभज्यमानस्याल्पतरतमादिभावात् यतो नाल्पीयस्तं परमाणुमाचक्ष्महे । एष ह्यवयवावयविप्रसङ्गो न तावन्निरवधिरेव, अनन्तावयवारब्धत्वाविशेषेण मेरुसर्षपयोस्तुल्यपरिमाणत्वप्रसङ्गात् । न च कारणसङ्ख्याया अविशेषेऽपि परिमाणप्रचयाद्विशेष इति युक्तम्, तयोरपि सङ्ख्याविशेषाभावेऽनुपपत्तेः । द्रव्यस्यावयवविभागविनाशावपि प्रलयावधिकस्य चिदन्त्यस्य चिदवयवत्वे तदनुपपत्तेः । द्रव्यस्यावयवविभागविनाशाभ्यां विना विनाशाभावात्; नापि विभागावधिः, तस्य विभज्यमानाश्रयतया तदभावेऽनुपपत्तेः । न चैकाश्रय एव विभाग इति युक्तम्, किञ्चिद्धि कुतश्चिद्विभज्यते, न तु तदेव तस्मात् । तस्मान्निरवयवावधिरवयवावयविप्रसङ्ग इति ज्ञायत इति । न चावयवान्तराणां क्रियादर्शनान्मूलावयवाभिमतपरमाणूनामपि क्रियाध्यवसायः, अनित्यत्वाद्यध्यवसायस्यापि प्रसङ्गात् प्रत्यक्षसिद्धत्रसरेणूनां मूलावयवानां क्रियावतां संभवे तदितरकल्पनानवताराच्च तस्य चावयवकल्पनायान्न प्रमाणं पश्यामः ।

अथ त्रसरेणुर्महान् चाक्षुषद्रव्यत्वान्महत्त्वे सति द्रव्यत्वाच्चानेकद्रव्योत्पन्नघटवत् यदि हि द्रव्यस्य चाक्षुषता महत्त्वमन्तरेण स्यात् दूरदूरतरादौ न महत्परिमाणप्रकर्षमनुविदध्यात् । यदि चास्यानेकद्रव्यता नाद्रियेत, महत्त्वमपि नाद्रियेत; तद्व्यावृत्तौ तस्यैव व्यावृत्तेः । न च चाक्षुषत्वे सति महत्वे सति इति द्रव्यत्वहेतुविशेषणयोः परमाण्वसिद्धौ व्यावर्त्याभावः । नित्यश्शब्दः ध्वनिधर्मान्यत्वे सति श्रावणत्वात् शब्दत्ववत् इति प्रयोग इव स्वसिद्धव्यवच्छेद्यार्थत्वात् ।

नैतद्युक्तम्; प्रमाणान्तरगृहीतविशेषण(ाग्रहण)वादे परमाणुजन्योऽयं घट इति प्रत्यक्षपरमाणौ चाक्षुषद्रव्यत्वहेतोर्व्यभिचारात् अतो न महत्त्वसिद्धिः इति न तेनानेकद्रव्यत्वानुमानम् । न च महत्त्वमन्तरेण द्रव्यस्य चाक्षुषत्वे दूरदूरतरादौ महत्परिमाणप्रकर्षानुविधानाभावः तस्य दोषः, परिमाणान्तरग्राहकत्वे सत्यपि तत्सम्भवात् । अणु-

परिमाणद्रव्यस्य चाक्षुषत्वेऽपि न महत्परिमाणमचाक्षुषमेव, येन दूरादिद्रव्यचाक्षुषता महत्परिमाणप्रकर्षव्याप्ता न स्यात् । अस्तु वा त्रसरेणुर्यथा तथा परमाणुस्तु सक्रियो न सम्भवत्येव । न च अयं घट एतदतिरिक्तानित्यमूर्तातिरिक्तमूर्तान्य: द्रव्यत्वात् घटवत् इति नित्यमूर्ततया तत्सिद्धौ क्रियावत्त्वसिद्धिः सक्रियत्वानित्यत्वेन नित्यत्वव्याघातात् । अतस्संयोगविभागयोः कर्मजन्ययोः सर्गप्रलयबीजयोरभाव एवाणूनाम् । तदुक्तम् :— "उभयथाऽपि न कर्मातस्तदभावः" इति ।

एतेन षट्पदार्थसङ्ग्रहोऽपि व्याख्यातः । अथ के षट्पदार्थाः ? द्रव्यगुणकर्म-सामान्यविशेषसमवायाष्षट् पदार्थाः ।

ननु षट्पदार्था इति समासःपदम् वा ? आद्ये न सङ्ख्यालाभः सप्तग्राम इतिवत् "दिक्सङ्ख्ये संज्ञायाम्[1]" इति पाणिनिस्मरणात् । दिग्वाचिनस्सङ्ख्यावाचिनः शब्दाः संज्ञायां गम्यमानायामुत्तरपदेन समस्यन्ते तत्पुरुषसंज्ञकसमास इति सूत्रार्थः । दक्षिणाग्निः सप्तग्राम इत्यादयः संज्ञाशब्दा रूढा अपि व्युत्पाद्यन्ते दक्षिणदिशि वर्तमानोऽग्निर्दक्षिणाग्निः, सप्तानां ग्रामः सप्तग्राम इति । अतः संज्ञापदत्वान्न सङ्ख्यालाभः । "षट् च ते पदार्थाश्च" इति कर्मधारयादपि संज्ञासमासस्य रूढत्वेन बलीयस्त्वाच्च । असमासपदाभिधाने नान्यान्तर्भावः । "षडेते भावा" इत्युक्ते न हि (सलेगवा) सर्वेषां तत्रैवान्तर्भावः सम्बोभवीति । अथ षडेव वस्तूनि भावस्वरूपाणि सप्तमस्त्वभावो नान्यत् किञ्चिदस्ति इत्यभिप्रायः, तर्हि कुतोऽन्याभावोऽज्ञायि भवता ? न तावदनुपलम्भ-मात्रात् अतिप्रसङ्गात्, न च योग्यानुपलब्ध्या लोकान्तरादिवर्तिनामभावानां भवतोऽयोग्यत्वात् । न च सर्वज्ञसूत्रकारवचनादपि इति वाच्यम्, तेषां विवाददर्शनात् । न च "एकस्सर्वज्ञो नेतर" इति प्रमाणमस्ति । अन्तर्भावकल्पनायाञ्चैकस्मिन् सा लघीयसी इति ;

अत्रोत्तरम्—षडेव भावरूपाः पदार्था इत्यसमास एवात्राभिहितः अन्यत्वेन कल्प्यमानभावस्य सम्प्रतिपन्नभाववत्द्रव्यादीनां षण्णामन्यतमलक्षणवत्त्वेनानुमानात् । तदाह लीलावतीकारः :—

"भावत्वाधिष्ठितास्सर्वाः प्रत्येकं व्यक्तयो मताः ।
द्रव्यादिषट्कविच्छेदमेलकेन विवर्जिताः ॥"

---

1. पा. 2. 1. 50.

इति। अतो योग्यानुपलब्ध्या भावान्तरस्याभावनिश्चयाभावेऽपि भावत्वलिङ्गेन तन्निश्चयात् "षडेव" इत्यवधारणोपपत्तेः। न च शक्त्यादिपदार्थानां षट्स्वन्तर्भावश्चेत् एकस्मिन्नेव सर्वान्तर्भावोऽस्तु, कल्पनाया लघीयस्त्वात् इति वचनीयम्, समानबलप्रमाणसिद्धव्यावृत्त-स्वभावानां भावनामेकान्तर्गमस्य दुस्सम्पादत्वात्। न चैकप्रमाणं बलवच्छक्त्यादीनां वा तुल्यमेतत् इति शङ्कनीयम्। स्वरूपेण षोढा व्यावृत्तव्यवहारहेतावेकस्मिन् प्रमाणादर्शनात् स्फोटादिजनकत्वधर्मेणैव शक्तिव्यवहारहेतुत्वात् अप्रतिबन्धस्वरूपात् कार्यसिद्धावतिरेक-साधकदौर्बल्याच्च।

ननु यदेतद्द्रव्यादिलक्षणम्, तन्न तावल्लक्ष्यस्वरूपावगतये, परस्पराश्रयापातात् लक्ष्ये दृष्टे तल्लक्षणदृष्टिः लक्षणदृष्टिश्च तद्दृष्टिः इति। नापि द्रव्यलक्षणमद्रव्यव्यावृत्तये, सिद्धि द्रव्यलक्षणे तत्प्रतियोगिकाद्रव्यसिद्धिः तत्सिद्धौ च तद्व्यावृत्तये द्रव्यलक्षणम् इति इतरेतराश्रयात्; मैवम्; यथा हि श्रुत्या—"ब्रह्मविदाप्नोति परम्" इत्युद्देशनपूर्वकं पराभिमतप्रधानादेरब्रह्मणो व्यवच्छेदार्थं "सत्यं ज्ञानमनन्तं ब्रह्म" इति लक्षणं निर्दिश्यते। तथा "द्रव्यादयः षट्पदार्था" इत्युद्दिश्य "गुणाश्रयो द्रव्यम्" इत्यादिलक्षणम् इतरव्यवच्छेदाय। तत्र यथा पृथिव्याः क्वचित् गन्धवत्त्वेन लक्षणेन विशिष्टाया दर्शने "गन्धवती पृथिवी" इति ततोऽन्यत्रापि लक्षणं प्रवर्तते तथा जीवांशे ब्रह्मलक्षणस्य तथैव द्रव्यलक्षणस्य प्रवृत्तौ नेतरेतराश्रयदोषः। न च प्रामाणिकवादिनां सर्वत्र प्रमाण-परीक्षितस्यैवाभ्युपगमनीयत्वात् लक्ष्यस्य सिद्धत्वासिद्धत्वयोर्न लक्षणावकाश इति शङ्क-नीयम्; अभ्युपगमसिद्धान्तेन आपातसिद्धाभ्युपगमेन परीक्षाङ्गीकारात् "अपरीक्षिता-भ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्त" इति अक्षपादसूत्राच्च।[1]

ननु लक्षणं केवलव्यतिरेक्यनुमानम् उदयनादिना जगदे; तथा हि—"गुणवद् द्रव्यम्" इति व्यवहर्तव्यम् गुणाश्रयत्वात्, न यदेवम् न तदेवं; यथा वस्त्वन्तरं; **तद्दुराशामात्रम्**, हेतोरसिद्धत्वात्। सिद्धे हि गुणाद्विभागे गुणाश्रयत्वसिद्धिः, तत्सिद्धौ च गुणातिरिक्तद्रव्यसिद्धिः इति परस्पराश्रयात्। किञ्च द्रव्याभावप्रमितेर्द्रव्यप्रमितिसापेक्ष-तया तदसिद्धौ व्यतिरेकानवधारणात् सन्दिग्धानैकान्तिकत्वम् अप्रसिद्धविशेषणत्वं च सुप्रसिद्धम् इति,

---

1, 1. 1. 31,

**नैतदवदातम्**; "लोहितः स्फटिक" इति शौक्ल्याग्रहेऽपि स्फटिकस्य, कस्यायं गन्ध इत्याश्रयाग्रहणेऽपि ग्रहणाद्गन्धस्य गुणगुणिभेदसिद्धेः द्रव्यत्वेन संमतस्या-श्रादेरागमापायादिरूपाद्गुणाद्विभागस्य प्रसिद्धत्वात्, "यथा घटादयो रूपादिमन्त-श्चक्षुरादिकरणैरुपलभ्यन्त" इति **वेदान्ताचार्यो**दीरणाच्च । अतो न गुणाश्रयत्वम् प्रसिद्धगुणाश्रयत्वेन द्रव्यत्वविधाने परस्पराश्रयानवताराच्च । रूपादेः रूपाश्रयत्वप्रसिद्ध्य-भावाच्च, क्रियादेरपि द्रव्यत्वप्रसिद्ध्यभावाच्च, व्यतिरेकस्थलत्वसिद्धेर्न सन्दिग्धानैकान्ति-कत्वम् । प्रसिद्धस्यैव द्रव्यम् इति व्यवहारस्य स्थलविशेषे कर्तव्यताविधानाच्च नाप्रसिद्ध-विशेषणत्वम् । सामान्यप्रसिद्धिविशेषाप्रसिद्धिभ्यां केवलव्यतिरेकिणोऽप्रसिद्धविशेषणगतार्थ-त्वयोः **उदयनाचार्येण** कृतपरिहारत्वात् ।

तथाऽपि "गुणाश्रयो द्रव्यम्" इत्यलक्षणम् उत्पन्नमात्रं द्रव्यमगुणं क्षणं तिष्ठति इत्यङ्गीकाराद‍व्याप्तेः । गुणादिष्वपि "चतुर्विंशतिर्गुणा" इत्यादिसङ्ख्यान्वयान्वीक्षणा-दतिव्याप्तिश्च । न च तत्र सङ्ख्याप्रतीतिर्भ्रमः "नव द्रव्याणि" इत्यादाविव बाधा-दर्शनात् ।

**नैतत्** । गुणाश्रयशब्देन गुणो यदाश्रय एव इति विवक्षितत्वात् । न खलु गुणो भवति न भवति चाश्रयपरतन्त्र इति प्रसिद्धमार्गागतम् । तथाच क्षणान्तरे सत्ता-मालम्बमानो गुणो द्रव्याश्रयापेक्ष एव तामालम्बत इति नाव्याप्तिः, द्रव्यसङ्ख्ययैव चैकार्थ-समवायाद्गुणादिषु सङ्ख्याव्यवहारोपपत्तेः पृथक् सङ्ख्यागुणाभावान्नातिव्याप्तिः । नवत्व-सङ्ख्यायास्तत्र भावेऽपि द्रव्यगतचतुर्विंशत्याद्यवान्तरसङ्ख्याव्यवहारस्य गुणादिषु सम्भवात् न चैवं द्रव्येषु परार्धसङ्ख्याया अपि सम्भवात्, गुणादिष्वपि तत्प्रसङ्गः । न खलु गम्भीरं भागीरथीस्रोतस्सकलं पिपासुभिः पातव्यम् पातव्यञ्चेत्, अन्यथा न चुलुकमात्रा-मपि इति सार्वभौमाज्ञैवम् इति किंवदन्त्यस्ति क्वापि । किन्तु यावदुपयुक्तं तावदेव तथा ऽत्रापि नियमसम्भवात् । न चैवम् द्रव्यसत्तयैव गुणकर्मणोरपि सत्ताव्यवहारोपपत्तेर्न सत्ता कल्पनीया इति - वाच्यम्; यथा द्रव्येष्वेव सत्तायां द्रव्यत्वेन तुल्यवृत्तित्वं जाति-बाधकम्, तथा तत्र जातिबाधकाभावात् । न च रूपादिषु सङ्ख्याभ्युपगमेऽपि संयोग इव समवायस्वीकारे नानवस्था, सङ्ख्यायामेव तदभ्युपगमे सा स्यात् इति तत्रैव सा न स्यात् इति - **वचनीयम्**; सङ्ख्याया गुणत्वेन सङ्ख्यासमवायित्वे कथं नानवस्था । रूपादीनां समवायिकारणत्वे सङ्ख्यां प्रति नित्यरूपादेः परमाणुवत् स्वातन्त्र्यप्रसङ्गात् । तत्त्वे गुणत्वानिरूपणाच्च । नातो निर्दिष्टं "गुणाश्रयो द्रव्यम्" इति लक्ष्यं गमयति लक्षणम् ।

**यदप्याहु:**—गुणवत्त्वं द्रव्यत्वजातिव्यञ्जकं चेत् गुणस्यापि विशेषणभूतस्य तद्व्यञ्जकत्वेन द्रव्यत्वापत्तिः इति । **तदप्यनुचितम्**; ऋत्विग्विशिष्टस्य यागकर्तृत्वेऽपि यथा ऋत्विजां न यजमानत्वम्, किन्तु याजकत्वमेव; तथाऽत्रापि संभवात् नियमस्य । पूर्वपूर्वविकारविशिष्टस्य उत्तरोत्तरकारणत्वेऽपि परमात्मनो यथा न विकाराणां कारणत्वम्, अनेककारणप्रसङ्गात् । ततो द्रव्यत्वजातियोगोऽपि द्रव्यलक्षणम् युक्तम् ॥

सामान्यवानचलनात्मकस्समवायिकारणताहीनो गुणः । रूपादीनां सङ्ख्यासमवायिकारणताया निरस्तत्वाच्च नासम्भवि लक्षणम् । "सामान्यवान् स्पर्शरहितो द्रव्याश्रितः कर्मातिरिक्तो गुण" इत्यपि लक्षणम् । न च गुणात्कर्मणो भेदासिद्धौ कर्मव्यावृत्तिरयुक्ता ! असामान्यत्वादिविशेषणप्रसङ्गात् "शुक्लं रूपम्" "मधुरो रसो "निम्नप्रवणा गतिर्जलस्य" इति भेदप्रसिद्धेः, अपरीक्षिताभ्युपगमेन परीक्षास्वीकाराच्च ।

संयोगविभागयोरनपेक्षकारणजातीयं कर्म । **न च** समवायिकारणेश्वरेच्छाद्यपेक्षणादसम्भवः, यथा द्रव्यस्य द्रव्यान्तरापेक्षया संयोगविभागारम्भकत्वम् तयोरुभयनिष्ठत्वात्; नैवम् कर्मणः, अन्यतरकर्मणाऽपि संयोगादिसिद्धिः इत्येतावन्मात्रस्य विवक्षितत्वात् । "परसमवेतक्रियाफलशालि हि कर्म" इति कर्मकारकस्य लक्ष्म, न क्रियायाः । पर्णसमवेतपतनक्रियाफलपर्णविभागभाजोऽपि वृक्षस्य "वृक्षात् पर्णं पतति" इत्यपादानत्वात् अलक्षणं चैतत् । न च गुरुफलादिसंयोग एव विभागपतनयोर्युगपज्जनकः, संयोगस्य क्रियाद्वारमन्तरेण विभागहेतुत्वे केवलविभागजनकत्वस्यापि प्रसङ्गात् ॥

"नित्यमेकमनेकसमवेतम् सामान्यम्" । न च एकपदं व्यर्थम्, नित्येष्वनेकसमवेतेषु जलपरमाणुरूपादिषु प्रसक्तिवारणार्थत्वात् । न च तत्रापि प्रत्येकं एकत्वमस्ति इति प्रसक्तिरेव एकव्यक्तेरनेकसमवायस्य विवक्षितस्य तत्राभावात् । यदि सामान्यं न स्यात् भिन्नेष्वनुगताकारः प्रत्ययो न स्यात् । द्रव्यगुणकर्मणामपि सामान्यद्वारेणैवानुवृत्तव्यवहारहेतुत्वात् अननुवृत्तेष्वनुवृत्तप्रत्ययस्य भ्रमत्वप्रसङ्गात् । तदालम्बनानुवृत्तस्वीकारे सामान्यसिद्धेः । **न च** तथाऽपि न सत्ता सामान्यम् प्रमाणयोगस्यैव तद्व्यवहारोपपादकत्वात् इति - **शङ्कनीयम्**; तथा सति प्रथमत एव "अस्ति" इति प्रत्ययस्य प्रमाणादनुपपत्तेः ।

अस्ति च सत्ताया "अभूत्" "अस्ति" "भविष्यति" इति त्रैकाल्यः प्रत्ययः । स च प्रमाणयोगस्य वर्तमानैकरूपत्वादनुपपन्नः भूतादिप्रमाणयोगलक्षणं सत्त्वं

वर्तमानप्रमाणेन गृह्यते चेत् भूतादिप्रमाणस्यापि वर्तमानप्रमाणगम्यत्वेन सत्त्वप्रसङ्गः। अनाश्रितकालयोगप्रमाणमात्रस्य सत्त्वलक्षणत्वे प्रमितनष्टेनार्थक्रियाप्रसङ्गात्। तदुक्तम्—

" प्रमाणयोगमात्रं चेत् सत्ताऽसत्ताविपर्ययः।
प्राप्ता प्रमितनष्टेन घटेन मधुधारणा ॥ "

इति। वर्तमानप्रमाणयोगस्सत्त्वं चेत् प्रत्यक्षाद्यगोचरस्य भूमौ निखातनिध्यादेः स्मर्यमाणस्य चासत्त्वलक्षणत्वान्नियतासत्त्वेऽप्रतीतिरेव स्यात् न संशयो जीर्णराजधान्यादिषु स्यात्। न च द्रव्यत्वादिसामान्यत्रयविषयस्तदुपलक्षितद्रव्यादिविषयो वा सच्छब्दस्साधारणो न सत्तावचनः; यथा विभीतकत्वादिजातिसमुदायविषयः तदुपलक्षितविभीतकादिव्यक्तिविषयो वा ऽक्षशब्दो, नाक्षत्वजातिविषय इत्यपि **शोभनम्**, सत्तायामभावप्रापकस्य प्रत्यभिज्ञाऽभावस्य द्रव्यत्वादावपि सम्भवात्। न खलु जलं दृष्ट्वा तेजो भूमिं वा पश्यतो बुद्धिरूपसाम्यमस्ति। अथ मात्रयाऽस्त्यनुगमः तत्र सोऽत्रापि। सतो निरुपाख्यत्वे लक्षणस्यैकरूपत्वात्। न च " स एवायम् " इत्येकत्वसाधनमनुसन्धानमेव, अभिन्नदेशकालस्याप्येकत्वावगमात्। तस्मादस्ति सत्तासामान्यम्।

किञ्च अभावस्यापि प्रमाणगम्यत्वादतिव्याप्तिः, अभावश्च यदि प्रमाणविषयास्सतो व्यावृत्तो, यथा वा **बौद्धगन्धिमीमांसकः**, यदि वा सर्वशक्तिविरहः सतो व्यावर्तमानो ऽर्थक्रियाशक्तात् सर्वथाऽपि प्रमेयः। अपरथा सत्त्वेनैव व्यवस्थापनयोगात् " दृष्टिपूतं न्यसेत्पादम् " इत्यादिशास्त्रोक्तचरणन्यासादिव्यवहारस्य अभावापरिच्छेदे प्रवृत्त्यनुपपत्तेश्च।

अथ यत्र प्रवर्तते तस्य केवलत्वविज्ञानात्। तत्र वक्तव्यम्, संविदः कैवल्यं प्रति नियताकारत्वं प्रवृत्तिहेतुः, किं वा विषयस्यैव ? आद्ये स्थूलभूतलावलम्बिज्ञानमात्रात् प्रवर्तेत, न सूक्ष्मं कीटकण्टकादिकं जिज्ञासेत। जिज्ञासते च। विषयोऽपि स्वरूपेण केवलो विवक्षितो, विशेषणयोगाद्वा ? नाद्यः—कण्टकादिमिश्रमपि भूतलं स्वरूपेण केवलम् इति सकण्टकेऽपि प्रवृत्तिः स्यात्। द्वितीये तु कल्पे विशेषणस्याभावव्यतिरिक्तस्य कैवल्योपयुक्तस्यासम्भवात्, अभावधीशब्दव्यवहारालम्बनत्वेनाभावसिद्धेश्च। **न च वाच्यम्**-सद्बुद्ध्यभावेऽभावबुद्धिभ्रमः सद्व्यवहारभ्रम इति, सुषुप्त्यादौ त्रैलोक्याभावदर्शनभ्रमप्रसङ्गात्। अभावाप्रमेयत्वे च सद्बुध्यभावे सद्व्यवहाराभावे च इति विशेष्यतया, अभावबुद्धिःअभावव्यवहार - इति च विशेषणत्वेनाभावस्य प्रतिभानुपपत्तेर्न भ्रमोऽपि।

अतो ऽभावस्यापि प्रमाणगम्यत्वात् भवत्येव सत्त्वलक्षणस्यातिव्याप्तिः । अत एवार्थक्रिया-कारित्वान्न सत्त्वापेक्षमर्थक्रियाकारित्वं सत्त्वम् । अतः सत्ताजातिः सिद्धा । सा च महासामान्यम् । द्रव्यादित्रये ऽवान्तरजातिः इति । अतएव न तद्धीने द्रव्यत्वादौ संयोगे समवायवत्तद्वृत्तिः ।

" नित्येष्वेव द्रव्येष्वेव वर्तन्त एव ये, तेऽन्त्या विशेषः " आत्मत्वमनस्त्वयोश्च सर्ववृत्तित्वाभावादेव नातिव्याप्तिः ; एकस्मिन् एकव्यक्तौ नित्यद्रव्य एव वर्तमानो जाति-रहितो विशेष इति प्रत्येकं लक्षणस्य विवक्षितत्वाच्च नाव्याप्तिः ।

" अयुतसिद्धानां आधार्याधारभूतानामिहप्रत्ययहेतुर्यः सम्बन्धः, स **समवायः** ; सुखधर्मयोः कार्यकारणभावसम्बन्धव्यवच्छेदार्थमाधार्याधारभूतानाम् इत्युक्तम् । आकाश-तद्वाचकशब्दयोस्संबन्धापोहार्थम् इह प्रत्ययहेतुः इति, कुण्डबदरयोराधाराधेयभावसम्बन्ध-व्यवच्छेदार्थमयुतसिद्धानाम् इत्युक्तम् । न च " इह भूतले घटो नास्ति " इति विशेषण-विशेष्यभावसंबन्धेऽतिव्याप्तिः, मुख्यस्य संबन्धस्योभयनिष्ठत्वेन प्रसिद्धस्य विवक्षितत्वात् । यद्यपि एवमयुतसिद्धानां संबन्धस्समवाय इत्येतावताऽलम्, तथाऽपि परिष्कारत्वेनाव-शिष्टम्, भावयोर्वा सम्बन्धिनोर्विवक्षितत्वान्नातिव्याप्तिः । तदेवं लक्षणतः षट्पदार्थाः । एते च " एकं सद्विप्रा बहुधा वदन्ति " इत्यागमप्रमाणात् कर्माविद्यादिवशाद्विवर्तमानब्रह्म-विकारा एव, न परमार्था इति न परमाणुषु जगदुपादानलक्षणस्यार्थान्तरता इति ।

अथ 'स्वभावादेव' जगत्प्रभवति, न कर्मादेरुपयोगः । न च एवं कृत-विप्रणाशाकृताभ्यागमदोषः । श्रुत्यादिना तावदेवमवसायात्—" ब्रह्मविकारा एव " ; तथा हि—" तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति "[1] । श्येन इव शीघ्रगः सुपर्णस्संहत्य प्रसार्य निश्चलौ कृत्वा संलीयतेऽस्मिन् इति संलयो नीडं ध्रियते स्वात्मनैव अन्तो लयोऽस्मिन् स्वप्नादे-रित्यन्तः सम्प्रसादः । " तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपं तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न

---

1. बृ. 4. 3.

बाह्यं किञ्चन न वेद नान्तरं तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरं । अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति " इति सुप्तावस्थायां सकारणजात्यादेः पुण्यपापयोश्च तस्याविच्छेदं तामवधीर्थ प्रतिपादयति बार्हदारण्यकी श्रुतिः । **चण्डालो** ब्राह्मण्यां शूद्राज्जातः । **पौल्कसः** क्षत्रियायां शूद्राज्जातः । **श्रमणस्सन्यासी** । **तापसो** वनस्थः । तथा च—सुषुप्त्यनन्तरं सर्वं **स्वभावादेव** प्रभवति तथा प्रलयानन्तरमपि इति गम्यते । " यत्र चैतत् सुप्तस्समस्तस्संप्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सुप्तो भवति तं न कश्चन पाप्मा स्पृशति, तेजसा हि तदा सम्पन्नो भवति " इति छन्दोगश्रुतिः । " तन्नामरूपाभ्यामेव व्याक्रियत " इति कर्तुरनुपादानेन स्वभावमूलत्वावधारणाच्च । **तदेतदयुक्तं** ; यस्मादन्तःकरणोपाधिकस्सुकस्य सङ्कोचादसंश्लेषः उपाधिधर्माणामविरुद्धः । तेजसा ब्रह्मणा । सम्पन्नः सर्वदा आत्मसम्पन्नोऽपि स्वप्नजागरयोरुपाधिविशेषादसम्पन्न इव तदा स्वापे प्रसन्नः एव निर्विक्षेपमायोपाधिस्वरूपोल्लासात् संपन्न इति विशेष्यते । पापाद्यसंस्पृष्टश्च " अहरहर्गच्छन्त्योऽपि न विदुः " इति सानुक्रोशवीप्सयोस्सम्पत्तावप्युपसंहारात् , अविद्यावृतेश्च नान्यस्सम्पन्नोऽन्यो निष्क्रान्त इति शङ्कावकाशः ।

त्रिविधाः कर्मविपाकश्रुतयश्च दृश्यन्ते । तथा हि—" ये चामी अरण्ये श्रद्धां सत्यमुपासते सत्यं ब्रह्म श्रद्धालव उपासत इत्येतत् । तेऽर्चिरभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदगादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषामिह न पुनरावृत्तिः । अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति, ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणा(ण)दित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्व, सोमं राजानं जडरूपिणं जलसेकेनाप्याय्य निष्पीड्य मुहुर्मुहुर्भक्षयन्तीत्येवमेनांस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति त एवमेवानुपरिवर्तन्ते अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदीदं दन्दशूकम् " ।

इति वाजसनेयिश्रुतेः । न च प्रलयार्थकर्माद्यश्रवणात् स्वभावादेव स इति, महाप्रलयवन्महासर्गोऽपि स्वभावत एव इति वाच्यम् ; घृतादेः काठिन्यवन्मूलकारणस्यैव संस्थानविशेषात्मककार्यस्य कारणात्मतापत्तेः प्रलयाङ्गीकारात् । न च स्वभावो मूलकारणं श्रुतं मायात्वनिर्वाच्या यत्किञ्चिन्निमित्तमपेक्ष्यानपेक्ष्य वा अनुरूपं चेष्टते प्रकृतित्वेन श्रुता स्वभावपक्षे विशिष्टकालादिनिमित्तोपादानायोगाच्च ।

**न च वाच्यम्**—कर्मापि इत्यादिकं कार्यं कर्मादिवशाच्चेत् करो[त्यन]वस्था स्वाभावादेव चेत् न स्वभाववादापलाप—**इति** । "यथोर्णनाभिस्तन्तुनोच्चरेत्यथाऽग्नेः- क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनस्सर्वे प्राणाः चक्षुरादिकास्सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति" इत्यात्मन इव कर्माविद्याद्युपाधेस्स्वभावतः सर्गाश्रवणात् । "लूयते केदारः स्वयमेव" इतिवद्व्याक्रियत इति कर्मकर्तरि प्रयोगश्चेदल्पप्रयाससाध्यत्वाभिप्राय- त्वात् कर्तारं तद्वन्तं गमयत्येव । 'गम्यते ग्राम' इतिवत्कर्मण्येव चेत् 'देवदत्तेन ग्रामो गम्यत' इतिवदीश्वरेण तद्व्याक्रियत इति कर्तृप्रतीतेर्न स्वभावादेव व्याक्रियत इति युक्तम् । "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततश्शेषेण विशिष्टदेशजातिकुल- रूपायुः श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्यन्ति"[1] इति स्मृतेः, "तद्य इह रमणीयचरणा" इत्यादिश्रुतेश्च स्वर्गैकफलकर्मणो निश्शेषेण भोगेऽपि कर्मान्तरेणावशिष्टेन यद्यपहृतसर्वस्वोऽपि गृहगतेन शेषधनेन वित्तवानितिवच्छेषशब्दवाच्येन योनिफलाच्च । कर्मणः क्षणध्वंसित्वेऽप्यपूर्वात्मना स्थायिन उपाधित्वसम्भवाच्च । न्यरूपि चापूर्वं भट्टपादैः :—

अथवा सर्वमेव कार्यं दध्यादि क्षीरादेरुत्पद्यमानं न सहसा स्थूलेनैवात्मनोत्पद्यते किन्तर्हि सूक्ष्माणि तावद्रूपान्तराण्यनुभवन्ति एवं स्वर्गादयोऽप्यङ्कुराद्यवस्थायान्तावदपूर्वा- ख्यां प्रतिपद्यन्ते तया चोत्पद्यमानया त एवोत्पन्ना भवन्ति । आह च—

> "काष्ठैः पक्तव्यमित्युक्ते निर्दिष्टा ज्वलनक्रिया ।
> अङ्कुरे जायमाने च वृक्षोऽप्युत्पन्न इष्यते ॥"

---

1. गौ. ध. सू. 2. 3. 29.

तच्च वेदैकप्रमाणकम्—

" फलाय विहितं कर्म क्षणिकं चिरभाविने ।
तत्सिद्धिर्नान्यथेत्येवमपूर्वमपि गम्यते ॥ "[3]

वेदवाक्योपात्तयागादिसम्बन्धान्यथानुपपत्त्या तच्चोदनयाऽपूर्वमपि चोदितं भविष्यति इति प्रमाणवत् । तस्मादस्त्यपूर्वम् इति । अन्वयव्यतिरेकादिसिद्धकारणभावानां स्वभावादेव जनकत्वेऽपि न कार्यस्य जगतःस्वभावत एव प्रभवत्वम्, ईश्वरोपासनया विश्वैश्वर्यफलायाः क्रियाया महासर्गादिमूलत्वाच्च । एवं स्वाभावस्याप्यनियामकत्वे न किञ्चिन्नियामकम् , यदृच्छयैव सर्वं भवति इति **यादृच्छिकपक्षो** दूरापास्त एव । **एतेन कालवादो-**ऽपास्तः । अथ विशेषान्नैवम् , तथा हि—" नैवेह किञ्चनासीद्व्यक्तमित्यर्थो मृत्यु-नैवेदमावृतमासीत्तस्यार्चत आपो जायन्त आपो वा अर्कः यावत्य आपः तावानसौ चन्द्रः " " एष संवत्सरः प्रजापतिः षोडशकलः तस्य रात्रय एव पञ्चदशकला ध्रुवैवास्य षोडशी कला " इत्यादिश्रुतेः—

" कालो भावाय भूतानामभावाय च पाण्डव ।
कालमूलमिदं ज्ञात्वा भव स्थैर्यधनोऽर्जुन ॥ "

इत्यादिस्मृतेश्च परमाण्वादिकल्पनोपपत्तेश्च निमेषादिषु, ततो न स्वभाववदनागमिकः काल इति **कालवादिनः** । दृश्यते च वसन्तादिप्रयुक्तः पुष्पादिप्रसवः । अतो निमित्त-मुपादानं च काल एव जगत इति,

नैवम् ; " मृत्युनैवेदमावृतमासीत् । "[1] इत्यत्र " तमसा गूढमग्र "[2] इति श्रुत्यन्तरानुसारेण कार्यगर्भं मायाविशिष्टं कारणं ब्रह्म आसीत् इत्यवधारणात् । अशनाया मृत्युश्चेत्र कालशङ्काऽपि अशनायया बुद्धिधर्मेण तदुपाधिहिरण्यगर्भो लक्ष्यते । अविद्यैव वा मृत्युः :—

" नामरूपादिना येयमविद्या प्रथते सती ।
माया तस्याः परं सौक्ष्म्यं मृत्युनैवेति भण्यते ॥ "[3]

---

1. बृ. 1. 2. 1.
2. तै. ब्रा. 2. 8. 9.
3. बृ. वा. 1. 2. 185

इति सुरेश्वराचार्यवचनात् सूर्यादीनां च कालेन सह व्यङ्ग्यव्यञ्जकभावात् तदात्मत्वाभावात् ।

> " मृत्युर्यस्योपसेचनं कालमूषकभक्षकः ।
> कालस्वरूपी भगवान् कृष्णः पृथुललोचनः ॥ "

" कालः कलयतामस्मि " इति श्रुतिस्मृतिभ्यां कालस्य परमात्ममायाविभूतित्वावधारणात् ' मृत्युर्धावति पञ्चमः " इति च पारतन्त्र्यश्रुतेः नेश्वरत्वं कालस्य । ननु मायाविकारा महाप्रलये साकल्येन लीयन्ते, तत्र कालोऽपि लीयते चेत्, एतावान् प्रलयकाल इति कथङ्कारं परिकलनं पुराणमार्गेषु ? कथम् वा " सदेवेदमग्र आसीत् " इति भूतकालव्यपदेशः ? यदि च तिष्ठति तर्ह्यनादिप्रवृत्तसर्गप्रलयप्रवाहे न जायते न च लीयत इति स्वतन्त्रं तत्त्वम् । उच्यते । " तद्यद्रेत आसीत् स संवत्सरोऽभवन्न ह ततः पुरा संवत्सर आस " इति कालजन्मश्रुतेः, " तथाऽक्षरात्सम्भवतीह विश्वम् " इत्यविशेषश्रुतेश्च । लीयत एव कालः, ' ईशः कालकार ' इति परमेश्वरस्य ' कुम्भकार ' इतिवत् कालस्य कुम्भवज्जनकव्यापारकर्मत्वे कल्पते व्यपदेशः । अतो व्याकृतं कालमुपजीव्य पुराणश्रुत्यादिव्यपदेशः । यथा खलु लोकदृष्टान्तेनाव्याकृते नामरूपे विषयीकृत्य तद्व्याकृतव्यापारः परमेश्वरस्य काललयेऽपि । द्युमणिभ्रमणौपाधिककालसङ्ख्यानां भस्मीभावस्यापरिहार्यत्वाच्च । मेघादीनां धूमादिद्रव्यान्तरोपादानत्वप्रसिद्धेः कालस्य निमित्तत्वमात्रम् । ततो न कालप्रक्रिया ।

अथ सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमेवाभ्युज्जिहते " " प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणं श्रोत्रम् प्राणं मनः प्राणो ह्येवैतान् संवृङ्क्ते " " प्राणबन्धनं हि सोम्य मनः " " प्राणोऽस्मि प्रज्ञात्मा " इति च वेदे प्राणकारणवादः । " प्राणो वै बलम् " इति श्रुतेः प्राणशब्दार्थः शक्तिः । न च शक्तिर्न पदार्थान्तरम्, गुणादिवृत्तित्वात् । न द्रव्यादिष्वन्तर्गमः, भिन्नसामग्रीग्राह्यत्वाच्च । ' ज्ञास्यामि ते शक्तिम् पाषाणमुत्पाट्य ' इति कार्यानुमेयत्वव्यपदेशात् । अन्यथा प्रतिबन्ध्यविकलः प्रतिबन्धोऽपि न प्रसरेत् । न च स्वरूपस्यैव कार्यौदासीन्यं प्रतिबन्धशब्दार्थः, केनान्यथा शक्तेरपि शक्त्यन्तरं वार्येत इति वचनीयम् ; बीजतन्त्वादेः कुसूलाद्यवस्थानदशायां कार्यौदासीन्येऽपि प्रतिबन्धत्वव्यवहारप्रसरात् । सत्यां सामग्र्यां प्रतिबन्धश्चेत् "प्रतिबन्धो विसामग्री " इति सोक्तिव्याघातः ।

किञ्च प्रमाणसिद्धस्य युक्तिमात्रेणापह्नवेऽतिप्रसङ्गात् वह्निः स्वमात्रसम्बन्ध्यतीन्द्रिय-सापेक्षः कारणम् कारणत्वात् आत्मवत् । स्थितस्थापकसंस्कारस्य कालाद्यन्योन्याभावस्य च स्फोटाद्युत्पत्तौ स्वरूपनिर्वाहोपक्षीणस्यानपेक्षणीयत्वात् न तेन सिद्धसाधनत्वम् । न च आत्मत्वमुपाधिः, गुरुत्वाधारे साध्याव्यापनात् । न च स्वमतसिद्धशक्तावनैकान्तिकता तस्यापि कार्यानुरूपताद्दशोत्कर्षाद्यनपेक्षणात् । अयमग्निरेतन्निष्ठात्यन्ताभावेष्टसाध्यान्य-तराधिकरणम् मेयत्वात् घटवत् । तथा अयमग्निः एतदन्योन्याभावात्यन्ताभावेष्टसाध्या-त्यन्ताभावान्यतररहितः मेयत्वात् घटवत् । तत्र चैतदन्योन्याभावात्यन्ताभाववति पक्षे तद्रहितत्वं पक्षे सिध्यदिष्टसाध्यमन्तर्भाव्य सिद्धयति इतीष्टसाध्यसिद्धिः व्रीह्यादिकर्म-कारकनिष्ठप्रोक्षणादिसाध्यातीन्द्रियातिशयमन्तरा तद्विधानान्यथनुपपत्तिरपि शक्तिं व्यनक्ति शास्त्रीयापूर्वस्याप्यनात्मनिष्ठत्वस्येष्टत्वात । तदाहुर्भट्टपादाः :—

" कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा ।
योग्यता शास्त्रगम्या या परा साऽपूर्वमिष्यते ॥ "

प्रधानकर्मणामङ्गकर्मणां च प्राक्कारणात् स्वर्गादिप्राप्त्ययोग्याः पुरुषाः क्रतवश्च स्वकार्या-योग्यास्तामुभयीमप्ययोग्यतां व्युदस्य प्रधानैरङ्गैश्च योग्यतोपजन्यत इत्यवश्यं सर्वेणाभ्युप-गन्तव्यम् । असत्यां तस्यामक्रतुसमत्वप्रसङ्गात् । सैव च पुरुषगता वा क्रतुगता वा योग्यता शास्त्रेऽस्मिन्नपूर्वम् इत्युपदिश्यत इति । न च व्रीह्यादौ चेतनगुणो धर्म एव योग्यता इति विलक्षणशक्तिसिद्धिः । सैव प्राणश्रुत्या जगद्बीजमुक्तम् इति प्राप्तम् ।

**अत्र समाधिः** :—शक्तिर्हि शक्यमिव शक्तमप्यपेक्षते । तथा च यस्तस्याः अधिष्ठाता स एव जगद्बीजम् । स्वतन्त्राऽपि चेतना स्यात् अचेतना वा ? आद्ये कथं कूटस्थाया अमुष्या जगद्विकारपरम्परा । मायाशक्त्यात्मकत्वस्वीकारे च पर्यायेण ब्रह्मपक्ष एव कक्षीकृतः । अचेतना चेदधिष्ठातृसापेक्षत्वात् न स्वतन्त्रा । प्राणश्रुतिश्च प्राणोपा-ध्यात्मविषयतयाऽपि घटते । अतो न शक्तिपक्षोऽपि ।

एतेन स्वतन्त्रं सत्यं ईश्वरतन्त्रं वा प्रधानं जगदुपादानम् इति **निरस्तप्रायम्** । तदपि सङ्गिरन्ते :—

" भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥

कारणमस्त्यव्यक्तं । " भेदानां महदादिविशेषाणाम् ।

इत्यन्वयः । भिद्यन्त इति भेदा विकाराः अविभक्तजडवस्तुप्रकृतिका अमी परिमितत्वात् घटशरावादिवत् । विगीतम् सुखदुःखमोहसामान्यप्रकृतिकम् नियमेन तदन्वितस्वभावत्वात् यद् यदन्वितस्वभावम् तत् तत्सामान्यप्रकृति दृष्टम् यथा मृत्सामान्यान्वितस्वभावा घटशरावादयः तत्प्रकृतिकाः तदन्वितस्वभावत्वञ्च भावानां रागद्वेषमोहहेतुत्वेन । असुखाद्यात्मकत्वे च तदसम्भवात् सुखदुःखमोहा एव सत्त्वरजस्तमांसि । अनेन च त्र्यात्मकेन (समा)विश्वम् प्रधीयत इति प्रधानम् इत्युच्यते चेतनं प्रत्युपकारकत्वेन गुणभूतमवितथम् ।

विगानगोचरो विभक्तम् जडवस्तुप्रकृतिकम् रथादिवत् तरङ्गादिवद्वा ; समानानां कार्यकारणविभागस्य लोके दर्शनात् जगच्च जडम् इति जडप्रधानप्रकृतिकम् । तथैव जडवस्तुप्रकृतिकम् विचित्रकार्यत्वात् एकबीजप्रकृतिकाङ्कुरकाण्डादिवत् यथा महतः परमव्यक्तम् इति । अजामेकाम् इत्यादिश्च वेदः प्रधानम् प्रथयति । न च जीवादन्यः कश्चिदीश्वरः, स एव स्वमहिमप्रतिष्ठितो वेदान्तैस्तथा तथोच्यत इति लिङ्गादिबलात्प्रधानसिद्धिः इति ।

तत्र समाधिः :—प्रधानस्य गुणानां साम्यात्मकस्य पृथग्वस्तुत्वाभावाद्विभक्ता गुणा एव जगद्विकारकारणम् इति नाविभक्तजडवस्तुप्रकृतित्वप्रतिज्ञा साधयसी । अविभक्तत्वे संयुक्तत्वश्चेत् अणुभिः सिद्धसाधनम् । परिमितत्वमपि देशतश्चेत् आकाशादौ नास्ति इति भागासिद्धिः । कालतश्चेत्, न काल इति स एव दोषः । वस्तुतश्चेत् गुणपुंसोः व्यभिचारः सङ्ख्यातः । परिमितत्वञ्चासिद्धम् विकाराणामनन्तत्वात् । सर्वभावानां सुखाद्यन्वयासिद्धेश्च, सुखादिसाधनत्वेनापि रागादिहेतुत्वसम्भवाच्च । न च सुखादिवत् सुखादिरूपत्वं चेतोवृत्तौ प्रतिफलितमनुभूयते । भावानां प्रकृतिशक्तिमत्त्वं च स्वतो रथादौ न सम्मतम् अश्वाद्यनपेक्षत्वप्रसङ्गात् । परतः प्रवृत्तिशक्तौ च विमतं चेतन-व्यापारापेक्षप्रवृत्तिशक्ति जडत्वात् रथादिवत् इति परतन्त्रकारणसाधकत्वेन विरुद्धत्वात् । चेतनप्रकृतिकं वा आगन्तुकत्वात् बुद्धौ तत्प्रतिबिम्बवत् इति प्रतिसाधनत्वाच्च ।

चतुर्थमप्यसाधनम् अणुमायावादयोरपि जडत्वेन समानप्रप्रकृतित्वोपपत्तेः । मायया सिद्धसाधनत्वान्न पञ्चममपि । अव्यक्तादिश्रुतेश्च मायातद्विकारत्वेनाप्युपपत्तेः । तत्र अव्यक्तपदं कारणमायावाचि रथत्वेन प्रकृतम् “ सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ” इत्युक्तप्रकरणिविष्णुपदस्य निरतिशयपरत्वज्ञतय इति

"इन्द्रियेभ्यः परा" इत्यादौ प्रपञ्चे परिशिष्टं शरीरं प्रतिपादयति। अजापदं च श्वेताश्वतरे शाखान्तरसिद्धतेजोबन्नरूपावान्तररोहितादित्रिवर्णप्रकृतिपरम्। स्वप्रकरणोक्तां 'मायाम्' इति परां प्रकृतिं वा निरूपयति। किञ्च गुणवैषम्यम् सर्गकाले न पुंव्यापारात् तस्याकर्तृत्वाभ्युपगमात्। न कर्माणि तदा विद्यन्ते। विद्यमानानि वा न प्रकृतिप्रेरकाणि निमित्तं अप्रयोजकं प्रकृतीनाम् इत्युक्तत्वात्।

अथ "वरणभेदस्तु ततः क्षेत्रिकवत्" इति भणितत्वात् सुखेतरसृष्ट्योः प्रतिबन्धकयोरधर्मस्य च धर्मस्य च परस्परोत्सारकत्वे निष्प्रतिबद्धानां गुणानां केदाराम्भसामिव स्वतन्त्रवृत्तिः; तन्न, तयोः प्रसुप्तयोरशक्त्यवस्थापन्नयोः इतरेतरोत्सारकत्वानुपपत्तेः। अपरथा मोक्षेऽपि सर्गः स्यात्। न च मिथ्याज्ञानरागादयो मनस्यनुत्पन्ने तद्वृत्तयः संभवन्ति याः कर्मोद्बोधं कुर्युः साम्यभङ्गं वा तद्गुणानाम्। तदाहुर्भट्टपादा अपि—

"पुमानकर्ता येषां तु तेषामपि गुणक्रिया।
कथमादौ भवेत्तत्र कर्म तावन्न विद्यते॥"

"मिथ्याज्ञानं न तत्रास्ति रागद्वेषादयोऽपि वा।
मनोवृत्तिर्हि सर्वेषां न चोत्पन्नं मनस्तदा॥"[1]

इति। ईश्वरोऽपि क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुष ईश्वर इति लक्षणवान्। स्वरूपज्ञानेनैव चेद् गुणवैषम्यादिकारणं न जीवः कस्माद्विशेषाभावात्। सर्वदा वा कस्मान्न स्यात् अन्तःकरणाधीनसार्वज्ञ्यश्चेत् न सर्गात्प्राक् तत्, इति न स्वकार्यकरत्वम्। तस्मात् निरीश्वरवाद एव। सेश्वरवादेऽपि ईक्षणपूर्वकसर्गासम्भवात् गुणवैषम्यानिरूपणाच्च प्रधानस्योद्रिक्तसत्वगुणेन सार्वज्ञ्यासंभवाच्च "तत्त्वमसि" इति चेतनस्य कारणैक्योपदेशानुपपत्तेश्च, नैषा प्रक्रिया युक्ता। न च "यस्मिन् पञ्चपञ्चजनाः" इति साङ्ख्यतत्त्वानुवादः पञ्चजनशब्दस्य मनुष्ये रूढस्य "प्राणस्य प्राणम्" इत्यादिवाक्यशेषोक्तमनुष्यसम्बन्धिपञ्चप्राणादिपरत्वात्। "प्राणादयो वाक्यशेषात्"। ततो न श्रौतत्वेन युक्तत्वम् तत्प्रक्रियायाः। न च ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति प्रपूरयति जायमानं च पश्येत् स ईश्वरः सर्वात्मा इति श्रुत्युक्तसर्ववित्कपिलप्रोक्तत्वादेषा साध्वी, स्वस्य ज्ञानामृतैः पोषकमीश्वरमपलपतः कपिलस्य श्रुत्या प्रतिपादनविरोधात् कपिलनाममात्रवतस्तु प्रक्रिया न श्रौतसमक्षा।

---

1. श्लो. वा. सं. आ. परि. 87, 87.

" सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि इति तासां त्रिवृतं त्रिवृतमेकैकां करवाणि इति सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोत् " इति च ईक्षणपूर्वकं कर्तृश्रवणात् सङ्घातात्मकं पञ्चस्कन्धव्यापारजन्यमेव विश्वम् इति न बौद्धमतानवकाशः ।

तथा हि—बुद्धाचार्याणां छात्राश्चत्वारः; सौत्रान्तिको वैभाषिको योगाचारो माध्यमिकश्च । तत्र आद्यौ ज्ञानार्थास्तित्ववादिनौ । तृतीयो ज्ञानैकस्कन्धवादी । तुरीयो नकिञ्चिद्वादी । तत्रापि वैभाषिको बाह्यार्थप्रत्यक्षतां भाषते । सौत्रान्तिकस्तु ज्ञानदर्पणे प्रतिरूपदर्शनात् नीलादीनां बिम्बानामनुमेयत्वमेव मनुते । तयोश्च समुदायद्वयी चेतनव्यापारनिरपेक्षा बाह्याध्यात्मभेदेन । बाह्यं भूतं भौतिकं च । पृथिव्यादीनि चत्वारि भूतानि नभश्चावरणाभावमात्रं निरुपाख्यम् । भौतिकानि रूपादयश्चक्षुरादयश्च । आध्यात्मिकं चित्तं चैत्तश्च । तयोः रूपविज्ञानवेदनासंज्ञासंस्काराख्याः पञ्चस्कन्धाः । यथा " पञ्च पञ्चजना " इत्यत्र काण्वानां प्राणश्रोत्रचक्षुर्मनोज्योतिस्संज्ञकाः, माध्यन्दिनानां अन्नपञ्चमा ज्योतिर्वर्जिताः पञ्च, न तथा ईश्वरव्यवस्थिता इति । तत्र सविषयाणि इन्द्रियाणि रूपस्कन्धः रूप्यन्ते विषया एभिः इति रूपशब्देन इन्द्रियाण्युच्यन्ते । रूप्यन्त इति रूपाणि विषयाः । यद्यपि रूप्यमाणाः पृथिव्यादयो बाह्याः तथापि कायस्थत्वात् कायाकारेण संहतत्वात् इन्द्रियसम्बन्धत्वाद्वा अध्यात्मम् । अहमाकारं रूपादिगोचरञ्चेन्द्रियादिजन्यं दण्डायमानं निर्विकल्पकं संवेदनं " विज्ञानस्कन्धः " । चित्तस्य प्रियाप्रियोदासीनविषयस्पर्शसुखाद्यवस्था वेदानास्कन्धः । "संज्ञास्कन्धो" नाम विकल्पप्रत्ययः, यथा " गौरः कुण्डली ब्राह्मणो गच्छति " इति । रागद्वेषमोहाः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च " संस्कारस्कन्धः " । तत्र अहम् इत्यालयविज्ञानमात्रं चित्तम् । इतरे स्कन्धाश्चैत्तम् । क्षणभङ्गुरचतुर्विधाणुहेतुको भूतभौतिकसमुदाय एकोऽपरो रूपादिपञ्चस्कन्धहेतुकश्च इति समुदायद्वयी इति । सेयं लोके मृदादिसमुदायस्य चेतनव्यापारपूर्वकत्वान्न तन्निरपेक्षा भवितुमर्हति । ततो लोकानुसारिश्रुतिपक्ष एव रमणीयः ।

अथ भोक्तुराश्रयः क्रियावासनामयो भोगार्थं समुदायमाक्षिपति क्षणिकस्य भोक्तुराश्रयाश्रयत्वाभावात्तस्य स्वातन्त्र्यासम्भवे तदपि कुतस्त्यम् । चित्ताभिज्वलनाधारस्समुदाय इत्यप्यशोभनम् । समुदायसिद्धौ हि विषयेन्द्रियसंयोगः तद्धिचाभिज्वलनादितरेतराश्रयात् ।

न च सर्वभावानां क्षणिकत्वे प्रमाणमस्ति। न तावत् प्रत्यक्षम्, येन हि घटादिना यदिन्द्रियं संयुक्तम्, तस्यानन्तरक्षणे सत्त्वाभावादुत्पन्नमपि विज्ञानं कुत्र प्रमाणीभवेत्। सम्प्रयोगस्य कारणत्वेन ज्ञानकार्येण नियतपूर्वक्षणवर्तिना नियतोत्तरभाविना सहभावासम्भवाच्च व्यापारवत्तया च कारणत्वं वक्तव्यम्। तथा च पूर्वक्षणवर्तिनि उत्तरक्षणे जायमानव्यापारकार्याश्रयत्वेऽनेकक्षणावस्थानादपसिद्धान्तः।

नीलाभासस्य चित्तस्य नीलाद्यालंबनाख्यप्रत्ययान्नीलाकारता, समनन्तरप्रत्ययात्पूर्वज्ञानाद्बोधरूपता, चक्षुषोऽधिपतिप्रत्ययात् रूपग्रहणं प्रति नियमः, आलोकात् स्पष्टता। एवं सुखादीनामपि चैत्तानां चत्वार्येतान्येव कारणानि इति कार्यकारणभावाश्रयणाच्च। न च क्षणिकानामनुपकृतत्वे सति अकृतत्वम् क्षणद्वयावस्थानप्रसङ्गात्। न च जलाद्यनुपकृतानां बीजानामङ्कुरादिजनकत्वं दृष्टम्। ततो न क्षणिकत्वं केवलाद्धेतोर्हेतूपनिबन्धनसंज्ञात्। नापि सहकारिसमवधानात् प्रत्ययोपनिबन्धसंज्ञात्कार्योत्पादः। प्रत्यक्षञ्च प्रत्युत 'स एवायं स्फटिकः' 'स एवायम्' इति च विषयात्मनोऽस्थायित्वमेव स्थापयति। क्षणभङ्गवादे च 'मयेदमनेनाभिप्रायेणोक्तम्' इति ग्रन्थगमनिकाऽतिदुर्लभा स्यात्। न च "यत्सत् तत्क्षणिकम्" इत्यादिलिङ्गं प्रमाणम्; तस्य स्थायिव्याप्तिसंस्कारापेक्षत्वेन क्षणिकत्वेनानुत्थानात्।

नानुपमृद्य प्रादुर्भावः बीजमृत्पिण्डक्षीराद्यनुपमर्देनाङ्कुरकुम्भदध्यादिकार्याप्रादुर्भावेन, इत्यप्यसुन्दरम्; उपमर्दः प्रध्वंसः, स किं स्वरसतः, कार्यप्रयुक्तो वा? आद्ये क्त्वाप्रत्ययानुपपत्तिः; "कार्यं हि कारणमुपमृद्य प्रादुर्भवति" इति मानात्। अन्त्ये—कार्यस्य पूर्वमपि सत्त्वं स्यात्। कारणस्य चासतोऽपि नाशयत्वायोगात् स्वहेतूच्छित्तयेऽलं चेत्, अजातमपि सत्, यदि द्वयमप्यभ्युपेतं स्यात्। "न ह्यसद्धन्यते सता" इति सुरेश्वराचार्यवचनाच्च। न च स्वयं पिण्डादि कारणम्, किन्तु तदनुगता मृदेव। पिण्डाभावेऽपि कपालावस्थाया मृद एव कुम्भकारणत्वम् इति नैषा प्रक्रिया।

**योगाचारस्तु**—युक्तितो भवदभिमतप्रामाण्यायाश्च "कोऽयमात्मेति वयमुपास्महे कतरस्स आत्मा येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति" इत्याद्युक्त्वा "सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ति एष ब्रह्मा एष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्चमहाभूतानि" इत्यादिना प्रज्ञानगतमेव विश्वप्रपञ्चं स्फुरति, न बाह्यम् किञ्चन इत्युदीर्य "सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञा-

नेत्रोलोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म" इत्यैतरेयकश्रुतेः प्रमाणादिविभागोऽपि विज्ञान-मात्रावलम्बी इति विज्ञानैकस्कन्धवादिनः । तथा हि—'प्रमाता प्रमाणम्, प्रमेयम्, प्रमितिः' इति हि चतसृषु विधासु तत्त्वपरिसमाप्तिः । आसामन्यतमाभावेऽपि तत्त्वस्या-व्यवस्थापनात् तत्र स्वरूपविज्ञानस्याकारयुक्तम् - प्रमेयं, प्रमेयप्रकाशनम् प्रमाणफलम्, तत्प्रकाशनशक्तिः प्रमाणम्, तद्वत्तया प्रमाता । तथा च—विज्ञानस्कन्धमात्रं तत्त्वम् ।

**वैभाषिकसौत्रान्तिकयोः** प्रमाणादिविभागो यद्यपि विज्ञाने कल्पितः, तथाऽपि प्रमेयं बाह्यमेव ; तथा हि—भिन्नाधिकरणत्वे हि प्रमाणफलयोस्तद्भावो न स्यात् । न हि खदिरगोचरे संयोगाविष्टरूपेण परशौ पलाशद्वैधीभावो भवति । तस्मादनयोरैकाधिकरण्यं वक्तव्यम्; कथं च तद्भवति, यदि ज्ञानस्थे एव प्रमाणफले भवतः । ज्ञानप्रकाशो हि फलम्, तज्जननशक्तिश्च प्रमाणम्; तयोश्च ज्ञाननिष्ठत्वेन जन्यजनकभावः । न च ज्ञानमनंशमंशाभ्यां वस्तुसद्भ्यां युज्यते । तदेवम् ज्ञानमज्ञान-वृत्तिकल्पितज्ञानत्वाङ्गं फलम् । अशक्तिव्यावृत्तिपरिकल्पितात्माऽनात्मप्रकाशनशक्त्यंशम् प्रमाणम् प्रमेयन्त्वस्य बाह्यमेव इति **वैभाषिकाः** । **सौत्रान्तिकनये**—अर्थज्ञानस्यार्थ-सारूप्यमनीलाकारव्यावृत्त्या कल्पितं नीलाकारत्वं प्रमाणम् प्रतिबिम्बस्येव बिम्बम् बाह्यं प्रति तस्य व्यवस्थापनहेतुत्वात् ; अज्ञानव्यावृत्तिकल्पितं च ज्ञानत्वं फलम्, व्यवस्थाप्य-त्वात् । तथा ह्याहुः—"न हि वित्तिसत्तैव तद्वेदना युक्ता, तस्याः सर्वत्राविशेषात्, तां तु सारूप्यमाविशत् सरूपत्वं घटयेत्" । तां वित्तिं स्वप्रतिबिम्बेन समानरूपां कुर्वाणं विषयं तद्वित्तिगतं सरूपत्वं तद्विषयभावेन घटयेत् प्रकाशमात्रस्य सर्वत्र साधा-रण्येन नीलादिविषयविशेषे वेदनत्वायोगात् इत्यर्थः । बाह्यार्थश्च न परमाणुमात्ररूपः प्रत्यक्षके स्थूलनीलावभासस्यानेकपरमसूक्ष्मपरमाणुगोचरत्वायोगात् । न च प्रतिभासधर्मः स्थौल्यम् इति युक्तम्, विकल्पासहत्वात् । किमयं प्रतिभासस्य ज्ञानस्य धर्मः उत प्रतिभासकालेऽर्थस्य तदुपाधिकस्तत्कृतो धर्मः । यदि पूर्वः कल्पः अद्धा । तथा सति हि स्वांशालम्बनमेव विज्ञानमभ्युपेतं स्यात् । द्वितीय इति चेत्, तथा हि—रूपपरमाणव एव निरन्तरमुत्पन्ना एकविज्ञानोपारोहिणः स्थौल्यम् । न च औपाधिकस्थौल्यविषयत्वादत्र कस्यचिद्भ्रान्तता । न हि न ते रूपपरमाणवः, न च न निरन्तरमुत्पन्नाः । न चैक-विज्ञानानुपारोहिणः । तेन माभून्नीलत्वादिवत्परमाणुधर्मः, प्रत्येकं परमाणुष्वभावात् प्रति-भासदशापन्नानां तु तेषां भविष्यति बहुत्वादिवत् सांवृतं स्थौल्यम्, । निशकलितपरमाणु-तत्त्वावरकत्वात् । संवृतिर्नानाबुद्धिगृहीतपरमाणूनां निरन्तरदेशावच्छिन्नत्वेन बुद्धिस्त-दुपाधिकं सांवृतम् ; यथाऽऽहुः :—

"ग्रहे नैकस्य चैकेन किञ्चिद्रूपं हि गृह्यते ।
सांवृत्तं प्रतिभादित्थं तदेकात्मन्यसम्भवात् ॥

न च तद्दर्शकं भ्रान्तं नानावस्तुग्रहाद्यतः ।
सांवृतं ग्रहणं नान्यत्र च वस्तुग्रहो भ्रमः ॥"

इति । तत्रैरन्तर्यावभासस्य भ्रान्तत्वात् । गन्धरसस्पर्शपरमाण्वन्तरिता हि नीलपटाद्यर्थे नीलरूपपरमाणवो न निरन्तराकाराः । तस्मादारात्सान्तरेषु तरुषु एकघनवनप्रत्ययवत् एकस्थूलप्रत्ययः सान्तरेषु भ्रान्तः परमाणुषु । भ्रान्तत्वे च न घटादिप्रत्ययस्य व्यक्तेः स्वलक्षणतया न शक्यसङ्केतत्वेन तद्विषयस्य कल्पनापोढत्वेऽपि प्रत्यक्षत्वम्, "कल्पनापोढमभ्रान्तं प्रत्यक्षम्" इति लक्षणात् । नापि परमाणुसमूहाः स्तम्भादयोऽवयविनः प्रत्यक्षाः, तेषामभेदे परमाणुभ्यः परमाणुत्वमेव इत्युक्तदोषात्; भेदे तु गवाश्वस्येव नावयवावयविभावः स्यात् स्वातन्त्र्येणोपलम्भश्च स्यात् । एवं भेदाभेदविकल्पेन जातिगुणकर्मादीनि प्रत्याचक्षीत । ततो न प्रत्यक्षं बाह्ये घटादौ प्रमाणम् इति,

**तदेतदयुक्तम्;** भेदाभेदाभ्यामनिर्वाच्याभ्युपगमेनैव व्यावहारिकप्रामाण्यप्रत्यक्षगोचरत्वाभ्युपगमात् । न च घटादीनां ज्ञानविग्रहवत्त्वे सहोपलम्भनियमः प्रमाणम्, द्वयोरेकदेशकालत्वस्य सहशब्दार्थत्वेन, प्रत्युत भेदसाधकत्वेन विरुद्धत्वात् । अथ असहानुपलभ्यमानत्वमेव सहशब्दार्थः तर्हि रूपप्रकाशयोर्व्यभिचारः, घटादिरूपस्य सावित्रादिप्रकाशैक्याभावात् । अथ विज्ञानेनासहानुपलभ्यमानतया घटादीनां विज्ञानस्वरूपस्यैव तदभेदसाधनेनानेकान्तः तदा हि कल्पितबाह्यत्वादिनानेकान्तः :—

"यदन्तर्ज्ञेयरूपं तु बहिर्वदवभासितम् ।"

इति स्वयमेव प्रयुक्तत्वात् । बहिष्ट्वेन प्रतीतस्याऽन्तरज्ञानाकारत्वसाधनस्य स्वानुभवविरोधश्च । तथा "अहम्" इत्यालयज्ञानसन्ताने सत्यपि कदाचिद्भवन्तो नीलादिप्रत्ययास्तद्व्यतिरिक्तहेतुका भवितुमर्हन्ति, ये यस्मिन् सत्यपि कादाचित्कास्ते तदतिरिक्तहेतुसापेक्षाः । यथा एकस्मिन्नकुर्वत्यपि विवक्षां जिगमिषां वा विवक्षाजिगमिषाप्रत्ययौ पुरुषान्तरकर्तृकौ; तेषां यो बाह्योऽर्थः, स हेतुः इत्यनुमानविरुद्धत्वञ्च । न च वाच्यम् सन्तानैक्येऽपि सन्तानिनां क्षणानां भेदेन शक्तिभेदात् केषाञ्चिदेव नीलादिज्ञानजनकत्वम्, न सर्वेषाम्; तेन कादाचित्कत्वं नीलादिप्रत्ययानाम्, ततः स्वसन्तान-

विज्ञानजन्यत्वोपपत्तेः, पक्षेऽपि विपक्षत्वसंभावनया सन्दिग्धानैकान्तिकता - इति । क्षणानां भेदस्य शक्तिभेदहेतुत्वे एकस्य शक्तिः, नान्यस्य इत्येकस्यैव नीलज्ञानजनने सामर्थ्यम् इति नीलविज्ञानप्रवाहानुदयप्रसङ्गात् । बाह्यार्थवादिनां च नीलादीनां शक्तत्वेऽपि सन्निधानादिसहकारिसमवधानापेक्षत्वात् तत्प्रत्ययानां कादाचित्कत्वोपपत्तेः । न च बाह्यानां यथाऽनेकेषां नीलविज्ञानजनकत्वं कर्मत्वेन तथाऽऽलयविज्ञानानां कर्तृत्वेन इति वाच्यम् ; भूतभविष्यतोर्भेदानङ्गीकारवत् क्रियाकारकयोर्भूतेर्भेदानङ्गीकारात् नीलादिज्ञानस्यालयज्ञान-कर्तृकत्वायोगात् ।

किञ्च यदि विज्ञानमेव ग्राह्यग्राहकरूपम् तदा "नीलमहं जानामि" इति द्व्याकारं ग्रहणं भवेत् । आकारयोश्च परस्परभेदवद्विज्ञानादपि भेदश्चेत्, स एव तात्त्विको ग्राहकादिविज्ञानाद्भिन्नं वस्तु आक्षिपेत् । एकविज्ञानादनन्यत्वे च ग्राह्यग्राहकयो-र्ज्ञानस्यैक्यात् ग्राह्यमेव ग्राहकमेव वा विज्ञानं पर्यवस्येत् । मिथोऽपि तयोरेकत्वात् ग्राह्यग्राहकयोश्च परस्परसापेक्षरूपत्वात् एकतराभावे द्वितीयाभावनियमात् । तथा चैकाकारोपरमे द्वितीयोपरमात् ज्ञानस्य चांशवैधुर्यात् निस्स्वभावत्वेनाभावपर्यवसानं स्यात् । किञ्च परस्परभिन्नाभ्यामाकाराभ्यां विज्ञानस्याभेदात् स्वरूपं भिद्येत । भेदे च सिद्धं ग्राह्यग्राहकवस्तुद्वयम्, तयोश्च ज्ञानम् इति संज्ञा चेत्, अस्तु नाम सा ; अथ - भिन्न-त्वेऽपि ज्ञानान्तर्भूतमेव ग्राह्यम्, तर्हि "ज्ञानम् ज्ञानम्" इति द्वयोरनुगतप्रत्ययः स्यात्, न चास्ति ; व्यतिरिक्तसामान्यानङ्गीकाराच्च । अथ अन्यव्यावृत्तिकल्पितांशं ग्राह्यग्राहकाकारं विज्ञानम् इति न कश्चिद्दोषः, मैवम् ; विज्ञानमात्रवादिनोऽपोह्य-वस्त्वन्तराभावात् । अज्ञानमपि नापोह्यम्, तस्याभाववपुषो भावान्तर एवाभाव इति वस्त्वन्तरत्वाभ्युपगमात् । अपोह्यत्वादपि तस्य वस्तुत्वमवश्यंभावि नीलज्ञानापोह्यपीतादि-ज्ञानवत् । तथा चाज्ञानापोहस्याज्ञानत्वे ज्ञानव्यतिरिक्तत्वं वस्त्वापद्येत ।

तथाहुर्भट्टाचार्याः :—

"वस्त्वन्तरस्य चाभावात्त्वयाऽपोहोऽपि दुष्करः ।
नाज्ञानं नाम किञ्चित्स्यादपोह्यज्ञानवादिनः ॥"

अपोहो न ह्यभावस्य कथञ्चिदुपपद्यते ।
वस्त्वन्तरमभावस्स्यादपोह्यत्वाच्च वस्तुता ॥

तेनाज्ञाननिवृत्तौ ते ज्ञानेऽन्योऽर्थः प्रसज्यते ॥ "

इति । अथ कल्पितमपोह्यम्, तदपि न ; अत्यन्तासत्यस्य कल्पनानुपपत्तेः । अज्ञाननिर्भासा अपि न तव बुद्धिरेव अज्ञानश्च प्रकल्पितम्, ततश्च ज्ञानमेवापोह्यं न, तथा च न ज्ञानत्वसिद्ध्यर्थं ज्ञानापोहो युज्यते । न खलु वृक्षत्वसिद्ध्यर्थं वृक्षा एवापोह्यन्ते । अपोह्ये च विज्ञाने विज्ञानत्वं न भवेत् । न हि वृक्षत्वकल्पनायामपोह्येषु घटादिषु वृक्षत्वम् । किञ्च, अस्मिन्मते स्मृतिरपि न सङ्गच्छते ।

" अतीतत्वानुविद्धं हि ग्राह्यमत्रानुभूयते "

न च प्रत्युत्पन्नविज्ञानस्यातीताकारसमावेशः सम्भोभवीति । विचित्रार्थाभावे च सर्वं विज्ञानं नीलाकारं पीताकारमेव वा किं न स्यात् ? स्वप्नेऽप्यनिर्वाच्यार्थवैचित्र्याभ्युपगमात् " न तत्र रथाः " इत्यादिश्रुतेः । उक्तम् च —

" मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् " । मात्रशब्देन जागरणस्य मायामयत्वाविशेषेऽपि सति प्रमातर्यबाध्यत्वम्, स्वप्नस्य तु बाध्यत्वं विवक्षितम् । ततः सूत्रादप्येतत् । अथ वासनाभेदात् ज्ञानवैचित्री, स एव कुतः ? ज्ञानभेदाचेत् अन्योन्यापेक्षणम् ; न चानादित्वेन परिहारः, भेदग्राहकप्रमाणाभावात् । वासनाया अपि प्रमाणशून्यत्वात् जाग्रदर्थोपलब्धिजन्यवासनाजन्यत्वाच्च स्वप्नोपलब्धेर्बाह्यार्थोपलब्ध्यजन्यवासनाजन्यार्थाकारोपलब्धेरसम्प्रतिपत्तेश्च । अतो बाह्यार्थसिद्धौ तत्कारणत्वं ब्रह्मलक्षणं नापलापमर्हति ॥

अथ आर्हताः अनेकान्तवादमवतारयन्तो लक्षणमाक्षिपन्ति । तथा हि— " आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते " " यस्सर्वज्ञः " " को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः अर्वाग्देवा अस्य विसर्जनाय अथा को वेद यत आबभूव इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद " इत्यव्यवस्थारूपभवदभीष्टश्रुतेः द्रव्यपर्याययोरैक्यम् इत्यादियुक्तेश्च इति न नियतलक्ष्यसिद्धिः इति । ननु निर्धारितमपि सन्देहपुरस्सरं श्रुत्यन्तरे— तथा हि ब्रह्मवादिनो वदन्ति किं कारणम् ब्रह्म ब्रह्म तावत् स्वयं विशुद्धम् अशुद्धविक्रियामूलं न इति किं सहकारिकारणमस्य इति किं कारणम् केन सहकृतम् कुतोऽस्य जाता जीवामहे केन क च संप्रतिष्ठाः अधिष्ठिताः

केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ।

> " कालःस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् ।
> संयोग एषान्न त्वात्मभावादात्माप्यनीशस्सुखदुःखहेतोः ॥ " (श्वे. 1. 2.)

इति मीमांसमानाः —

" ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् " (श्वे. 1. 3.) इति " मायां तु प्रकृतिं " " योनिं योनिमधितिष्ठत्येक " इति च श्वेताश्वतरोपनिषदि मायया: त्रिगुणाया ब्रह्माधिष्ठिताया जगत्कारणत्वम् ब्रह्मण एव वा तदुपकरणस्य इति निर्धारणश्रवणात् ।

> संयुक्तमेतत्क्षरमक्षरं व्यक्ताव्यक्तं भरते विश्वमीशः ।
> अनीशश्चात्मा बध्यते भोक्तृभावनात् ज्ञात्वादेवं मुच्यते सर्वपापैः "(श्वे. 1.8.)

इतीश्वरपक्षप्रकटीकरणाच्च तत्रैव । न चात्र पारमेश्वर्याश्शक्तेः प्रदेशा योनिशब्दवाच्याः प्रकृतियोन्योरैक्यस्य विवक्षितत्वात् योनिम् इति तस्या एवावगमात् इति भाष्योक्तत्वात् । अतोऽविद्यैव प्रतिजीवगता जगद्योनिः माया ब्रह्मविषया ; ततो न भवदभिमतप्रमाणभावाः श्रुतय एवानेकान्तवादमवतारयन्ति इति वाच्यम् ; अव्यवस्थाश्रुतेः, सृष्ट्याद्यनिर्वाच्यतापरत्वस्याचार्यैरुक्तत्वाच्च ।

यच्चोच्यते :—

> " द्रव्यपर्याययोरैक्यमभेदप्रतिपत्तितः ।
> (न)तथा कथञ्चिन्नानात्वं भेदद्दष्टेर्वशादपि ॥ "

इति तदप्यपरीक्षिताभिधानम् । न खलु प्रतीतिमात्रेण तत्र व्यवस्था, रज्जुभुजङ्गादेरपि तत्त्वान्तरत्वप्रसङ्गात् तत्र भेदप्रतीतिर्न प्रमाणीभवितुमर्हति, तत्प्रमाणत्वस्य विषयपरीक्षायां निराकृतत्वात् । तस्मादद्वैतप्रतीतिरेव प्रमाणं तत्त्वव्यवस्थापकम् । अत एवैतदनवकाशम्—

> " कैश्चिदव्यतिरिक्तत्वं कैश्चिच्च व्यतिरिक्तता ।
> दूषिता साधिता चापि न च तत्र बलाबलम् ॥

कदाचिन्निश्चितं कैश्चित्तस्मान्मध्यस्थता वरम् ।
तेनान्यानन्यते तस्य स्तो नस्तश्चेति कीर्त्यते ॥

तस्माच्चित्रवदेवात्र मृषा स्यादेकरूपता ।
वस्त्वनेकान्तवादाच्च न सन्दिग्धा प्रमाणता ॥"

इति । आत्मवस्तुनश्चाभेदसत्त्वैकान्तावधारणादागमन्यायाभ्यां प्रपञ्चस्य वास्तवसत्त्वैकान्तानभ्युपगमाच्च तत्रानैकान्तोऽपि न नो दोषाय । अनेकान्तवादेन "सत्यैव पदार्था" इत्यवधारणायोगाच्च ।

तथा हि :—जीवाजीवौ संक्षेपेण द्वौ पदार्थौ ; आस्रवसंवरनिर्जरबन्धमोक्षाः पञ्च पदार्थाः तयोरवान्तरा इति सप्त । कार्यकारणैक्यात् प्रकृतिपुरुषाख्ये द्वे एव सङ्ग्रहेण तत्त्वे । तथा कतिपयविकारगणनेन समस्तानि पञ्चविंशतितत्त्वानि इति यथा साङ्ख्याः एवं विवसना अपि कयाचित्परिभाषयोक्तमाहुः :—तत्र बोधात्मको जीवो जडवर्गस्त्वजीवः । आस्रवसंवरनिर्जराख्यास्त्रयः प्रवृत्तिलक्षणाः । द्वेधा प्रवृत्तिः—सम्यक्, मिथ्या च । तत्र मिथ्याप्रवृत्तिरास्रवः । आस्रवयति पुरुषम् विषयेषु इति इन्द्रियप्रवृत्तिः आस्रवः । ततश्च पौरुषं ज्योतिर्विषयान् स्पृशन् तद्रूपादिविज्ञानाकारेण परिणममानं संसरति इत्यनर्थहेतुत्वात् सा मिथ्याप्रवृत्तिरास्रवः । कर्माणि वा कर्तारमभिव्याप्य स्रवन्ति अनुगच्छन्ति इत्यास्रवाः । संवरनिर्जरौ च सम्यक्प्रवृत्ती । तत्र शमदमादिरूपा प्रवृत्तिस्संवरः । सा ह्यास्रवः स्रोतसो द्वारं संवृणोति इति संवरः । निर्जरस्तु अनादिकालप्रवृत्तकषायकलुषपुण्यापुण्यप्रहाणहेतुस्तप्तशिलारोहणादिः । स हि निश्शेषेण पुण्यपापे सुखदुःखोपभोगेन जरयति इति निर्जरः । बन्धः कर्मविशेषो ज्ञानावरणीयादिः । विगलितसमस्तक्लेशतद्वासनस्यासंवरणज्ञानस्य सुखैकतानस्यात्मनोऽलोकाकाशावस्थानं मोक्ष इत्येके । अन्ये सततोर्ध्वगमनशीलो जीवो धर्माधर्मास्तिकायावरुद्धस्तद्विमोक्षायदूर्ध्वं गच्छत्येव स मोक्ष - इति । अस्ति इति कायनात् शब्दनात् अस्तिकाय इति तेषां संज्ञा इति सप्त पदार्थाः संक्षेपविस्तारापेक्षयोक्ताः । अनेकान्तवादे नैतन्नियमः स्यात् । न चानेकान्तवादे प्रीतिमध्यस्थताशोका अपि नियताः स्युः । तथा हि—कटकभङ्गेन कुण्डलोत्पादे कुण्डलार्थिनः प्रीतिः कटकार्थिनः शोकः सुवर्णमात्रार्थिनो मध्यस्थता प्रसिद्धा । तदाहुः मण्डनमिश्राः :—

"उत्पत्तिस्थितिभङ्गानामेकत्र समवायतः ।
प्रीतिमध्यस्थताशोकाः स्युर्नस्युरिति दुर्घटम् ॥" [1]

न चालङ्कार एवायमनेकान्तवादिनः इति वाच्यम् ; तथा हि— स्वर्गादिप्राप्तमपि इति नोपायारम्भोऽप्राप्तमपि इत्यारम्भ इत्यादि विरुद्धानुष्ठानाशक्तं जगन्निश्चेष्टं डोलायमानं प्रसज्येत ; सति चैवंसप्तभङ्गीनयोपन्यासोऽपि प्रयासायैव स्यात् , सप्तानामेकान्तभङ्गानां समाहारः सप्तभङ्गी, तस्या नयः सप्तभङ्गीनयः ।

तथा हि, — स्यादस्ति स्यान्नास्ति स्यादस्तिनास्ति इति च स्यादवक्तव्यः स्यादस्ति चावक्तव्यश्च स्यान्नास्ति चावक्तव्यश्च स्यादस्ति च नास्ति चावक्तव्यश्च इति सप्त भङ्गाः । तत्र भावस्य विधिविवक्षायां आद्यः ; निषेधविवक्षायां द्वितीयः ; उभयविवक्षायां तृतीयः ; सदसत्त्वयोर्वाचः क्रमवर्तित्वाद्युगपद्भावेन वक्तुमशक्यतायां चतुर्थः ; स्यादस्तिभङ्गो नास्तित्वेन सहावक्तव्यः स्यादस्तिभङ्गोऽस्तित्वेन सहावक्तव्यः स्यादस्तिनास्तिभङ्ग एकैकेन सह । स्यादस्ति इत्येव स्यान्नास्ति इत्येव वा वक्तव्यः । स्याच्छब्दः खल्वयं निपातः तिङन्तसदृशोऽनेकान्तत्वद्योतकः । ततो नास्य साध्यार्थता । यथाहुः :—

"वाक्येष्वनेकान्तविद्योति गम्यं प्रति विशेषणम् ।
स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः ॥"

स्यादस्ति इत्यादिवाक्ये स्याच्छब्दो गम्यमस्त्यादिकं प्रति विशेषणं भूत्वाऽनेकान्तत्वं द्योतयति स्यादस्ति कथंचिद्-अस्ति इति अर्थयोगित्वात् , अन्यथा निरर्थकः स्यात् इत्यर्थः । नयश्च यदि सामान्यविशेषयोरैक्यमेव स्यात् , तदाऽनुवृत्तव्यावृत्तव्यवहारौ युज्येते । विशेषस्य सामान्यान्तर्भावे व्यावृत्तव्यवहारस्य सामान्यस्य च तदन्तर्भावेऽनुवृत्तव्यवहारस्य चाभावप्रसङ्गात् । अत्यन्तभेदे च गवाश्ववद्व्यतिरेकोपलम्भः स्यात् इत्यर्थः । सोऽयं सप्तभङ्गीनयोपन्यासः ।

किञ्च भेदाभेदाभ्यामुभयात्मकत्वा(द्यात्या)त् वियदादेपि वस्तुनस्सामान्यविशेषयोः नैकैकात्मकत्वेनैकत्रोभयव्यवहारस्स्यात् इति तुल्यम् यदि सामान्यविशेषौ । एतेन

"चित्ररूपेण नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥"

---

1. Br. Siddhi. 2. 24.

इति निरस्तम् । वस्तुनोऽपि यदि कार्यकारणरूपोपाधिको भेदाभेदाभ्यां सम्भेदः, तथा सति कार्यकारणरूपाभ्यामप्युपाधिद्वयाधीनस्संसर्गः, एवं तत्र तत्र इत्यनवस्था । एवं कार्यकारणरूपयोर्वस्तुनश्च रूपिणः परस्परं भेदाभेदसिद्ध्यर्थं त्रयाणामुपाधित्वेन द्वे द्वे रूपे कल्पनीये तथा ताभ्यामपि इत्यनवस्था सहस्रधा प्रसरेत् ।

अथ निरुपाधेरेव कार्यकारणरूपसम्बन्धस्तर्हि भेदाभेदाभ्यामपि तथाऽस्तु; तथा च-"कार्यरूपेण नानात्वं अभेदः कारणात्मना" इति । तदुक्तम् - कार्यकारणव्यवहारोऽप्येकधैव इत्यादि । वेदान्ततत्त्वतः सत्कार्यादिपक्षे दुर्निरूपत्वाच्च । तस्माद्भेदाभेदाभ्यामनिर्वाच्यमायोपाधिना कार्यकारणरूपे परिकल्पिते चिदात्मनि स्वप्न इव इति न्याय्यम् ।

यदपि—"तत्सत्यं स आत्मा" इति कारणस्य सत्यत्वसंकीर्तनम्, तदपि कार्यापेक्षया चिरत्वेन सत्यमन्यद् इति, कार्यस्यासत्यत्वदाढर्याय वा । 'सदेवेदमेकमेवाद्वितीयमग्र आसीत्' इति यथा कार्यस्य कारणतावन्मात्रत्वादत्यन्ताभेदनिर्देशः, तथा विचार्यमाणे कारणरूपस्य ब्रह्मदर्शनाद्वा "तत्सत्यं ब्रह्मैव" इति व्यपदेशः । अत एव यतो वा इत्यादिकारणोपदेशमुखेन "तद्ब्रह्म तद्विजिज्ञासस्व" इत्युपदेशः । उपक्रमादिनाऽद्वैते फलवति तात्पर्यवदिह वाक्यम् । अध्यस्तसर्गवाक्यानां पुनस्तदनुरोधेन मायामयसर्गविषयाणामात्यन्तिकाद्वैतबुद्ध्यवतारोपायमात्रत्वाद् । एकत्वमनुपश्यतः शोकादिनिवृत्तिवदेकत्वानेकत्वे अनुपश्यतः फलाश्रवणाच्च । अतो नानेकान्तवादो रमणीयः, किन्त्वनिर्वाच्यवाद एव ॥

यच्च-भागवता मन्यन्ते—

> तदेतत् सत्यम् यथा सुदीप्तात् पावकात् विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः ।
> तथाक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥ मु. 2. 1.

इति श्रुतेः, निरञ्जनज्ञानविग्रहो भगवान् परमात्मा वासुदेवाख्यः, तस्य सङ्कर्षणाख्यो जीवः प्रथमो विकारः स्थूलस्फुलिङ्गकल्पः, तस्य च प्रद्युम्नाख्यं मनः, तस्यापि अनिरुद्धाख्योऽहंकारो विकार इति । अन्यथा सरूपत्वानुपपत्तेः ।

मन्दमेतदपि । केवलाग्नेर्विस्फुलिङ्गादर्शनाद्ब्रह्मसंक्रान्तिवन्मायाक्रान्तिरपि चिदात्मनो विकाराय वक्तव्यैव श्रुत्यभिमता इति । तदुक्तम्—

"तमः प्रधानं क्षेत्राणां चित्प्रकाशः चिदात्मनाम् ।
परः कारणतामेति भावनाज्ञानकर्मभिः ॥"

इति । ततः क्षुद्रोऽयं पक्ष उपेक्षणीयः ।

कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिना पशुकल्पजीवानां संसारपाशविमोक्षायोपदिष्टाः; स च भगवान् निमित्तकारणमेव इति न्यायानुसारितत्प्रणेतृकागमप्रामाण्यात् **पाशुपता** भाषन्ते । **कार्यं** प्राधानिकं महदादि, **कारणं** प्रधानम् पशुपतिश्च, **योग** ओङ्कारोपासनादिः **विधि**स्त्रिषवणभस्मस्नानादिः, **दुःखान्तो** मोक्ष इति । **तत्र वदामः**:—आगमस्य वेदविरुद्धस्य बुद्धादिवाक्यवदतीन्द्रियार्थेषु पुरुषाशक्तितः तत्त्व सापवादत्वसम्भव इति अप्रामाण्यमध्वरमीमांसायामेवोक्तम् । आत्मा द्रव्योपादानं अनन्त्यावयवित्वे सति द्रव्यत्वावान्तरजात्यधिकरणत्वात् पृथिव्यादिवत् इत्यानुमानाच्च न निमित्तमात्रतावादः । मनश्च पक्षतुल्यम् । अतो न तेन व्यभिचारः । न च अविभुत्वमुपाधिः, समव्यापकत्वे तत्र गुणादौ साध्याव्याप्तेः । विषयमव्यापकत्वे च यद्विभु, तत्र द्रव्योपादानम् इति व्यतिरेकस्य मां प्रत्युदाहर्तुमशक्यत्वात् ।

ननु आम्नाय एव यः पृथिव्यां तिष्ठन् योऽप्सु तिष्ठन् इत्यादिना मृदादेरुपादानादधिष्ठातारं पृथक्करोति; तेन तद्विरुद्धमनुमानम्; **नैतत्**; मृदादेरपि ब्रह्मोपादानम्; तत्र दारुणीवाग्निरभिव्यक्तः अन्तर्यामी मायाप्राधान्यादुपादानमव्याकृताकाश इत्यव्याकृतान्तर्यामिभेदस्य मायिकस्याङ्गीकारेणोभयोपपत्तेः । न च ब्रह्म न द्रव्योपादानम् निर्गुणत्वात् गन्धादिवत् इति प्रत्यनुमानम् । केवलस्यानुपादानत्वेन सिद्धसाधनत्वात्; उपाधिशबलस्य गुणवत्त्वादसिद्धश्च हेतुः । परमाणूनामनेकप्रयुक्तसंयोगगुणविशिष्टानां द्रव्यारम्भकत्वस्वीकाराच्च । उपादानस्य तद्रूपेण जगत्कार्येऽन्वयाच्च । न च "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" "मयाध्यक्षेण प्रकृतिः सूयते" इत्यागमबलान्निमित्तमात्रत्वं ब्रह्मणो मन्तव्यम् । उभयत्वेऽप्येवं निर्देशस्य "तदैक्षत" इत्याद्यनुसारेण सम्भवात् । आकाशादिक्रमेणैव च सर्वत्र सृष्टिरभिप्रेता तेजआदेः, प्राथम्यनिर्देशस्तु सर्वकार्याणां साक्षाद्ब्रह्मसृष्टिः इति ख्यापनार्थोऽपूर्वकार्यनिवारणार्थो बहुपुत्रस्य कनीयांसमुद्दिश्य "अस्यायं जनक" इतिवत् । तेनैकसर्गरूपसत्कार्येण उक्तरूपकारणत्वलक्षणमविरुद्धम् । तस्मादसम्भवादिदोषाभावान्निराकुलं तटस्थलक्षणं ब्रह्मणः ॥

अथ **स्वरूपलक्षणं** संक्षेपेण भण्यते—"सत्यं ज्ञानमनन्तमानन्दं ब्रह्म" इति च स्वरूपलक्षणम् । तत्र सत्त्वव्यवहारो न तावत् सत्तासमवायोपाधिः; सत्तादावपि तस्य

निर्बाधस्य दर्शनात् द्वे तत्त्वे सदसती भावाभावौ इत्यविशेषेण सङ्ग्रहाच्च । सत्त्वे मुक्त्वाऽपि भावत्वं चेत्, षडेव भावा इति व्यपदेशो न स्यात् । अत एवार्थक्रियाप्रमाणयोग्योपाधिरपि न युज्यते, तयोरपि सत्त्वव्यवहारात् तत्र परनिबन्धनत्वेऽनवस्थानात् । अतः स्वरूपसत्त्वमेव सद्व्यवहारहेतुः । तच्च चिदात्मनो ब्रह्मणः समानः ।

तदाहुर्वाचस्पतिमिश्राः :—चिदात्मा तु श्रुतिस्मृतीतिहासपुराणगोचरस्तन्मूलतदविरुद्धन्यायनिर्णीतशुद्धबुद्धमुक्तस्वभावः सत्त्वेनैव निर्वाच्यः अबाधितस्वयंप्रकाशतैवास्य सत्ता । सा च स्वरूपमेव चिदात्मनो, न तु तदतिरिक्तसत्तासामान्यसमवायोऽर्थक्रियाकारिता च इति । न च स्वरूपसत्त्वमपि प्रतिभावं भिद्यते । अपरथा केषाञ्चित्सत्त्वे सर्वेषां सत्त्वात् नष्टानष्टोत्पन्नानुत्पन्नविभागो न स्यात् । अतो नाद्वैतसत्त्वसिद्धिः इति वचनीयम् ।

तथा हि—सत्तायां सत्यामपि द्रव्यादिव्यक्तीनामुपरागानुपरागमात्रेण सत्त्वासत्त्वादिव्यवहारः परेषाम्, तथा ब्रह्मसत्त्वे सत्यपि नष्टादिव्यवहारसम्भवात् । कथं तर्हि स्वरूपसत्त्वम्, यद्यसत्यपि स्वरूपे वर्तते ? उच्यते—स्वरूपसत्त्वं हि यद्बलेन मायाविजृम्भितः प्रपञ्चो लोहपिण्ड इवाग्न्यात्मना सदात्मना रज्जुर्दैर्घ्येणेव रज्जुभुजङ्गः प्रतिभासते तदेवाधिष्ठानभूतं ब्रह्मास्य स्वरूपं तत्त्वत इति । अत एव "इदं सर्वं यदयमात्मा" "सर्वं खल्विदं ब्रह्म" इति "रज्जुरियम्, न सर्पः" इतिवत् सर्वदा ब्रह्मात्मकत्वं जगतो वदति श्रुतिः । आरम्भणशब्दादिभ्यश्च आकाशादिप्रपञ्चस्यानृतत्वावधारणात् ।

ननु "वाचारम्भणं विकारो नामधेयम्" इति वाचा केवलमस्ति इत्यारभ्यते न तु वस्तुसन् विकारः यतो नामधेयमात्रं पुरुषस्य चैतन्यम् इति पुरुषचैतन्ययोस्सम्बन्धवत् इति । यथाश्रुतार्थे "नामधेयेन उदकमाहर" इत्यादिव्यवहारप्रसङ्गात् । अवश्यमर्थान्तरपरिग्रहेण एकविज्ञानेन सर्वविज्ञानोपक्रमात् नामधेयत्वं मिथ्यात्वम् । तथा सति—

> "आशामोदकतृप्ता ये ये चोपार्जितमोदकाः ।
> रसवीर्यविपाकादि तुल्यं तेषां प्रसज्यते ॥"

न प्रसज्यते व्यावहारिकसत्त्वानपलापेन चेत्, उच्यते :—नामधेयश्रुतिश्च देह आत्मा नामधेयमात्रम् इतिवत् । न च ब्रह्मपरिणामः प्रपञ्चः, विवर्तनिर्वाहकमायोपकरणश्रुतेः ।

परिणामश्च कार्त्स्न्येन चेत् द्वितीयपरिणामाभावः । "त्रिपादस्यामृतं दिवि" इत्यविकृत-श्रुतिविरोधश्च । एकदेशेन चेत्, सावयवत्वम्; अतो 'दिव्यो ह्यमूर्तः पुरुषः", निष्कलं निष्क्रियम्' इत्यादिश्रुतिकोपः । तस्मान्मायाविकारबलात् विवर्त एव जगत् इति ब्रह्मैव तु स्वरूपसत्त्वम् बह्वङ्कुरेति मायाविकारश्रुतेश्च ।

"सर्वज्ञकरुणानुन्ना विचारज्ञानकामना ।
ईक्षणोपचयान्नादिरूपेणाथ विवर्तते ॥"

इति वार्तिककृद्भिः सङ्गृहीताश्च विकाराः श्रुत्युक्ताः । यथा सिक्तस्य बीजस्य अङ्कुरोत्पत्तेः पूर्वभाविन उच्छूनताविकारविशेषा भवन्ति, तथा मायाया आकाशादिविकारविशेषाः तत्र सृष्ट्यवसरोद्भूतेन सर्वप्राणिविषयेण ज्ञानविशेषेण मायाविकारेण ईश्वरस्य सर्वज्ञत्वम् । ततः प्राणिविषयः करुणाविकारः, ततो नुन्नमायाविषय एव प्रेरणाविकारः ; ततः कथं प्राणिनां पुमर्थो भवति इति विचारविकारः । ततः सृष्ट्यैव इति विचारफलज्ञानविकारः ततः सृष्टिकामनाविकारः । ततः कथं सृजामि इतीक्षणविकारः ततः किञ्चिदुपचय उच्छूनताविशेषस्थानीयो विकारः ततो गर्भाङ्कुरवदनभिव्यक्तरूपान्नादिशब्दपृथिव्यादिरूपेण विकार इत्यर्थो वार्तिकस्य । ईश्वराव्याकृतप्राणविराड्भूतेन्द्रियादिकं नाविद्योपाश्रयं मुक्त्वा सम्भाव्यं प्रत्यगात्मनि अव्याकृतं जगन्मूलं तदन्तःस्थितोऽन्तर्यामी । आदिशब्दाद्देहोविषयश्च इत्यष्टावस्थाः सुरेश्वराचार्यैरप्युक्ताः । "त्रिपादस्यामृतन्दिवि" इति च "अतो ज्यायांश्च पूरुषः" इति चाम्नातं विकारावर्तिरूपं प्रतिबिम्बेश्वरस्य नाञ्जसम्, मुख्यामृतत्व-व्यापित्वयोस्तत्रासम्भवात् । अतो यस्यायं वादस्थानीयो विश्वप्रपञ्चः, स न प्रतिबिम्बात्मा भवितुमर्हति । बिम्बं च जीवानां साधारणम् "त्रिपादस्य" इति व्यपदेशं नार्हति ।

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।
सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता ॥

इति सुरेश्वराचार्योक्तेश्च । (अनात्मप्रतिपत्तिर्यात्यनुच्छेद्यमानवादो ग्राह्यः ।) अतो मुख्यमेव परं ब्रह्म जीवाविद्यादिसविकारपरम्परा [धिष्ठानत्वेन] स्वीक्रियमाणमीश्वर-नामधेयालम्बनं सदेकरसं च ; तदुक्तम्—एवं ज्ञानमपि ब्रह्मैव ।

ननु लोकवेदयोः कर्तव्यतयोपदिश्यमानं प्रमाणादिव्यापारसाध्यं च ज्ञानं कथं नित्यसिद्धं ब्रह्म,उच्यते, वेदे तावत् आत्मतत्त्वं शब्दैकगोचर इति शाब्दी प्रतिपत्तिर्नो_

त्पत्तौ कर्मविधिवाक्यार्थबोधवदधीतवेदस्य स्वयमुत्पद्यमानत्वाद्विधेया । अन्यथा कर्मविधिवाक्यार्थबोधोत्पत्तावपि विधौ तस्याप्यवबुद्धार्थस्य प्रवर्तकत्वात् तदर्थबोधोत्पत्तौ विध्यन्तरम् इत्यनवस्थाप्रसंगात् ।

ननु यथाध्ययनविधितः कर्मविधीनां पाठस्तथा वेदः कृत्स्नोऽधिगन्तव्य इति बोधोत्पादोऽपि अधिगतिविधितः स्वाध्यायविधेः स्वपरपाठप्रयोजकत्वेनानवस्थापरिहारं वदतोपि सम्भवात्, मैवम्; दृष्टफले सम्भवत्यदृष्टकल्पनानुपपत्तेः "दृष्टो हि तस्यार्थः कर्मावबोधनम्" इति न्यायात् । अध्ययनविधिनार्थाक्षिप्तावबोधविधेरपूर्वार्थत्वाभावेनाविधित्वात् कर्मविधेश्च कर्मबोधोपक्षीणत्वात् न स्वतःतस्यार्थावबोधनं व्यापारः । अथ न बोधमात्रे विधिः, किन्तु निश्चये; सोऽपि शब्दतश्चेत् विधिं विनाऽपि स्यात् । अर्थो ज्ञातव्य इत्युक्तस्तात्पर्येण वैयर्थ्याशङ्कानुदयाद्विवक्षितार्थे बोधोत्पत्तौ विधिः, न; एवमपि एतद्विधेर्विध्यन्तरमन्तरेण विवक्षितार्थत्ववदितरवाक्येष्वपि तत्सम्भवात् । शब्दधर्मतात्पर्यनिर्णायकलिङ्गैरपि विवक्षितार्थबोधोत्पादे विधिवैयर्थ्याच्च । नापि विधानादेव यागादीनामिव ज्ञानस्य पुमर्थसाधनत्वम इति तद्विधिः, ज्ञेयाभिव्यक्तिलक्षणज्ञानफलस्य विधिमन्तरेणापि सम्भवात् प्रवृत्त्यादिफलस्य सिद्धवस्तुन्यसम्भवाच्च । न च माषपरिमितहेम्नः पञ्चमभागात्मककृष्णलानां "सौर्यं चरुन्निर्वपेच्छतकृष्णलमायुष्काम" इति विधेः पाकासम्भवेऽपि चरितार्थत्वाय स्वीक्रियते पुंसा पचतेर्विक्लेदनार्थत्वात्पुरुषसाध्यं जलाग्निसंयोगमात्रम्, तद्वदिह सम्भवति । तत्रादृष्टोत्पादफलकत्वात् ।

अथ भूतत्वाद्ब्रह्मणस्सम्भवत्प्रमाणान्तरगोचरत्वात् तद्वाक्यानां, विधेश्च साध्यैकस्वभावत्वेन तद्वाक्यस्यातथात्वात् । अतो मूलप्रमाणसापेक्षत्वेनानुवादलक्षणाप्रामाण्यपरिहाराय विधिः,

मैवम् वोचः, प्रत्यक्षादेर्भूतार्थस्य तथाविधाप्रामाण्यासम्भवात् । आप्तवाक्यमूलप्रमाणसापेक्षस्याप्युत्पत्तौ मूलप्रमाणप्रमितावेवमयं पुरुषो वेद इति निरपेक्षत्वेन प्रमाण्यस्वीकाराच्च । एतद्वदनाप्तवचसो वक्तृगतप्रमागमकत्वाभावाद्वाक्यार्थे न तद्द्वारेणापि प्रामाण्यम् इत्याप्तानाप्तवाक्ययोर्विशेषः । नियोगस्य च लौकिकव्युत्पत्तिस्थले वेदे वा कल्पितव्युत्पत्तिस्थले प्रवृत्त्यनुमितप्रवर्तकज्ञानविशेषणतया साध्यस्यावश्यमनुमानगोचरत्वेन शब्दैकवेद्यत्वायोगान्न तत्परत्वेऽपि निरपेक्षप्रमाणत्वलाभः । अत एव शाब्दज्ञानविषयपदार्थसंसर्गलक्षणवाक्यार्थसिद्धये विधिः इत्यपास्तम् । न खलु नियोगः साक्षात् तत्र प्रमा-

णम् प्रवर्तकमात्रत्वात् । अन्यथाऽनुपपत्त्या चेत् इतरेऽपि पदार्था न स्वरूपमात्रज्ञप्तये पदैकसमभिव्याहारेणोच्यन्ते । विशिष्टार्थप्रत्यायनप्रयुक्ता हि समभिव्याहृतिरिति । तेन तुल्यत्वान्न विशेषेण नियोगस्यैव संसर्गाक्षेपकत्वम् आकांक्षादिबलेनेतरेषामपि तदाक्षेपकत्वात् । अतो न शाब्दज्ञाने नियोगावकाशः ।

अथ साक्षात्काररूपं संसर्गावगाहकशाब्दज्ञानात्तदावृत्तिक्रियायाश्च विलक्षणं ग्राह्यग्राहकविकल्पातीतवस्त्ववगाहिज्ञानं विधीयते, तदपि न ; तस्य ब्रह्मातिरेकानिरूपणात् । अतिरेके हि ग्राह्यग्राहकविकल्पातीतत्वासम्भवात् प्रमाणत्वेन यथावस्तुत्वे च शाब्दज्ञानस्यापि प्रमाणत्वेन तथात्वान्न वैलक्षण्यम् । शब्दस्य च तत्राप्रमाणत्वे "सर्वमिदं ब्रह्म" इति प्रतिपत्तव्यं इति ज्ञातव्या, प्रमितावुत्पत्तिविधेरेवासिद्धेः । मोक्षकामः प्रज्ञां साक्षात्कारलक्षणां कुर्वीत इति अधिकारविधेर्दूरनिरस्तावकाशता ; यथा अग्निहोत्रं प्रकृत्य "जर्तिलयवाग्वा जुहुयात् गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति, नारण्यान् ; पयसाऽग्निहोत्रं जुहुयात्" इति श्रुत्योक्तम् , तत्र ग्राम्यारण्यपशुहिंसाविधुरत्वाज्जर्तिलगवीधुकहोमः प्रशस्तः, ततोऽपि पयोहोमस्य प्राशस्त्यार्थं अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च इति जर्तिलगवीधुकहोमौ निन्द्येते; अतो जर्तिलादिवाक्यं पयोहोमशेषोऽर्थवादः । एवं द्रष्टव्य इत्यात्मनस्तद्दर्शनस्य वा प्रशंसार्थोऽर्थवाद एव; अतो न विधेरवकाशः ।

अवकाशोऽपि न ज्ञानस्य मोक्षाङ्गत्वेन न तावत् चैत्रस्य........ग्रामप्राप्तस्य क्रमेण निर्गुणब्रह्मप्राप्तिपक्षेऽपि सम्भवात् "इमं मानवमावर्तं नावर्तन्ते" "तेषामिह न पुनरावृत्तिः" इति "इमं" "इह" इति विशेषणात् वर्तमानब्रह्माण्डे मानवावर्ते पुनरावृत्त्यभावपरा वा श्रुतिः । निर्गुणप्रकरणे क्वचिन्मार्गश्रुतेः स्तुत्यर्थत्वाच्च । न च कुसुमरसानां मधुनि, नदीनां समुद्र इव च जीवस्य ब्रह्मणि प्रवेशादविभागलक्षणो मोक्षः साध्यः, अनवयवत्वादुभयोः । तत्राप्यवयविनोऽवयव्यन्तरप्रवेशे विनाशात् परमाणूनां परमाण्वन्तरभावाभावात् ; "तथा विद्वान् नामरूपे औपाधिके विहाय" इत्याद्यविभागश्रुतेश्च भेददृष्टिर्न भवति इत्येतावन्मात्रपरत्वात् । न च औषधादिना मनुष्यस्य व्याघ्राकारपरिणामवत् जीवस्य ब्रह्मत्वेन परिणामः साध्यः । अयमात्मा ब्रह्म इति ब्रह्मैव सन् इति च पूर्वमपि सिद्धत्वात् । अतः परिशेषेणाविद्यानिवृत्तेरेव मोक्षत्वमास्थेयम् ।

विद्यैव (चाद्वयाशान्ताद)चाविद्यास्तमयस्तत्त्वदर्शिभिरुच्यते । अतो न साध्यसाधनभावो ज्ञानमोक्षयोः । तेन वेदे ज्ञानस्य स्वरूपफलालोचनया न कार्यत्वावगमः । एवं

लोकेऽपि उपाधिवशादप्याकाशस्येव जन्मविनाशभेदादिव्यवहारोपपत्तेः श्रुत्यनुसारेण ब्रह्मैव ज्ञानं, तच्च स्वप्रकाशम्, सर्वावभासकस्यान्याधीनप्रकाशानुपपत्तेः "तस्य भासा सर्वमिदं विभाति" "न तत्र सूर्यो भाति" इत्यादिश्रुतेः अनन्याधीनतया प्रकाशमानतैव च स्वप्रकाशता, अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वम् इति वा लक्षणम्।

ननु अस्य परज्ञानेष्वसंभवात् अव्यापनाशङ्कापि स्यात्। स्वाश्रय इति विशेषणे च स्वशब्देनैकतमविवक्षायामुक्तो दोषः, सर्वविवक्षायां च सर्वत्र सर्वस्य तदभावादुक्तो दोषः। एवं प्रकाशमानत्वमपि नानन्याधीनतया। परज्ञान इति पूर्वलक्षणमप्ययुक्तम् इति चेत्; न, उभयथापि स्यात्, स्वाश्रय एवानुव्यवसायमन्तरेण स्फुरणस्य स्वप्रकाशत्वस्य परस्यानुव्यवसायाधीनस्फुरणलक्षणवेद्यत्ववत् विवक्षितत्वात्, तच्च गुरुमतानुसारिणः सङ्गिरन्ते—तद्गुणसंविज्ञानबहुव्रीहौ "गां कुटादिभ्योञ्णिन्ङित्" इत्यादौ कुटादेर्गणस्य कुटादित्वादिविरहेऽपि स्वोपसंग्राहकत्ववत् संवेदनस्य विषयव्यवहारजनकस्य संवेदनान्तरवैधुर्येऽपि स्वव्यवहारोपायसंग्राहकत्वं स्वप्रकाशत्वम् इति। तत्राप्यनन्याधीनतया प्रकाशमानता न व्यभिचरति, किन्तु सविषयत्वमन्तर्भाव्य सा बौद्धानां........वस्त्व कर्मत्वम्। न च विषयाकारशून्यं ज्ञानं नास्त्येव निराकारां बुद्धिमनुमिमीमहे इति कर्ममीमांसकैः स्वीकारात्।

"अर्थेनैव विशेषो हि निराकारतया धियाम्"

इति च। ईश्वरवादिनश्च तदीयज्ञानस्याजन्यत्वेन विषयलिङ्गाद्यर्पिताकाराभावात् सौगतैरपि मुक्तौ विशुद्धज्ञानाभिधानात्; आर्हतैः साङ्ख्यैश्च आत्मनो निर्विषयज्ञानविग्रहत्वमङ्गीकृतमेव।

प्रयोगश्च—अनुभूतिः स्वयम्प्रकाशा अनुभूतित्वात् व्यतिरेकेण घटवत्। न च अप्रसिद्धविशेषणः पक्षः, घटादिप्रकाशस्यान्यनिबन्धनत्वप्रसिद्धेः अत्र च स्वशब्देन तत्प्रतिषेधात् प्रतियोगिसिद्धयैव च तदभावप्रसिद्ध्युपपत्तेः।

ननु अप्रसिद्धाभावस्य आत्मवत् तत्प्रतियोगित्वस्याप्यप्रसिद्धत्वान्नैवम्। अथ वेद्यत्वम् किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वात् शौक्ल्यवत् इति धर्मिमात्रनिष्ठतया तदभावप्रसिद्धेः नाप्रसिद्धविशेषणता। केवलव्यतिरेकिणश्चानुभूतिलक्षणधर्मिविशेषनिष्ठतया तत्साधनात्रानवकाशः, तत्र, किञ्चिच्छब्देन वेदनीयस्य[ ग्रहणे ]वेद्यत्वात्यन्ताभावाधि-

करणत्वप्रतिज्ञाविरोधात् । वेद्यत्वं फलव्याप्यत्वं चेत्, नित्यानुमेयादिनिष्ठात्यन्ताभाव-प्रतियोगित्वेन तस्य सिद्धसाधनता, तार्किकं प्रत्यप्रसिद्धविशेष्यता च फलासिद्धेः ।

अथ यदनभ्युपगमे असमीहितप्रसक्तिः तत्सामान्यतो मानयोग्यम् स्वयंप्रकाश-त्वानभ्युपगमे च ज्ञानस्य घटाद्यविशेषात् जगदान्ध्यादसमीहितप्रसक्तेर्नाप्रसिद्धविशेषण-त्वम्, **तदयुक्तम्**; निलीनज्ञानेनापि स्वमहिम्ना विषये प्रकाशाङ्गीकारात् ।

अथ प्रकाशमानमेव ज्ञानं विषयप्रकाशकम्, अव्यवधानेन स्वविषयान्ध्यविरोधि-त्वात् आलोकवत् । स्वापरोक्ष्यं ज्ञानान्तरायत्तं चेत् तस्य तस्याप्येवम् इत्यनवस्था इति तुल्यत्वात् । **अभद्रमेतत्** । भवतोऽपि प्रमाणत्वेन सम्मतम् चक्षुरादिजन्यान्तःकरणवृत्ति-विशेषात्मकं क्रोडीकृतचैतन्यमपि न स्वप्रकाशमिष्टं भानम्, अपरथा चिज्जडविभागो न स्यात् । अतस्तस्य सत्ता प्रमाणान्तरमन्तरेणैव चेद् घटादेरपि तथा स्यात् इति प्रमाण-सङ्ग्रहो व्यर्थः । न च स्वप्रकाशं साक्षिज्ञानं तत्र प्रमाणम् येनानवस्था न स्यात् प्रमाणस्याज्ञानबाधकत्वात्, तस्य च तत्साधकत्वात् । अतो बलात् प्रमाणान्तरापत्तौ कुतो नानवस्था इति । अत एव अयं घट एतद्घटान्यत्वे सति अनुभाव्यत्वानधिकरण-त्वान्यः द्रव्यत्वात् घटवत् इति **महाविद्या**प्रयोगात् विशेषणप्रसिद्धिः इत्य**पास्यं** प्रथमप्रयोगदोषात्; अतो नायं प्रयोगः स्वप्रकाशत्वसाधकः ।

**अत्र वदामः—**

"यत्साक्षादपरोक्षाद्ब्रह्म" इत्यागमेन ज्ञानान्तरमन्तरेणापरोक्षत्वप्रतिपादनात् ब्रह्म तावत् स्वप्रकाशम् गुणभूतज्ञानादपरोक्षत्वे साक्षात्पदानुपपत्तेः । अनुमानं चागमस्यैव युक्तिमात्रमनुकूलम् । न च अप्रसिद्धविशेषणता, वेद्यत्वे प्रकाशप्रतिषेधे ज्ञानेच्छादेरि-वाष्टद्रव्याश्रितत्वनिषेधेऽभीष्टस्यार्थात् प्रसिद्धिसम्भवात् विप्रतिपत्तितः प्रसिद्धेश्च । न च अनवस्थासाम्यम्, अस्मन्मते ज्ञानं नामान्तःकरणवृत्त्यभिव्यक्तं चैतन्यम्; ततो व्यञ्जकवृत्तेर्जडत्वेऽपि तस्य तथाविधप्रमाणान्तरनिरपेक्षतया स्फुरतः स्वप्रकाशत्वे स्थिते कुतोऽनवस्थावतारः । ततो नानुमानमप्यसाधकम् । अतः श्रुतिन्यायसिद्धं स्वप्रकाश-ज्ञानशरीरत्वं ब्रह्मणः —"न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं-मन्वीथाः न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तम्" इति स्वप्रकाशाद्वितीयसदात्मनिर्धारणात्, "अयमात्मा ब्रह्म सर्वानुभूः" इति तस्य ब्रह्मत्वेन

कीर्तनाच्च सिद्धं ब्रह्मणः स्वप्रकाशज्ञानविग्रहत्वम् । द्रव्यबोधरूप आत्मा, तस्य बोधांशेन कर्मत्वम् इति पक्षे द्रव्यांशस्य जडसाधारण्यादनात्मत्वे बोधांशे कर्मकर्तृभावविरोधात् बलादापतति स्वप्रभत्वम् इति ।

एवमानन्दोऽपि ब्रह्म "आनन्दो ब्रह्म" इति श्रुतेः "आनन्दं ब्रह्मणो विद्वान्" इति भेदश्रुतेः गुणप्रयुक्तं सामानाधिकरण्यम् इति चेत्, मैवम्; "न बिभेति कुतश्चनेति" तद्विज्ञानादभयश्रुतिविरोधात् । "द्वितीयाद्वै भयं भवति" "उदरमन्तरं कुरुते अथ तस्य भयं भवति" "मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" इति च भेददर्शिनां भयश्रवणात् । अत उपचारतो भेदनिर्देशो बहुश्रुत्यनुसारेण, ततो न "आनन्दो ब्रह्म" इति गौणं सामानाधिकरण्यम्, "एकं सद् विप्रा बहुधा वदन्ति" "प्रज्ञानस्य नामधेयानि प्रज्ञानेत्रो लोकः" "अदृष्टं द्रष्टृ अश्रुतं श्रोतृ" "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इत्यादिश्रुतिभ्यः सत्यं ज्ञानमानन्दश्च ब्रह्मण एव स्वरूपं सकलभूतेषु कल्पितावच्छेदं विपरीतमिवाभासते ।

अनन्तत्वं च प्रपञ्चेन मैत्रोपनिषदि श्रूयते—"ब्रह्म ह वा इदम्र आसीदेकोऽनन्त प्रागनन्तो दक्षिणतोऽनन्तः प्रतीच्यनन्त उदीच्यनन्त ऊर्ध्वं चान्यां च सर्वतोऽनन्तो न ह्यस्य प्रागादिदिशः कल्प्यन्त" इत्यादिना स्वशब्देन देशावच्छेदस्य इदमेक शब्दाभ्यां वस्तुकालाभ्यामवच्छेदस्य च प्रतिषेधात् "अनन्तं ब्रह्म" इति "सत्यं ज्ञानमनन्तं ब्रह्म" इति आनन्त्यं प्रतिज्ञाय तत्सिद्धये "यतो वा" इत्यादिना तत्र समारोपरूपः प्रपञ्च उक्तः । प्रतिबिम्बेश्वरस्यापि तदन्तर्गतस्य न परमकारणभावः एकविज्ञानेन सर्वविज्ञानमुक्तोपसृप्यत्वाद्यसम्भवात् । अत एव "जन्माद्यस्य यतः" इति न तस्य सृष्टिकार्येण कारणतया लक्ष्यत्वम् । बिम्ब एव निर्विक्षेपसविशेषमायोपाधित्वेन जीवनां लय उदयश्च तत इत्यङ्गीकारात् ।

बिम्बब्रह्मणि मायारोपनिषेधे च सर्वपरमानन्त्यं प्रमाणीक्रियते "तमेव धीरो विज्ञाय" इत्यवधारणेन अन्यस्य "यस्मिन् पञ्चपञ्च जना आकाशश्च प्रतिष्ठित" इति प्रसक्तस्य ज्ञेयत्वप्रतिषेधेन मायामयत्वावगमाच्चायमर्थोऽवगम्यते । न चात्र ज्ञानं विधीयते न प्रतिषेध्यते किञ्चित् अवधारणश्रुतिवैयर्थ्यात् । अन्यनिषेधे विधौ च प्रतिपाद्यमाने वाक्यं भिद्येत "नानुध्यायाद् बहून् शब्दान् तत्प्रकाश्यानर्थान्" इति चाङ्गवाक्येऽन्यज्ञेयत्वप्रतिषेधात् प्रधानवाक्येऽपि प्रतिषेध एव प्रतिपाद्यो गम्यते । परैरपि

ब्रह्मणो देशतः कालतश्च अनवच्छेद इष्यते । न च ईदृग्वस्तु वस्तुतोऽवच्छेदमर्हति । न च आकाशादेर्देशकालाभ्यामनवच्छेदः युगपत् सर्वमूर्तसंयोगितामात्रेण विभुत्वाभिधानात् । मूर्तदेशाव्यापनात् । व्यापने वा मूर्तिस्वरूपतद्रूपादिवत् संयोगित्वाभिधानमनुपपन्नम् । उत्पत्तिप्रलयश्रुत्या च कालावच्छेदोऽपि तस्य । अणूनाञ्च "तथाऽक्षरात्सम्भवतीह विश्वम् " इति श्रुतेः तस्य त्रिविधोऽप्यवच्छेदो मायामरीच्युदकस्वप्नगन्धर्वनगरसवितृसुष्यादिसहोदर इत्यखण्डत्वमनन्तत्वं ब्रह्मणः । "सत्यं ज्ञानम् " इत्यत्र " आनन्दादयः प्रधानस्य " इति सूत्रात् शाखान्तरीयानन्दोपसंहारेण यथोक्तलक्षणमविरुद्धम् । " आनन्दादयः प्रधानस्य ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः । सर्वत्र हि तदेवैकं प्रधानं विशेष्यं ब्रह्म न भिद्यत " इति भाष्याच्च ।

न चैवम् सगुणब्रह्मविशेषणानामपि अपुनरुक्तानां तत्र तत्रोपसंहारप्रसङ्गेन निर्गुणविद्यावत्सगुणविद्याया अप्येकविधत्वेनैक्यप्रसङ्ग इति शङ्कनीयम् ; " नाम ब्रह्मेत्युपासीत " इत्यादिप्रतीकोपासनानां " त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि " इत्याद्यहंग्रहोपासनानाञ्चाधिष्ठानविग्रहाप्रत्यभिज्ञातैकदेशगुणसमुदायफलभेदाद्विद्याभेदे स्थिते गुणोपसंहाराप्रसङ्गात् । इति शब्दशिरस्कस्य ब्रह्मशब्दस्य ब्रह्मदृष्टिमात्रपरत्वात् । ब्रह्मप्रत्ययस्योपासनकर्मतया प्राधान्यानाक्षेपादन्यधियोऽन्यत्र क्षेपः प्रकृतलक्षणपुरस्सरः सगुणस्य हि ब्रह्मणस्तत्तद्धिरण्मयादिविकारावस्थाभेदेन भेदात् । **अप्रतीकालम्बनान्** अहंग्रहोपासनारतान् वैद्युतं स्थानमर्चिरादिमार्गेण गतान् अमानवः पुरुषः सत्यलोकं नयति, न प्रतीकालम्बनान् तद्गतानपि इति शास्त्रे फलभेदव्यवस्थापनाच्च । निर्गुणविद्याविषयस्य निर्विशेषस्य ब्रह्मणस्तारतम्याभावादेव तद्विद्याफलस्य तदात्मसंप्रतिपत्तिरूपस्य न भेदगन्धोऽप्युपपद्यते " ब्रह्मैव सन् ब्रह्माप्येति " ब्रह्म वेद ब्रह्मैव भवति " इत्यादिश्रुतेः । आनन्दादिविधिविशेषणवत्स्थूलादिनिषेधविशेषणानामप्यनिषेधविशेषणस्थले **अक्षरधियान्त्ववरोध** इति सूत्रकृतोपसंहारस्य वर्णितत्वात् । सर्वत्राखण्डैकरसब्रह्मतत्त्वप्रमितिर्बाधयात् इति ।

> कालादिप्रविभक्तम् सद्यद्ब्रह्माभूदविद्यया ।
> तत्प्रत्यक्तत्त्वसम्बोधाद्ध्वस्ते ध्वान्तेऽन्तरात्मनि ।
> आत्मानमेव तद्ब्रह्म ब्रह्मैवास्मीत्यवेच्छुतेः " । ( बृ. वा. 1. 13. 1413)

इति । आविद्यककालादिविभागस्याविद्योच्छेदादुच्छित्तावात्मान्वितत्वेन व्यतिरेकेण अभावात्मना वा परिशेषासम्भवात् । " यस्य स्यादद्धा न विचिकित्साऽस्ति " इति

श्रुतेः अद्धाशब्दवाच्यासन्दिग्धवाक्यार्थसाक्षात्कारेणाखण्डैकरसावशेष इति वार्तिकाच्च सर्वमवदातम् ॥

अथ कथं वाक्यस्याखण्डब्रह्मार्थत्वम् अपर्यायपदानां घटपटादिपदवदेकरसार्थत्वानुपपत्तेः । ननु क इत्थमाचक्षीत ? न तावत् वैयाकरणः, तेन स्वयमेव प्रातिपदिकप्रथमाविभक्त्योरेकरसार्थवृत्तिताभ्युपगमात् । नापि सौगतेन इत्थं पर्यनुयुज्यते, "विज्ञानं भिन्नम्" इति वाक्ये विज्ञानभिन्नशब्दयोरेकरसार्थवृत्तिताभ्युपगमात् । नो खलु विज्ञानादन्यस्तद्भेदो, येन भिन्नपदस्यार्थातिरेको वर्ण्येत । अत एव न गुरुमतानुसारिणोऽप्येवं पर्यनुयोगावकाशः, समानन्यायत्वात् कणभक्षाचरणकौमारिलपक्षपातिनोऽपि स्वरूपभेदवादिनः प्रागुक्तीतन्यायेन शिक्षणीयाः । धर्मभेदवादिनस्तु "भेदो भिन्न" इत्युदाहरणेन । न खलु भेदस्य भेदान्तरमस्ति, येन भिन्नपदस्यार्थातिरेको वर्ण्येत; तस्मात् सर्वतन्त्रसिद्धान्तोऽयमखण्डवाक्यार्थ इति ।

अत्र ब्रूमः :— वाक्यं तावदनेकपदात्मकश्शब्दः अविकृतं सुप्तिङन्तं पदम् इति पदलक्षणं च विदधता प्रातिपदिकप्रथमाविभक्त्योर्मिलितयोः पदत्वमुक्तम् । अतः "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इति यद्यपि प्रातिपदिकप्रथमाविभक्त्योरेकार्थत्वमुक्तम्, तथाऽपि पदानामखण्डार्थत्वे नोदाहरणम् । शाब्दप्रतीत्यजन्यशाब्दप्रतीतिजनकं वर्णात्मकं पदं, शाब्दपदार्थधीजन्यशाब्दवाक्यार्थधीजनकं वाक्यं; शब्दप्रतीत्यजन्येति हेयम्, शाब्दप्रतीत्यजन्यधीजनकमक्षादि अतः **शाब्दप्रतीतिजनकेति** । पदार्थधीजनकं अदृष्टादि अतः **वर्णेति** । अत्रापि लक्षणे प्रातिपदिकौघस्य वाक्यत्वाभावाद्विभक्तिरन्तरा न शक्यते हातुम् । "विज्ञानं भिन्नम्" इत्यत्र च पृथक् भेदधर्माभावेऽपि "विज्ञानम्" इति यथाप्रसिद्धानुवादेन व्यक्तयो नीलपीताद्याकारा बहव इति विधीयते भिन्नम् इति । तेन सामान्यविशेषयोः शब्दद्वयेन प्रतिभानान्नोदाहृतिलाभः द्वयोः । स्वलक्षणमात्रार्थत्वे च पर्यायत्वेनानुदाहरणत्वम् । अतो नेदमप्युदाहरणम् । अन्येषामपि स्वरूपभेदवादिनां अनयैव दिशोदाहरणं नेतव्यम् । "भिन्नो भेद" इत्यत्र च भेदस्य भेदान्तरविधानाभावेऽपि भेदो वस्तुनो धर्म इति सम्बन्धो विधीयते प्रतिवस्त्वन्य इति वा । तेनैतदप्यनुदाहरणम् । तस्मान्न सर्वतन्त्रसिद्धान्तोऽयमखण्डवाक्यार्थ इति ।

यच्चोच्यते— अपर्यायशब्दानां संसर्गागोचरप्रमादिजनकत्वं एकप्रातिपदिकार्थमात्रपर्यवसायित्वम् वा अखण्डार्थत्वम् इति; नैवम्; यत आद्यलक्षणे तावत् अनेकवि-

शेषणव्यावृत्तभेदसंज्ञकविशिष्टपदार्थात्मकवाक्यार्थप्रमाजनकापर्यायशब्देषु इति व्यापन्नम्। अन्यथा भेदसंसर्गवाक्यार्थयोर्भेदाभावप्रसङ्गात् सर्वथा संसर्गागोचरप्रमाजनकत्वं चेत् विवक्षितम्, तर्ह्यप्राप्तयोः प्राप्तिःसंयोगो, नित्यसंबन्धः समवाय इत्यादि संसर्गलक्षणेष्वव्याप्तिपरिहारः स्वयंकृतो न स्यात्। द्वितीयेऽपि लक्षणया एकप्रातिपदिकार्थमात्रपरत्वं वक्तव्यम्—

"वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते॥"

मानान्तरविरोध इत्यादि वा लक्षणालक्षणम्। पदानां पदार्थस्वरूपमात्रपरत्वे वाक्यप्रामाण्यानुपपत्त्याक्षिप्ता प्रतिपत्तिर्लक्षणा इति च त्रिविधाऽपि संसृष्टार्थप्रमैव लक्षणया न अखण्डार्थप्रमा इत्यसम्भवदोषः।

**यच्चोक्तम्** 'विश्वे देवा देवता अस्या' इत्यस्मिन्नर्थे "सास्य देवता" इति सूत्रेणाण्प्रत्ययविधानात् "वैश्वदेवी" इत्यण्प्रत्ययान्तपदेन आमिक्षाया विश्वदेवसम्बन्धः केवलःसन्निधानात् प्रतिपाद्यते, "दण्डी" इति 'इनि' प्रत्ययान्तेन सन्निहितदेवदत्तसंबन्धमात्रं दण्डस्य, "कमण्डलुमान्" इति 'मतुप्' प्रत्ययेन कमण्डलुसम्बन्धमात्रम्। चित्रा गावोऽस्य इति 'चित्रगुः' इति बहुव्रीहिसमासेन देवदत्तस्य चित्रगोसम्बन्धमात्रं विधेयम् इत्यपर्यायपदानामखण्डार्थवृत्तितायां सुलभमुदाहरणम् इति।

**तदपि**—उपकार्यत्वोपकारकत्वयोर्विशेषणत्वविशेष्यत्वयोर्वा परस्परपरिहारेण स्थितिभाजोरखण्डत्वानुपपत्त्या पराकर्तव्यं तयोरेव विवक्षितसम्बन्धात्मकत्वात्। ततो न सत्यज्ञानाद्यवान्तरवाक्यस्याखण्डार्थत्वम्। एवं महावाक्यस्यापि। अथ "सोऽयम्" इति प्रत्यभिज्ञावाक्ये तदेतद्देशकालविशिष्टयोरैक्यप्रतिपादनायोगात् अवश्यं लक्षणायां पूर्वदेशकालोपलक्षितस्य एतद्देशकालविशिष्टेनाभेदप्रतिपादनस्य केवलविशिष्टयोरभेदासम्भवेनासम्भवात्। तथा सति वर्तमानकालविशिष्टस्य पूर्वमपि सद्भावप्रसङ्गात् वर्तमानकालोऽपि पूर्वं प्रसज्येत। साक्षादेवाभेदप्रतिपादने सम्भवति पूर्वकालाद्युपलक्षिते वर्तमानकालादिवैशिष्ट्यधर्मप्रतिपादनेनार्थादभेदस्सिद्ध्यति इति वक्तुमशक्यत्वाच्च साक्षाद्बुभुत्सितार्थप्रतिपादनप्रयोजनवत्तया चोभयपदलक्षणस्वीकारस्यागौरवात्। तेनाखण्डार्थत्वे महावाक्यस्यापि तल्लाभ इति,

**नैतच्चतुरश्रम्** ; अभिज्ञाद्वयेन देवदत्तैक्ये सिद्धे प्रत्यभिज्ञाया न विषयम् न मूलवाक्यस्य वाऽवस्यामः । न च भेदभ्रमाभावो विषयः, तद्वाचकपदाभावात् ऐक्य-विधाननान्तरीयकतया च तत्सिद्धौ न वाक्यविषयत्वम् । "अप्राप्ते हि शास्त्रमर्थवत्," "यश्च अर्थादर्थो न स चोदनार्थ" इति च न्यायात् । पूर्वापरकालविशिष्टै-कगोचरं प्रत्यक्षं, तदुपलक्षितैकगोचरत्वं वाक्यस्यापि । किं वा प्रत्यभिज्ञानं चेद्वाक्यस्य विशिष्टार्थमूलानुरोधात् प्रत्यक्षस्य निष्टलक्षणावृत्तिप्रसङ्गः । लक्षणया तत्प्रतिपादने च भेदभ्रमाभाववैशिष्ट्यमेव वाक्यार्थः स्यात् ; ततो नाखण्डार्थत्वम् । एवं महावाक्य-स्यापि ।

किञ्च अहंपदलक्षितस्य ब्रह्मपदलक्ष्याभेदात्

"श्रुत्यादिप्रतिबद्धं सद्विशेषार्थं भवेत्पदम्"

इति सुरेश्वराचार्यवचनाच्च न पदान्तरस्यावकाश इति न वाक्यार्थैक्यम् । विरुद्धांशव्या-वृत्तेश्चार्थिकत्वान्न व्यावर्त्यार्थभेदात् पदान्तरसार्थक्यम् । अथ ब्रह्मात्मत्वोपदेशमन्तरेण विरोधास्फुरणान्न लक्षणैव प्रवर्तते ; तेन न व्यर्थं ब्रह्मपदम् "सुखमहमस्वाप्सम्" इत्यत्र सुप्तावहंकाराभावात् 'अहम्' शब्दस्यात्मनि लक्षणया प्रयोगाङ्गीकारात्, मैवम् ; पदद्वयप्रयोगेऽपि लक्षितयोर्भेदे "नीलमुत्पलम्" इत्यादिवत् गौणसामानाधिकरण्य-प्रसङ्गात् । अभेदे पूर्वोक्तन्यायेन न वाक्यलाभ इति वाक्यस्याखण्डार्थत्वं मनोरथ-मात्रम् इति ।

**अत्र समाधिः** :—यथा खलु

"अथातो यज्ञं व्याख्यास्यामो द्रव्यं देवता त्याग"

इति त्रिस्कन्धमुक्त्वा "तदङ्गमितरत्" इति ब्रह्मविद्याकर्मकाण्डस्य यज्ञमात्रपर्यवसानमुक्तम् : तथैव "अथातो ब्रह्मविद्यां व्याख्यास्यामो "विज्ञानमानन्दं ब्रह्म" "योऽयं विज्ञानमय, प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" अहं ब्रह्मास्मि" इति त्रिस्कन्धमुक्त्वा, "तदङ्गमितरद्" इति ब्रह्मविद्यामात्रपर्यवसानमुपनिषदोऽप्यनुकरणीयम् । तावत् "कतम आत्मा इति योयं विज्ञानमयं प्राणेषु हृद्यन्तर्ज्योतिःपुरुष" इति प्राणादिव्यतिरेकं मध्ये स्वप्नादिराहित्य-श्चोक्त्वा, अन्ते शोधितं त्वंपदार्थम् "योऽयं विज्ञानमय" इत्यादिवाक्येनानूद्य, "स वा एष महानज आत्मा" इति तत्पदार्थैक्यप्रतिपादनदर्शनात् । "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्वर्तते स ज्योतिः पुरुषः स्वप्रकाशः परमात्मा" इति पृथक् परमात्मभाव-

विधानात्। समग्रस्य "योऽयम्" इत्यादिवाक्यस्यानुवादत्वं पूर्वविरुद्धं स्यात्। तेनावान्तरवाक्यमेवैतत् "स्वयंज्योतिः आत्मनैव ज्योतिषा" इति चोक्ते कतमो ज्योतीरूप आत्मा इति प्रश्ने "ज्योतीरूप" इति चोत्तरं साधु यज्ञब्रह्मणोरेव वेदार्थत्वात्। अत एव तयोरेव जैमिनिबादरायणाभ्यां जिज्ञास्यत्वेनोपक्षेपः। यथा च सानुबन्धयागपरिच्छेदाय सिद्धोपदेशः, तथा ब्रह्माद्वैतपरिच्छेदाय श्रवणादिसाध्यनिर्देशः साक्षात्कारोपकारकत्वात्। तदेवं सकलोपनिषदेकं वाक्यम् ब्रह्माद्वैतपरम्। न च अपर्यायशब्दानां तदर्थानां च भिन्नार्थत्वं च शक्यमनुमातुम् "प्रज्ञानस्य नामधेयानि" इति श्रुतेः घटपटादिशब्दानामपि ब्रह्मकाण्डत्वेन दृष्टान्ताभावात्। उक्तश्च—

"सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते।
प्रपञ्चस्य प्रविलयश्शब्देन प्रतिपाद्यते॥

प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः।
मानान्तरस्येति मतमाम्नायैकनिबन्धनम्॥" ब्र. सि. 4. 3, 4

इति। "वाचारम्भणं विकारो नामधेयम्" इति विशेषरूपाणामनृतत्वाभिधानात्। न च "योऽयं विज्ञानमयः" इत्यत्र विज्ञप्तिर्विज्ञानं ब्रह्म, तद्विकारो जीवो विज्ञानमयः, सोऽप्येवं मिथ्या इति शङ्कनीयम्; 'पृथिवीमय' इत्यादि प्रायार्थमयट्प्राये पाठात्। अतो बुद्धिप्रायो विज्ञानमयः :—

"यावान् ल्युडर्थस्तेनायं तदविद्यैकहेतुकः।
अविशिष्टो मतो यस्मात्तदाभासैकवर्त्मना॥" बृ. वा. 4. 3. 315

ल्युडर्थो विज्ञानम्; असौ चिदाभासेनाविशिष्टः, चिदाभासोऽपि तेनाविशिष्टस्तत्प्राय इति वार्तिकाच्च। सत्त्वेनानुस्यूतत्वाच्च तत्तदाकारोपसंहारे च सन्मात्रावशेषात् "सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठत" इत्यभियुक्तवचनाच्च अखण्डार्थत्वोपपत्तौ विपरीतसाधनस्याभासत्वाच्च।

"प्रकृष्टप्रकाशः सविता" इत्यपर्यायशब्दैरनेकान्ताच्च सर्वं तावद्वाक्यमपूर्वार्थविशेषप्रमापकत्वेनैव प्रमाणम्। यथा—कनकाचले जम्बूवृक्षस्य महागजप्रमाणानि फलानि" इति जम्बूसामान्यानुवादेन महागजप्रमाणफलवत्त्वमपूर्वं प्रमापयद्वचः, एव-

मत्रापि ; तच्च प्रकृष्टादिवाक्यस्यापूर्वप्रमापकत्वमखण्डार्थत्वेनैव, प्रकर्षादिवैशिष्ट्यस्य लोकसिद्धत्वात् युक्तत्वाच्चाखण्डार्थत्वस्य । तथा हि—यादृशस्य सवितुः प्रकर्षगुणाश्रयत्वम् तादृशस्यैव प्रकृष्टशब्दवाच्यत्वसम्भवे तदतिरिक्तप्रकर्षगुणकल्पनायां प्रमाणाभावात् । न च प्रकर्षो गुणः ' प्रकृष्टो गन्धोऽम्बुगतिश्च ' इति गुणादावपि व्यपदेशात् । नापि प्रकाशो गुणः, मण्डलावयवेभ्योऽन्यत्र तदभावप्रसङ्गात् । मध्ये निबिडावयवारब्धश्चन्द्र इव सकलं प्रभाद्रव्यमेव प्रकाशशब्दार्थः । अतो निबिडविरलावयवावस्थाभेदमात्रेण " सवितुः प्रकाश " इति भेदोपचारः । तेन प्रकर्षप्रकाशौ नांशुमालिनि विद्येते, व्यवच्छेद्ययोश्च निकर्षशार्वरयोश्च भेदान्न पदान्तरवैयर्थ्याशङ्का, प्रकृष्टप्रकाशशब्दाभ्यां स्ववाच्यसामान्यपरित्यागेन सवितृप्रातिपदिकार्थमात्रस्य विशेषरूपस्यापूर्वस्य पदार्थमात्रस्य सामान्यात्मकस्य प्रसिद्धत्वेन तत्परत्वे वाक्यप्रामाण्यानुपपत्तेर्लक्षणया अखण्डार्थत्वं वाक्यार्थस्य सुस्थम् । सामान्याभिधानेनार्थान्निकर्षादिव्यवच्छेदात् न तद्व्यावृत्तेर्वाक्यार्थान्तर्गमोऽपि । अतः सिद्धमनैकान्तिकत्वम् ।

एवं च सन्मात्रतया लोकतो वेदतश्च कारणतया प्रसिद्धस्य ब्रह्मणो विज्ञानानन्दादिः विशेषरूपं सामान्यवाचिभिर्विज्ञानादिपदैस्तद्विधानेनार्थात् जडत्वादिव्यवच्छेदात् ।

" प्रतिपद्य पदार्थं हि विरोधात्तद्विरोधिनः ।
पश्चादभावं जानाति वध्यघातकवत्पदात् ॥ "

इति च आचार्यैरुक्तत्वात् लक्षणयाऽपूर्वं प्रमीयते । न खलु स्वप्रकाशभावरूपानन्दात् ज्ञानं सत्त्वं वा पृथक् येन लक्षणया संसर्गः प्रमीयेत । आनन्दश्च ब्रह्मैव इत्यवादिष्म, **प्रयोजनकौमुद्यां** च श्रुतियुक्तिभ्यामेतत् प्रायः शिष्टम् । ततो नात्र चित्रवदनेकरूपत्वाशङ्कापि, कल्पितब्राह्मण्यविधानेन मिथ्याशङ्किताब्राह्मण्यव्यावृत्तिवत्कल्पितसत्यत्वादिसामान्यविधानात् मिथ्याशङ्कितानृतजडत्वादिव्यावृत्त्युपपत्तेश्च ।

" स एष संप्रसादोऽस्माच्छरीरात्समुत्थाय विविक्तं त्वंपदार्थं ज्ञात्वा स्वेन रूपेण ब्रह्मणाऽभिनिष्पद्यते, तत्साक्षात्कारवान् ततो मायावरणभङ्गेन परञ्ज्योतिर्ब्रह्मस्वरूपमुपसंपद्यते ।" उपनिष्पद्य इति ' मुखं व्यादाय स्वपिति ' इतिवत् इत्यवस्थावतो जीवस्य क्रमेण वाक्यार्थज्ञानोक्तेः । एकैकमपि पदं " विज्ञानम् " इत्यादि श्रुत्यादिप्रतिबन्धविरोधार्थं सद्विज्ञानाद्यंशविषयाज्ञानावयवोच्छेदाय प्रभवति । वाक्यं च सामग्र्यांशविषय-

मज्ञानं तदंशिबोधेन विधुनोति। एवमवान्तरवाक्याभ्यां ब्रह्माहंपदार्थयोः प्रत्येकमज्ञान-निवृत्तौ तयोरवच्छेदविभ्रमोपादानमविद्या महावाक्यकृतैक्यबोधेन प्रविलीयते। "सिद्धन्तु निवर्तकत्वात्" इति भेदनिवर्तकत्वमात्रेण च तत्त्वमादेः प्रामाण्यं सिद्धम् इत्यर्थो ग्राह्यः अज्ञातप्रमाजनकत्वप्रमाणलक्षणस्यात्राव्याप्तिप्रसङ्गात्। किन्त्वेकैकपदात् स्फुरदप्यैक्यं न भेदप्रत्यनीकाकारेण स्फुरति इति तदाकारप्रमाजनकत्वेनैव प्रामाण्यं सिद्धम् इत्यर्थो ग्राह्यः। यद्यपि—"को ह्येवान्यात् कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्" "सैषानन्दस्य मीमांसा" "आनन्दाद्ध्येव" "आनन्दो ब्रह्म" इति च ब्रह्माहम्पदार्थयोरानन्दैकरसत्वेन स्वरूपतो विशेषो नावधार्यते, तथाऽपि यथा साङ्ख्यानां विज्ञानैकरसत्वेऽपि पुंसां प्रतिदेहं वास्तवो भेदः, तथाऽनयोरपि इति मन्दाशङ्का मा भूत् इति श्रुतिर्वत्सलतयोपदिशति—"अहं ब्रह्मास्मि" इति सामानाधिकरण्येन।

"तदाहुः यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते"

इति मनुष्यप्रक्रमानुसारेण "ब्रह्म वा इदमग्र आसीत्" "किमुतद् ब्रह्मावेत्" इत्यत्र च ब्रह्मशब्देनाधिकारी ब्राह्मणः परं ब्रह्मैव मायाप्रतिबिम्बितमभिधीयते, न बिम्बकल्पम्; येन तस्य विद्यया अविद्याविनाशायोग आशङ्क्येत। यथा च देवदत्तस्वरूपवेषादिपरावृत्तिनिमित्तो भेदविभ्रमः स्वरूपे स्फुरत्यपि प्रत्यक्षेणाप्तोपदेशाद्विना न निवर्तते, तथा जीवादभिन्नब्रह्मणोऽपि अहम्पदेन लक्षणया स्वरूपे स्फुरत्यपि जगज्जनकत्वादिनिमित्तो भेदविभ्रमो "अहम् ब्रह्मास्मि" इत्युपदेशमन्तरेण भेदविरोध्याकारप्रमाहेतुं न नाशमायाति इति न पदान्तरवैयर्थ्यम्।

ननु "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति एकविज्ञानात् सर्वविज्ञान-प्रतिज्ञादृष्टान्तश्रुतिभ्यां ब्रह्मणो जगत्प्रकृतित्वनिरूपणात् ब्रह्मपदार्थविज्ञाने विज्ञातव्यानवशेषात् 'अहम्' पदं व्यर्थम् इति चेत्, न व्यर्थम्; द्वयोरपि विच्छेदभ्रमनिमित्तप्रावादुकविप्रतिपत्तिद्वैराश्यात्। जीवव्यतिरिक्तप्रपञ्चस्य ब्रह्मविवर्तत्वेन ब्रह्मतावन्मात्रत्वात् तद्विज्ञानेन तद्विज्ञानसम्भवेऽपि न जीवविज्ञानसम्भव इति "तत्त्वमसि" इति 'त्वम्' पदम्। तद्वत् 'अहम्' पदमपि विच्छेदभ्रमनिरासफलत्वात्। यत्र च पदार्थः प्रमितुः स्यात्, तत्र स इतरपदार्थविशिष्टः प्रतिपाद्यः यस्त्वज्ञातः स नान्यैः शक्यो विशिष्टः प्रतिपादयितुम् इति स एव वाक्येन प्रमेयः। प्रमिते च तस्मिन् वाक्यसमाप्तेर्न विशिष्टपरत्वम्। एवमादौ।

"यद्वृत्तयोगः प्राथम्यम् इत्युद्देश्यस्य लक्षणम्" ।

इति **भट्टपादैः** उक्तत्वात् प्रथमं निर्दिष्टतत्पदार्थस्योद्देश्यत्वम् इत्यपि नाशङ्कनीयम्; "यदाग्नेयोऽष्टाकपालः" इतिवदपूर्वार्थस्यापवादकत्वेन तद् इत्यस्य विधेयपरत्वसम्भवात्। न च वाच्यम् उत तमादेशमप्राक्ष्यः इत्युपक्रमात् गर्वातिरेककीर्तनाच्चादेशनिरूपणपूर्वकं तत् तस्मादज्ञोऽसि गर्वातिरेकं वहंस्त्वमभद्रोऽसि इत्युपहासमात्रमेतत्, न ब्रह्मोपदेश इति। आख्यायिकायास्तत्त्वकथनाय द्वारमात्रत्वात्। उद्दालकश्वेतकेतुव्याजेन गुरुशिष्यमात्रसङ्ग्रहात्। "अतः तत्त्वमसि इत्येवमनुशिष्याय शिष्यत" इति ब्रह्मसिद्धिकारवचनाच्च। तस्मात् "स एवायम्, नान्य" इति सोपस्कारोपदेशवत् "अहं ब्रह्मैवास्मि, नान्य" इति सूत्रितत्वात् "स एतमेव पुरुषं ब्रह्म ततममपश्यत्" इति ऐतरेयमहावाक्यैरवधारणश्रवणात् "तमेवैकं जानथ आत्मानम्" इत्याथर्वणेऽपि श्रवणात् "तदात्मानमेवावेत्" इत्यत्रापि तस्य श्रवणात्।

"अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः॥"

इति कठवल्ल्याम् "अङ्गुष्ठमात्रः पुरुष ईशान" इति महावाक्ये "स एवाद्य" इत्यवधारणात् "यदेवेह तदमुत्र यदमुत्र तदन्विह" इति तत्रैव वर्णनात् "पूर्णमदः पूर्णमिदम्" अदो ब्रह्म इदं प्रत्यग् इति बृहदारण्यकाच्चावान्तरवाक्यमहावाक्ययोरखण्डार्थत्वं निर्मलम् इति लक्षणपरिशुद्धिः॥

वन्दे कृष्णपदाम्बुजं सुरपथस्रोतस्विनीस्रोतसो
द्राघीयस्समयस्थितिप्रविदलद्व्यक्तोर्ध्वरेखाङ्कितम्।
यद्वैरोचनिमुक्तमूर्धजजटाभृङ्गावलीभिर्बभौ
यत्कामानलतप्तवक्षसि तथा गोपी दधौ गौरवात्॥

इति वेदान्तकौमुद्यां द्वितीयोऽध्यायः

॥ समाप्तः ॥

# अथ तृतीयोऽध्यायः

—:o:—

माला....लदुच्चैर्विदलितमदनोद्दीपनश्चान्द्रमर्चिः
क्रोडे विक्रीडमानां कुवलयनयनां कालिकामप्यकाले ।
भूयो भूयो विभूत्या विदधतमधिकं ध्यानतानप्रदीपं
वन्दे वन्दारुवृन्दप्रमदविभवदं श्रेयसे चन्द्रचूडम् ॥

अथोक्तलक्षणे ब्रह्मणि प्रमाणं परीक्षणीयम् । तत्र तावत् "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् । तत्र सद् इति लोकप्रसिद्धं विद्यमानोपलम्भत्वमाह । ननु

"अतीतानागतेऽप्यर्थे सूक्ष्मे व्यवहितेऽपि च ।
प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥
प्रत्यक्षादर्शि भगवान् व्यासो भूतभविष्यताम् ॥"

इति भारतवचनाच्च ;

"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता[1] ॥"

इति **मनुना** धर्मस्य प्रत्यक्षगोचरत्वाभिधानाच्चानागताद्युपलम्भनमपि प्रत्यक्षम् इति चेत्, तन्न ; यद्यपि सूक्ष्मव्यवहितयोरिन्द्रियाणां नैर्मल्याद्यतिशयवशादुपलम्भः समस्ति गृध्रादिचक्षुर्वत्, तथाऽपि स्वग्राह्ययोरेव सतोः, तदाहुः —

"यस्याप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता[2] ॥"

इत्यदृष्टातिशयकल्पनेऽतिप्रसङ्गाच्च । आगमस्य च गतेर्विद्यमानत्वात्तेन विद्यमानोपलम्भ एव चक्षुरादिभिः । न च प्रत्यभिज्ञायामविद्यमानतत्तोपलम्भादव्याप्तिः अदुष्टेन्द्रियेणैक-

1. मनु 12, 105. 2. श्लो. वा. 2. 114.

देशसन्निकर्षादपि जायमानबुद्धेः सङ्कलितपटादिबुद्धिवत् प्रत्यक्षत्वाङ्गीकारात् । एतदेव **विद्यमान**गिरा विवक्षितम् । 'अयं पर्वतो वह्निमान्' इत्यनुमानस्य इन्द्रियकरणकत्वाभावान्नातिव्याप्तिः । तत्र अदुष्टेन्द्रियजन्यत्वेऽपि चित्रनिम्नोन्नतादिप्रत्यक्षस्याभासत्वम् इति चेत् नेदं चित्रनिम्नोन्नतादेरवस्तुत्वेनैन्द्रियसन्निकर्षाभावात् रेखान्यासविशेषस्यैव तत्र दोषत्वात् । अत एव दुष्टेन्द्रियसम्प्रयुक्तायां शुक्तौ कलधौतबुद्धिर्न प्रत्यक्षम्; तदाहुः :—

" सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः ।
प्रयोग इन्द्रियाणां च व्यापारोऽर्थेऽपि कथ्यते ॥ "

दुष्टत्वात् शुक्तिकायोगो वार्यते रजतेक्षणात् इति । श्लो. वा. 1. 4. 28

बौद्धा गोलकानीन्द्रियाण्याहुः । साङ्ख्या योगाश्च आहंकारिकाणि व्यापकानीन्द्रियाण्याहुः । युक्तिश्च—कृष्णसारे सत्येव रूपोपलब्धेः कृष्णसारमेव चक्षुः इत्याद्या बौद्धानाम् । यदि भौतिकानि इन्द्रियाणि तदा वास्यादिवद्यावत्परिमाणम् तावत्येवार्थक्रिया स्यात् । अतश्चक्षुषो महत्तरपर्वतादिग्राहकत्वं न युक्तम् । ततोऽन्यदाहङ्कारिकं चक्षुः इति ।

" चिकित्सादिप्रयोगश्च योऽधिष्ठाने प्रयुज्यते ।
सोऽपि तस्यैव संस्कार आधेयस्योपकारकः ॥

तद्देशस्यापि संस्कारः सर्वव्याप्त्यर्थ इष्यते ।
चक्षुराद्युपकारश्च पादादावपि दृश्यते ॥
तस्मान्नैकान्ततः शक्यं संस्कारात्तत्र वर्तनम् ॥ "[1]

इत्याद्याः साङ्ख्यानाम् । तत्र आद्ये श्रोत्रचक्षुषोर्दवीयोऽर्थग्राहकयोरप्राप्यकारित्वम् इति न सम्प्रयोगनियमः । द्वितीये पुरुषस्य इन्द्रियाणाम् इति शरीरप्रदेशवृत्तिकथनमयुक्तम् इति ।

अत्रोच्यते—विमते सन्निकृष्टग्राहके इन्द्रियत्वात् त्वगिन्द्रियवत् । श्रोत्रस्य दूरदेशोत्पन्नस्य शब्दस्य ग्रहणाय गतिर्वक्तव्या वीचीतरङ्गन्यायेन जायमानान्त्यस्यैव श्रोत्र-

1. श्लो. वा. 4-46.

प्राप्तस्य ग्रहणे प्राच्यां प्रतीच्यां वा शब्दं शृणोति इति व्यवहारस्य तार्किकेण सम्पादयितुमशक्यत्वात्। श्रोत्रपर्यन्तं एक एव वा शब्दो वाच्यः। चक्षुःश्रवसः श्रोत्रगोलकाभावेऽपि शब्दोपलम्भदर्शनात् गोलकरूपस्य कृष्णसारस्य व्यतिरिक्तेन्द्रियाधिष्ठितत्वसिद्धेः। ततो न तदेव चक्षुः। न च स्फटिकान्तरितलौहित्यस्योपलब्धेरप्राप्यकारि चक्षुः, स्फटिकादेः स्वच्छतया नायनरश्मिप्रतिघातकत्वाभावेऽपि तदन्तरितग्रहणोपपत्तेः। अपरथा कुड्याद्यन्तरितस्यापि उपलब्धिप्रसङ्गात् गोलकसद्भावेऽपि अन्धमूकाद्यबाधितव्यवहारान्न गोलकमात्रमिन्द्रियम्। नाप्यप्राप्यकारि। रश्मिद्वारेण महत्तरपर्वतादिग्राहकत्वोपपत्तौ च न तावत् परिमाणत्वविभुत्वकल्पनापि युक्ता। श्रोत्रचक्षुषोश्चान्यत्र कार्यदर्शनेन त्वगिन्द्रियस्य शरीरमात्रवृत्तौ शरीराद्यन्यत्रावृत्तिस्त्वगिन्द्रियत्वेनानुमातव्या। 'सर्वेऽनन्ता' इत्यधिदैवदशाभिप्रायेण भौतिकत्वमपरित्यज्यैव। ततो नाहङ्कारिकमिन्द्रियम्। अतः संप्रयोगपदं पुरुषस्येन्द्रियाणाम् इति च नानुपपन्नम्। जन्मातिरिक्तव्यापारत्वे बुद्धेः नयनादिकारकाविशेषप्रसङ्गवारणार्थं बुद्धिजन्म इत्युक्तम्। तदाहुः भट्टपादाः :—

"बुद्धिजन्मेति चाप्याह जायमानप्रमाणताम्।
व्यापारः कारकाणां हि दृष्टो जन्मातिरेकतः॥

प्रमाणेपि तदा मा भूदिति जन्म विवक्ष्यते।
न हि तत्क्षणमप्यास्ते जायते वा प्रमात्मकम्॥

येनार्थग्रहणे पश्चाद्व्याप्रियेतेन्द्रियादिवत्।
तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते॥"[1]

इति। यदि सम्प्रयुक्तग्राहकमेव प्रत्यक्षम्, तर्हि योगिप्रत्यक्षाणामगतिः, उच्यते; "दिव्यं चक्षुर्ददाम्यहम्"

"प्रादात्तेषां स भगवान् दिव्यं चक्षुर्जनार्दनः"

इति च विश्वरूपादिविषयातिशयमात्रेणापि तदुदाहरणात् योग्यार्थविषयमेव तत् तावद्व्यवस्थितम्। भूतभविष्यद्भूपालादिचरित्रदर्शनस्य च वेदमूलत्वे स्मृतित्वेनाप्युपपत्तेः।

---

1. श्लो. वा. 53-56.

वेदानामनन्तत्वात्, व्यासादीनां तद्दर्शनस्य प्रसिद्धत्वाच्च, "अनन्ता वै वेदा" इति श्रुतेः। पुराणकाराणामपि तत्तदाख्यायिकाव्याजेन धर्मादिनिरूपण एव तात्पर्यात् "श्रूयतां धर्मसर्वस्वम्" इत्युद्गारात्। न च अनागतादिसंवादात् तदध्यक्षत्वाध्यवसायः, यथैव अगदंकारस्याह्वानकर्तृचेष्टालिङ्गाद्रोगिजीवितादिप्रतिभा संवादवती; ज्योतिश्शास्त्राच्च जन्मोपक्रमप्रायणावधि कर्तव्या जातिप्रतिभा साम्प्रतं, तथा कालान्तरे तदाहितसंस्कारस्य सामान्याधर्मविषयव्याप्तिसंस्कारस्यैव प्रणिधानाद्युद्बुद्धस्य संवादास्पदप्रत्ययहेतुत्वसंभवात्। हिरण्यगर्भस्यापि स्वयं प्रतिभातवेदस्य वेदद्वारेणैव धर्मादिप्रमाङ्गीकारात्। किमङ्ग! अन्येषाम्। मनुवाक्ये च प्रत्यक्षं श्रुतिः स्मृतिरनुमानं शास्त्रञ्च मीमांसा। प्रत्यक्षस्यैव ग्रहणञ्चेत्, अयोगिप्रत्यक्षगम्योऽपि धर्मः प्रसज्येत। तस्मात् योगिनामनागतादिज्ञानं चेत्, प्रतिभासमात्रम् स्वप्नवत्। न च संवादविषयोऽपि स्वप्नो भविष्यत्प्रत्यक्षम्, अक्षपादादेः विपर्ययस्वीकारात्।

ननु स्वर्गापूर्वदेवतादयः कस्यचित् प्रत्यक्षं प्रमेयत्वात् वस्तुत्वात् सत्त्वात् घटादिवत्। विपक्षे च बाधकम् तदर्थविधिवैयर्थ्यप्रसङ्गः। यथैव खलु मनसो निद्रोपघातापेक्षस्य बहिरुपप्लुतसाक्षात्कारजनकत्वेऽपि मनस एव सर्वार्थग्राहकत्वप्रयुक्तो नान्धबधिराद्यभावप्रसङ्गः, तथैव योगजधर्मानुगृहीतस्य बहिरनुपप्लुतसाक्षात्कारजनकत्वेऽपि यथैव निद्रोपघातादेरन्वयव्यतिरेकाभ्यां बहिरुपलब्धावेव सहकारित्वाध्यवसायः तथैव योगजधर्मस्य तद्विधेरेवानुपप्लव इति न कश्चिद्विरोध इति योगिप्रत्यक्षसिद्धिं किरणावलीकारो निबबन्ध, तदसारम्; रसादयः कस्यचिच्चाक्षुषाः, प्रमेयत्वात् रूपादिवत् इत्यपि प्रयोगप्रसरात्।

ननु रसादिषु रूपैकव्यञ्जकमिन्द्रियं चक्षुर्मतम्, तथा च प्रतिज्ञापदयोर्व्याघातः, यदि हि रसादिषु रूपमात्रव्यञ्जकं चक्षुः कथं तद्ग्राह्या रसादय इति, मैवम्; तुल्यत्वात् स्वर्गादीनामतीन्द्रियतयैव प्रसिद्धेः; तथा च ऐन्द्रियकत्वप्रतिज्ञायां व्याघातः प्रतिपत्तृभेदेन वा विरोधो रसादिष्वपि तुल्यः, कस्यचिदेव चाक्षुषत्वसाधनाच्चक्षुर्लक्षणं चासंस्कृतचक्षुषि चरितार्थम्। न च स्वप्नेऽपि मनसो बाह्यार्थसाक्षात्कारे स्वातन्त्र्यं सर्वसंप्रतिपन्नम् "अत्र अयं पुरुषः स्वयं ज्योतिः" इति श्रुतेः मनसो गजाद्याकारपरिणतस्य विषयतयैवावस्थानस्वीकारात्। न च वाच्यम् योगिनां रसादयोऽपि चाक्षुषाः सन्तु, किं दुष्करं कर्मविशेषस्याचक्षुःश्रवसोऽपि सर्वस्य दर्शनात् इति। धर्मादेरपि तथात्वप्रसङ्गात्।

किञ्च योगिनां युगपदनेककायनिर्माणाश्रयणात् तत्र तत्रेन्द्रियसङ्गेऽपि नित्यस्य मनसः तदभावात् तद्विना विज्ञानक्रमो वा सुखादिसाक्षात्कारो वा न देहान्तरेषु सङ्गच्छत इति "स एकधा भवति स द्विधा भवति" इत्यादि शास्त्रमपि न तार्किकनये योगिनि प्रमाणम्। योगविधानस्यातिशयविशेषादपि सम्भवाच्च।

"अणिमा लघिमा चैव महिमा प्राप्तिरीशिता।
प्राकाम्यञ्च वशित्वं च यत्रकामावसायिता॥"

प्राप्तिः अङ्गुल्यग्रेण चन्द्रादिस्पर्शः। प्राकाम्यम् इच्छाऽनभिघातः। यथा भूमावुदक इवोन्मज्जनादिः। ईशिता भौतिकोत्पत्त्यादावैश्वर्यम्। वशित्वम् भूतादिनियन्तृता इच्छामात्रेण सकलविषयलाभो यत्रकामावसायिता इति योगफलं धर्मादेरप्रत्यक्षत्वेऽपि संगच्छते। ततो विद्यमानमात्रोपलम्भनं प्रत्यक्षम्। न च घटाद्यभावोऽपि प्रत्यक्षः, अभावेन सहेन्द्रियस्य संयोगसमवाययोरभावात् विशेषणविशेष्यभावमात्रेण संयुक्तभूतलेनाभावस्य प्रत्यक्षत्वं न युक्तम्, पर्वतस्थवह्नेरपि तथाभावेन प्रत्यक्षत्वप्रसङ्गात्। नापि योग्यताख्यः सम्बन्धः, तस्य सर्वप्रमाणप्रमेयसाधारण्येन विशेषसंबन्धोच्छेदप्रसङ्गात्। अतो न घटाद्यभावः प्रत्यक्षः। किन्तु, योग्यानुपलब्धिकरणकमर्थाभावज्ञानमभाव इत्यभावप्रमाणगम्यः।

न च एतदनुमानम्, अनुपलब्धेः अज्ञातकरणत्वात्। अन्यथाऽनुपलब्ध्यन्तरवेद्यत्वेनानवस्थानात्। न च उपलब्धिवदनुपलब्धेरपि स्वतःसिद्धसाक्षिप्रसादसिद्धत्वात् अनवस्थाप्रतीकारः। साक्षिणो निर्विकल्पकज्ञानत्वादनुपलब्धेः स्वरूपोपलब्ध्यभावत्वेन सविकल्पकविषयत्वात्। अन्यथा सुषुप्ते विषयज्ञानाभावस्याविरोधिभावरूपाज्ञानानुभवेनानुमेयत्वाभिधानं अवधूतं स्यात्। सत्तामात्रेण च लोचनादिवदनुपलम्भः प्रमेयाभावविज्ञानकारणम्। ततः तद्वदेव कार्योन्नेयत्वात् नाभावप्रमाणवादिनोऽप्यनुपलब्धेः कदाचिदनुपलब्ध्यन्तरवेद्यत्वादनवस्था तुल्या इति शङ्कनीयम्; न चैवमनुपलम्भान्निर्धारणे सत्त्वासत्त्वसंशीतिर्न स्यात्। किन्तु, असत्त्वनिश्चय एव, चाक्षुषार्थे तत्त्वान्यत्वसन्देहवत्तदुपपत्तेः।

ननु तर्हि मध्याह्ने चैत्रं पश्यतः प्रातःकालीनतदभावविज्ञानम्, तत्रैव देशविशेषे तदनुपलम्भस्य प्रागभावस्य दर्शने निवृत्तत्वात् निर्मूलतया न स्यात्। नैवम्। तत्र केवलभूतलोपलम्भस्मरणादिलिङ्गगम्यत्वादभावस्य। भूतलविशेष एवानुपलम्भस्य प्रमाणत्वात्। तदुक्तम्:—

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्त्वसत्तावबोधार्थं तत्राभावप्रमाणता॥"[1]

इति। एवमभावप्रमाणमपि परिशुद्धम्। अतो न घटाद्यभावः प्रत्यक्षो येन तस्यासदुपलम्भनमाशङ्क्येत। तत्र ब्रह्मणो 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति श्रुतेः सदेकरसत्वेऽपि निर्विकल्पकप्रत्यक्षस्य च—

"आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मना"।

इति सन्मात्रग्राहित्वेऽपि न केवलस्य प्रत्यक्षत्वम्, किन्तु, मायावेशेन कारणतया कार्यप्रपञ्चानुस्यूतस्य; भावत्वादेव च नाभावप्रमाणगम्यताऽपि॥

अनुमानं पुनर्ज्ञातसंबन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः। ज्ञातसंबन्धः प्रमाता वा एकदेशवान्वा ज्ञातश्चासौ सम्बन्धश्च इति विग्रहे च एकदेशौ ज्ञातसम्बन्धशब्देन समुदायात्मकं द्वयं वा, तस्य समुदायिनौ चैकदेशौ; तदाहुः **वार्तिककृतः**—

"प्रमाता ज्ञातसम्बन्ध एकदेश्यथ वोच्यते।
कर्मधारयपक्षे वा सम्बन्धिन्येकदेशता॥
द्वयं वा ज्ञातसम्बन्धमुपलब्धं परस्परम्।
तस्यैकदेशशब्दाभ्यामुच्येते समुदायिनौ॥"[2]

इति। सम्बन्धश्च लिङ्गधर्मस्य लिङ्गिना व्याप्तिः। सा च व्याप्यव्यापकभावनिर्वाह्या।

"यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत्।
स व्याप्यो व्यापकस्तस्य समो वाऽप्यधिकोऽपि वा॥

भूयोदर्शनगम्या च व्याप्तिस्सामान्यधर्मयोः॥"

ननु विशेषाणां साध्यत्वे तेषामनुगमाभावात् न व्याप्तिः, सामान्यसाधने स्वव्याप्तिग्रहकालत एव तस्य सिद्धत्वात् सिद्धसाधनता। यथाह **चार्वाकः**:—

---

1. श्लो. वा. 5. अभाव. 1.
2. श्लो. वा. अनु. 2, 3.

यद्यप्यन्यैरसंस्पृष्टां विधिः स्पृशति भावनाम् ।
तथाऽप्यशक्तितो नासौ तन्मात्रे पर्यवस्यति ॥

अनुष्ठेये हि विषये विधिः पुंसां प्रवर्तकः ।
अङ्गत्रयेण चापूर्णां नानुतिष्ठति भावनाम् ॥"

इत्याद्युपसंहारेण वार्तिककारैरपूर्वार्थत्वनिर्णयात् "अग्निना सिञ्चेत्" इत्यादौ । तेन पदार्थेषु प्रतीतेषु पश्चाद्योग्यतादिवशात्तेषामन्वयप्रमितिः इति वाक्यलक्षणालोचनयाऽपि युक्तोऽभिहितान्वयः ।

ननु पदार्थानां बोधकत्वे सप्तमप्रमाणत्वप्रसङ्ग इति चेत्, तुल्यमेतत् यागादिक्रियायां क्षणभङ्गिन्यां स्वर्गार्थिनः कार्यबुद्ध्यनुपपत्त्या कल्प्यमानक्रियाविलक्षणकार्यवाक्यार्थपक्षेऽपि । तत्रापि हि पदेभ्यः प्रतीतस्वर्गादिपदार्था एव वाक्यार्थप्रमित्यङ्गम्; अन्यथा यथाश्रुता क्रियैव वाक्यार्थस्स्यात् लिङ्गादेरिव पदार्थानां शाब्दप्रमाणान्तर्गमोपपत्तेश्च । तस्मात्पदानामेव पदार्थस्मृत्यवान्तरव्यापाराणां स्मृत्यालिङ्गितपदार्थानां वाक्यार्थप्रमित्यङ्गत्वम्, न पुनः पदानां साक्षात्, इत्ययमेव पक्षः साधीयान् । शब्दप्रवृत्तिनिमित्तं तु समन्वयकौमुद्याम् व्यवस्थापयिष्यामः ॥

॥ ओम् ॥

अथ सूत्रोपात्तं वेदाख्यं शास्त्रं चिन्तनीयम् पौरुषेयत्वापौरुषेयत्वाभ्याम् । श्रुतिबलात्तावत् अपौरुषेयत्वं प्रतिभाति । तथा हि—"यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि सर्वाण्यस्यैतानि विश्वसितानि"[1] इति बृहदारण्यके श्रूयते । विद्या देवजनविद्याः नृत्तशास्त्रादि, उपनिषदो रहस्योपासनाः, श्लोका ब्रह्मणः प्रतिपादका मन्त्राः, आत्मेत्येवोपासीत इत्यादिसङ्ग्रहवाक्यानि सूत्राणि, तद्विवरणमनुव्याख्यानम् । मन्त्रव्याख्या व्याख्यानम् । इतिहासाद्यष्टविधम् ब्राह्मणम् । ऋगादिः मन्त्रः । तत्राग्निधूमदृष्टान्तोपादानान्निश्वसित-

1. बृ. 2. 5.

श्रुतेश्च प्रमाणान्तरेणार्थमालोच्य तत्र वेदवाक्यरचना लोकवाक्यवत् इत्ययं पक्षो न श्रुतिसम्मतः ।

**यन्नैयायिका** आहुः :—"स्मृत्यनुमितानां शाखानामुच्छेददर्शनात् स्वातन्त्र्येण स्मृतीनामाचाराणां च प्रामाण्यानभ्युपगमात् मन्वादीनाम् अतीन्द्रियार्थदर्शने प्रमाणाभावादासंसारमनाम्नातस्य वेदत्वव्याघातेनानुमानायोगात् उत्पत्तितोऽभिव्यक्तितोऽभिप्रायतोऽनवच्छिन्नवर्णमात्रस्य निरर्थकत्वात् । तस्मात् प्रत्यक्षश्रुतिरेव मूलं स्मृतीनामाचारस्य च । सा चेदानीं नास्ति इति शाखोच्छेदः । एवं सर्वोच्छेदे कदाचिदुत्पत्तिः, तेन स्मृतिरिव श्रुतिरपि मूलसापेक्षा इति निःश्वसितश्रुतिर्न पौरुषेयत्वं प्रतिषेधति इति ।

**एतच्च** आचाराधिकरणपूर्वपक्षपातित्वात् तेनैव राद्धान्तेनावधूतम् । तथा हि— "**धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्**; वैदिकशब्दप्रमाणको हि धर्मः । अतोऽशब्दं अदृष्टमूलभूतवेदशब्दं स्मृतिजातम् 'अष्टकाः कर्तव्या' इत्यादि तस्य न प्रामाण्यमपेक्षितव्यम् । शब्दस्य तावदेकमेव प्रत्यक्षं प्रमाणम् । स च एतेनानवगम्यमानोऽस्ति इत्युच्यते । ततोऽपरं धर्मास्तित्वमेव निष्प्रमाणकमभ्युपगन्तव्यम्" इति । यथैव धर्मसम्बन्धादर्शनान्न तत्र किञ्चिल्लिङ्गमुच्यते तथाऽष्टकादिस्मृतावपि । आगमोऽपि नित्यो नोपलभ्यते पौरुषेये च न विश्वासः । दृश्यन्ते ह्यनागमिकानप्यर्थानागमिकत्वाध्यारोपेण केचिदग्रत्वे ह्यभिदधानाः । न च सर्वेषां स्मृतिप्रणयिनामविगानं, येन पौरुषेयागमबलादुपलब्धपूर्वश्रुतिमूलत्वं स्यात् । यदि तु प्रलीनशाखामूलता कल्प्येत, ततः सर्वासां बुद्धादिस्मृतीनामपि तद्द्वारं प्रामाण्यं प्रसज्येत । यस्यैव च यदभिप्रेतं, स एव तत्प्रलीनशाखामस्तके निक्षिप्य प्रमाणीकुर्यात् । तस्मात् अप्रमाणम् इति ।

**अत्र राद्धान्तः** :—

**अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्** । य एव वेदार्थानुष्ठातारस्त एव स्मार्ताचारस्यापि इति प्रमाणमेवानुमानमष्टकादिस्मृतिः । सर्वथा तावन्मन्वादिप्रणीतास्स्मृतयः शेषाणि च विद्यास्थानानि स्वार्थं प्रतिपादयन्त्युपलभ्यन्ते । मन्वादीनां चाप्रत्यक्षत्वात् तद्विज्ञानमूलं अदृष्टं किञ्चिदवश्यं कल्पनीयम् । सर्वत्रैव चादृष्टकल्पनायां तादृशं कल्पनीयम् यद्दृष्टं नापि विरुणद्धि, न चादृष्टान्तरमासञ्जयति । तत्र भ्रान्तौ तावत् सम्यङ्निबन्धशास्त्रदर्शनविरोधापत्तिः सर्वलोकाभ्युपगतदृढप्रामाण्यबाधश्च । तदानीन्तनैश्च पुरुषैरपि भ्रान्तिर्मन्वादीनामनुवर्तिता तत्परिहारोपन्यासो मन्वादीनां इत्यनेकाऽदृष्टकल्पना ।

तथा विप्रलम्भेऽपि विप्रलिप्सुः प्रयोजनम्, लोकस्य च तत्र भ्रान्तिः तस्याश्चियन्तं काल-मनुवृत्तिः इत्याद्याश्रयणीयम्। उत्पन्नस्य च दृढस्य प्रत्ययस्य प्रामाण्यनिराकरणाद्दृष्ट-विरोधः। तस्मात् सर्वेभ्यश्चोदनाकल्पना गरीयसी। तत्र हि तावन्मात्राद्दृष्टाभ्युपगमः। शेषास्तु महाजनपरिग्रहादयः सर्वा अनुविधीयन्ते। संभाव्यते च मन्वादीनां चोदना पूर्वविज्ञानकारणत्वेन। तदर्थमेवाह—**तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानाम्** इति। यानि पुनरनुपपन्नवेदसम्भावनानां म्लेच्छादीनामतीन्द्रियार्थस्मरणानि, तेषां मूलविकल्पना-वेलायामेव चोदना सम्भावनास्पदम् नारूढेति पारिशेष्यादप्रमाणत्वम्।

कथं तर्हि मन्वादिस्मृतिमूलभूतचोदना नोपलभ्यते?

"शाखानां विप्रकीर्णत्वात् पुरुषाणां प्रमादतः।
नानाप्रकरणस्थत्वात् स्मृतेर्मूलं न दृश्यते॥"

नानाप्रकरणगतवाक्यसङ्ग्रहणेनाध्ययने च क्रमान्यत्वात् स्वाध्यायविधिविरोधः स्यात्। शक्नुवन्ति हि ते विध्यर्थवादान् विवेक्तुम्। तत्र स्मृतेर्विध्यात्मकत्वात् प्रकृतितादात्म्या-नुमाने लब्धास्पदेऽर्थवादपूर्वकत्वं निष्प्रमाणकम्।

अपि च "वेदोऽखिलो धर्ममूलम्" "स सर्वोऽभिहितो वेदे" इति स्वयमेव स्मर्तृभिरात्मा बध्वा समर्पितः। तच्चेदं नियोगतः तत्कालैः कर्तृभिर्बुद्धिपूर्वकारित्वा-दुपलब्धम्। अतः सिद्धं वेदद्वारं प्रामाण्यम्। यद्यपि शाखान्तरेषु विद्यन्त एव श्रुतयः, तथाऽपि कस्यां शाखायां काः पठ्यन्त इत्यस्यांशस्य विस्मरणम्। वैदिकत्वमात्रं तु प्रामाण्यसिद्धये परिपालयन्ति। तद्विशेषविज्ञानं पुनरनौपाधिकत्वादकर्तव्यमेव। तेन स्मृत्यनुमितश्रुतीनां नासत्त्वेनोच्छेदः शक्यते वक्तुम्। कलावपि कलापग्रामादावध्येतॄणां वर्णनात्। अत एव आचारोच्छेदोऽपि न शाखोच्छेदानुमापकः। प्रलयं प्रसार्योच्छेद-कल्पनेपि न वेदस्येश्वरप्रणीतत्वं सर्वज्ञबुद्धादिप्रणीतत्वं देशनानामिव शङ्कनीयं निर्वोढुम्

यत आहुः :—

"रागादिरहिते तस्मिन्निर्व्यापारे व्यवस्थिते।
देशनाऽन्यप्रणीतैव स्याद्दते प्रत्यवेक्षणात्॥

सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।
निस्सरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥

एवमाद्युच्यमानन्तु श्रद्दधानस्य शोभते ।
कुड्यादिनिःसृतत्वाच्च नाश्वासो देशनासु नः ॥

किमु बुद्धप्रणीताः स्युः किमु कैश्चिद्दुरात्मभिः ।
अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः ॥ "[1]

अथ रागादिरहितोऽपि भगवान् प्राणिकर्मोपरोधेन विग्रहमादाय महोपाध्याय इव शास्त्रसङ्ग्रहं कृत्वा वेदान् निर्मय प्रवर्तयति, तेन युक्तो नैयायिकपक्षः शक्यो निर्वोढुम्। निःश्वासश्रुतिरपि तत्कारत्वात् सङ्गच्छते तथाऽपि यथा पूर्वमकल्पयत् अपूर्वं वा इति कुतो निश्चयः ? न च तदीयज्ञानस्य प्रामाण्याध्यवसायोऽपि, येन तेनोपलभ्यार्थं तत्र वाक्य-रचनात् तत्प्रामाण्यविश्वासः स्यात् । न च तदुक्तस्य पुत्रेष्ट्यष्टकादेर्दृष्टफलत्वात्तदध्यवसायः, तदुक्तत्वस्याद्यव्यसिद्धत्वात् । ततो नेश्वरप्रणीतो वेदः । नापि विज्ञानविशेषवत्प्रणीतस्तादृश-ज्ञानासंभवात् । तदाहुः :—

" एवं यैः केवलं ज्ञानमिन्द्रियाद्यनपेक्षिणः ।
सूक्ष्मातीतादिविषयं जीवस्य परिकल्पितम् ॥

नर्ते तदागमात्सिद्ध्येन्न च तेनागमो विना ।
दृष्टोऽतोऽपि न तस्यान्यो नृषु कश्चित्प्रतीयते ॥ "[2]

ततो न प्रमाणान्तरेणार्थमुपलभ्य तत्र वेदवाक्यनिर्माणम् इति साम्प्रतम् ।

ननु नित्यसिद्धप्रतिभानपक्षोऽपि न विश्वास्य । तथा हि—

" न हि तत्रापि विस्रम्भो दृष्टोऽनेन कृतोऽथवा ।
सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः ॥

---

1. श्लो. वा. 1. 2. 140.
2. श्लो. वा. p. 88

> यथाऽऽप्तत्वे न विस्रम्भः तथा कालान्तरेऽप्यभूत् ।
> स्वप्नादिज्ञानवच्चापि प्रत्ययोऽस्यागमार्थयोः ॥
> भवेदिति सशङ्कानां प्रामाण्यं युज्यते कथम् ॥ "[1]

ब्रह्मस्वरूपज्ञानस्य च प्रमाणाप्रमाणसाधारणत्वात् । अथ व्यवस्थितं कल्पान्तरीयस्मरण-मास्थीयते, ततो निराशङ्कतया प्रामाण्यं युज्यते; तर्ह्यागमस्मृतिवत् तदर्थस्मृतेरपि दुर्वारत्वात् अर्थमुपलभ्य विरचनापक्षप्रद्वेषो वृथैव भवतः । यतः "यो ह्यनुचरितं शब्दं गृह्णात्यर्थेऽस्य का कथा" । किञ्च नैयायिकपक्षादपि हीनोऽयं पक्षः ।

> "पुमांस्तावत्स्वतन्त्रः स्यादर्थग्रहणवादिनाम् ।
> आगमप्रतिभाने तु पारतन्त्र्यं द्वयोरपि ॥ "[2]

भवत्पक्षेऽपि वेदस्य पारतन्त्र्यं सममिति चेन्न ;

> "अनेकपुरुषस्थत्वादेकत्रैव च जन्मनि ।
> ग्रहणस्मरणाद्भेदे न स्वातन्त्र्यं विहन्यते ॥ "[3]

उपाध्यायेश्वरयोरपि न साम्यम्—

> "अन्यथाकरणे चास्य बहुभ्यः स्यान्निवारणम् ।
> एकस्य प्रतिभानन्तु कृतकान्न विशिष्यते ॥ "[4]

कालभेदेषु सम्प्रदायप्रवर्तकैकपुरुषवदीश्वरस्य प्रवर्तकत्वम् इत्यपि नाशङ्कनीयम् ।

> "अतश्च सम्प्रदायेऽपि नैकः पुरुष इष्यते ।
> बहवः परतन्त्राः स्युः सर्वेऽप्यद्यत्ववन्नराः ॥ "

तस्मादपुरुषतन्त्र एवानादिनिधनो वेद इत्यास्थेयम् ।

---

1. श्लो. वा. 2. 145.
2. श्लो. वा. 2. 148
3. श्लो. वा. 2. 149
4. 4, 2. 150

**अत्र समाधिः** :— यथैव खलूच्यते—

लिङ्गादीनां तु नित्यत्वान्नित्यमनुच्चारितश्रुत्यनुमानकरणमविरुद्धम् इति, नित्यस्य लिङ्गादेर्नित्यश्रुतिमूलत्वम्, तथैव श्रुतीनां नित्यत्वेऽपि नित्यब्रह्ममूलत्वं कस्मान्नोच्यते ?

किञ्च येऽपि वर्णानां नित्यत्वमास्थिषत तैरपि पदादीनामनित्यत्वमभ्युपेतव्यम्। आनुपूर्व्यवन्तो हि वर्णाः पदम्, पदानि चानुपूर्व्यवन्ति वाक्यम्। वाक्यानि चानुपूर्व्यवन्ति प्रकरणम्, प्रकरणानि चानुपूर्व्यवन्ति शास्त्रम्। व्यक्तिधर्मश्चानुपूर्व्यं न वर्णधर्मः। वर्णानां नित्यानां विभूनां च देशतः कालतो वा पौर्वापर्यायोगात्। व्यक्तिश्चानित्या इति कथं तदुपगृहीतानां वर्णानां नित्यानामपि पदता नित्या। पदानित्यतया च वाक्याद्यनित्यता व्याख्याता। तस्मान्नृत्यानुकरणवत् पदाद्यनुकरणम्। यथा हि यादृशं गात्रचलनादि नर्तकः करोति तादृशमेव शिक्षमाणाऽनुकरोति नर्तकी, न तु तदेव व्यनक्ति। एवं यादृशीमानुपूर्वीं वैदिकानां वर्णपदादीनां करोत्यध्यापयिता तादृशीमेवानुकरोति माणवको न तु तामेवोच्चारयति; आचार्यव्यक्तिभ्यो माणवकव्यक्तीनामन्यत्वात्। तस्मात् नित्यानित्यवादिनां न लौकिकवैदिकपदवाक्यादिपौरुषेयत्वे विवादः केवलं वेदवाक्येषु पुरुषस्वातन्त्र्यास्वातन्त्र्ये विप्रतिपत्तिः। यथाहुः :—

"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता"

इति। ननु "स्वाध्यायोऽध्येतव्य" इति परतन्त्रं वेदाध्ययनम् श्रूयते, आचार्याधीनो वेदमधीष्व इति च। अतो वेदाध्ययनं प्रत्यस्मादृशगुरुशिष्यपारम्पर्यमविच्छिन्नं वेदस्यानादितां गमयति। ब्रह्मणश्च पूर्वसर्गानुसारेण तादृशानुपूर्व्यरचना न प्रमाणवती; घुणाक्षरन्यायस्य व्यभिचारित्वात्। न च सर्वज्ञत्वं नियामकम्, अन्यथा विजानतोऽप्यन्यथोच्चारणदर्शनात्। ततो न सर्वथा वेदसर्ग इति स्वीकार्यम्।

ननु वधयागदानब्रह्महत्यादयोऽर्थहेतवो ब्रह्मविवर्ता अपि न सर्गान्तरे विपरीयन्ते। न हि जातु कचित्सर्गे ब्रह्महत्याऽर्थहेतुः, अनर्थहेतुश्चाश्वमेधो भवति अग्निः क्लेदयति आपो दहन्ति इति। यथाऽत्र सर्गे नियतानुपूर्व्यं वेदाध्ययनं अभ्युदयनिःश्रेयहेतुः; अन्यथा तदेव वाग्वज्रयाऽनर्थहेतुः। एवं सर्गान्तरेष्वपि इति तदनुरोधात् सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वसर्गानुसारेण वेदान् विरचयन् न स्वतन्त्रः, नैवम्; एवमपि कल्पनादनवच्छिन्नगुरुशिष्यपारम्पर्याश्रयणस्यैव युक्तत्वात्। यतो ब्रह्महत्यादिफलं, वेदैकप्रमाणकम् देशादिभेदेन भेषजादिवीर्यविपाकवत् सर्गान्तरेऽप्यन्यथाप्युत्प्रेक्षेत।

चैत्यवन्दनादिवचसामपि सर्वज्ञबुद्धेन सर्गान्तरानुसारेणैव विरचितत्वात् तत्साधनभावस्य तदेकप्रमाणत्वात् वेदवदप्रतिबन्धं प्रामाण्यं केन वार्यते? ।

अत्रोच्यतेः— सर्गप्रलयौ तावत् असाधिषाताम् । प्रलये च सम्प्रदायोच्छेदस्यावश्यकत्वात् । अतः "धाता यथापूर्वमकल्पयत्" इत्यादिश्रुतिप्रामाण्यानुसारेण वेदेश्वरयोः पारतन्त्र्याभ्युपगमो युक्त एव विधेः । गुरुप्रसादलभ्यत्वं चाध्ययनस्य फल एवोपयुज्यते । ईश्वरस्य च फलासंसर्गत्वात् । न च एकस्य प्रतिभानेऽनाश्वास इति युक्तम्, पुराणाद्युपदिष्टविप्रलिप्सापूर्वकचैत्यवन्दनादिवाक्येष्वेव तस्याप्रतिबन्धत्वात् । अत एव न तेषां वेदतुल्यतापि । सर्गादिभुवां च प्रजापतिदेवर्षीणां धर्मज्ञानवैराग्यैश्वर्यसङ्गमानामुपपद्यते स्वरूपावधारणम्, किमयं विप्रलम्भकोऽन्यथा वा इति । तत्र विप्रलिप्साद्यस्मरणान्नावकाशोऽनाश्वासस्य । अत एव स्वप्नप्रत्ययवदागमप्रत्ययोऽस्य नैकान्तेन विश्वासाय प्रामाण्यस्य इति व्युदस्तम् । सत्यसङ्कल्पत्वेन यथावत्प्रतिभानसम्भवाच्च । पूर्वानुसारेण विरचनादेव चाध्यापकादिवन्न तदुक्तत्वमात्रेण प्रामाण्यम्, येन तदुक्तत्वप्रामाण्ययोरन्योन्यापेक्षणं परेषामिव ।

परमते च वेदस्य बोधकत्वमनुपपन्नमेव । तथा हि टीकाकारमते तावत् :— उपलब्धिधर्म एव क्रमो वर्णेषु समारोपणीयः । अतः क्रममात्रस्य वर्णमात्रस्य वा वेदशब्दानर्हत्वाद्विशिष्टप्रत्ययाभावाच्च अविवेकमात्रं वेद इत्यर्थावबोधो न स्यात् । अन्यथाख्यातौ पुनर्विशिष्टप्रत्ययमात्रत्वाद्विशिष्टार्थाभावाद्विज्ञानातिरिक्तो वेदो न स्यात् । न च उपलब्धिक्रमोपलक्षितवर्णो वेदो न विशिष्ट इति युक्तम्, क्रमविशिष्टवर्णप्रत्ययस्य प्रत्यक्षत्वात् । अनिर्वचनीयवादे पुनर्विशिष्टार्थप्रत्यययोर्भावाद्विज्ञानव्यतिरेकेणार्थस्यानिर्वचनीयत्वेऽपि अर्थक्रियासमर्थतया तुच्छव्यावृत्तसत्त्वाभ्युपगमादस्त्येव अर्थावबोधसमर्थो वेदः । स्वतन्त्रेश्वरवादिनामपि तस्य सर्वज्ञत्वम् यथासिद्धसर्वप्रकाशन एवोपयुज्ते नो पुनरन्यथाभूतविरचनाय । अन्यथाभूतविरचने च स्वेच्छानिर्मितत्वात् नियतस्वरवर्णशिक्षादिविनयनिबन्धनं मन्वादिवाक्येष्विव प्रत्यवायकीर्तनं न स्यात् । अर्थज्ञापनस्यैव विवक्षितत्वात् । अतो यथावस्थितमनुस्मृत्योच्चारयति भगवान् अध्यापक इव इति न विशेषं पश्यामः प्रक्रियान्तरस्य । सर्वज्ञत्वमपि "यः सर्वज्ञः सर्ववित्" इति सामान्यरूपेण, विशेषरूपेण च स्वरूपचैतन्यव्याप्तमेव सर्वं सर्वास्ववस्थासु इति

"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"

इति वेदादेवावसीयते । सर्वप्रकाशनसमर्थनशब्दोपादानभावात् सर्वज्ञं ब्रह्म इति चाभियुक्ताः । मायावृत्तिभिः सर्वं वेत्ति इति वा सर्वज्ञं ब्रह्म । अस्मिन् पक्षे न सदा सर्वज्ञत्वम् इति न युगपद्द्वैताद्वैतवृत्तिविरोधः । सत्यसङ्कल्पत्वादेव च यथार्थप्रतिभा । तस्मान्निःश्वसितश्रुतेर्वेदाख्यशास्त्रे यथोपपादितापौरुषेयभावे युक्तम् ब्रह्मणि मानम् । नित्यप्रत्यक्षवादिनां न वर्तमानकाले भूतानागतयोः प्रत्यक्षता वर्तमानवत् इति नैकविध-प्रत्ययेन सर्वज्ञत्वं सङ्गच्छेत । वर्तमानसर्वज्ञत्वं च सर्गात् प्राङ्न सम्भवति इति सर्गोऽप्यबुद्धिपूर्वकः प्रसज्येत । करणविशेषस्य चाभावादेव नियामकस्य विप्रकृष्टसन्निकृष्टार्थ-साधारणज्ञानस्य कुतः प्रत्यक्षसंज्ञा, मानन्तरसंज्ञैव कुतो न भवेत् । प्रमाणविशेषत्वानि-रूपणे च "कृत्स्नः प्रज्ञानघन" इति श्रुतेः नित्यज्ञानस्य आत्मरूपतैव इत्यस्मत्पक्ष एव रमणीयः । क्रमविशेषवर्णात्मकवेदतदर्थयोश्च युगपदाविर्भावान्नार्थज्ञानपूर्विका भगवतो वेदसृष्टिः । वेद एव च यथोक्तलक्षणब्रह्मतत्त्वावेदनभरं सोढुं क्षमते । तस्यापुरुषतन्त्रस्य निर्दोषत्वेन निरङ्कुशप्रामाण्यात् । यथा हि—

कर्पूररेणुरमणीयपयांसि यस्या
आकाशकाचकलशीमपि वा अयामति । (?)
ब्रह्माण्डमण्डलकरण्डधृतां धुनीन्ता-
माशंसते खलु महेश्वर एव वोढुम् ॥

यद्वेदाः प्रतिजानते प्रतिपदन्तात्पर्यपर्यायतो
ब्रह्मैकं बहुजिह्ममोहनिवहच्छेदाय वेद्यं बुधैः ।
प्रेक्षावांस्तदपास्य हास्यपदवीं तत्त्वान्तरं को भजेत्
प्रावारीयति कम्बलं परिमलस्निग्धोऽपि कः कामुकः ॥

वेदो मानमवादि वादिकरिणा व्यासेन योऽयं स्वतो
ब्रह्मण्यत्र विमानमङ्ग वद किं मानं न वेति स्फुटम् ।
सर्वज्ञोऽपि परीक्ष्य यं स्वमकुटे चक्रे कलानां निधिं
किं तस्याद्य सदाऽवदातसहजज्योतिष्मतश्चिन्त्यताम् ॥

तस्मात् सर्वमनाकुलम् ॥

शशिखण्डशिखण्डमण्डनण्डवलव्यालण्डवरण्डपीडितम् ।
गरुडध्वजण्डिकाद्वययो कलहव्रीडविडम्बनं नुमः ॥ (१)

इति

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वयाश्रमपूज्यपादशिष्यस्य भगवतो रामाद्वयस्य कृतौ वेदान्तकौमुद्यां तृतीयोऽध्यायः समाप्तः ॥

—:०※०:—

॥ श्रीरस्तु ॥

# अथ चतुर्थोऽध्यायः ॥

—:o:—

शास्त्रप्रमाणकम् ब्रह्म इत्यभ्यधायि । अत्र **चोदयन्ति** कार्यार्थविषयमेव शब्दं प्रमाणमङ्गीकुर्वाणाः—न शब्दप्रमाणगोचरो ब्रह्म इति । तथा हि—कार्यं तत्फलज्ञानं वा प्रवर्तकम् इति **वृद्धमीमांसकाः** । इष्टसाधनज्ञानं रागो वा तथा इति **वेदान्तितार्किकाः** । लिङादिशब्दः तद्व्यापारो वा प्रवृत्तिबीजम् इति भावनावादिनो **भाट्टाः** । लिङादिशब्दातिरिक्तः शब्दोऽभिधातद्व्यापारो वा तथा इति **वैयाकरणादयः**, तत्र भाट्टानां शाब्दव्यवहारे शब्दभावना तावत् सर्वत्र प्रवृत्तिनिमित्तम् । तत्राभूतार्थप्रादुर्भावफलं करोत्यर्थमात्रं भावना । तथा हि—

> सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति ।
> सामानाधिकरण्येन करोत्यर्थोऽवगम्यते ॥ [1]

इह केभ्यश्चिद्धातुभ्यः परा तिङ्विभक्तिरुच्चार्यमाणा कर्त्रात्मलाभमेव व्यापारं प्रतिपादयति । यथा अस्तिभवतिविद्यतिभ्यः । अपरेभ्यस्तु सिद्धे कर्तरि अन्यात्मलाभविषयव्यापारप्रतीतिः । यथा यजति ददाति पठति पचति गच्छति इति । द्रव्यमेव विशिष्टशक्त्युपेतं प्रचलितात्मतत्त्वं विप्रकीर्णस्वस्वभावं पूर्वापरीभूतं पूर्वावस्थातः प्रच्युतं परामवस्थां प्राप्तं नानाक्षणव्यासक्तं व्यापारशब्दवाच्यं भवति । तत्र कदाचित् कर्तुरेवमवस्था प्रतीयते । कदाचित् सिद्धे कर्तर्यन्यस्य । तद्यदा कर्तुरेवैषाऽवस्था भवति तदा असौ स्वयमेवान्यस्मादात्मलाभमपेक्षमाण परनिष्पत्तावव्याप्रियमाणत्वात् न करोतिशब्दवाच्यतां भजते । यदा तु लब्धात्मलाभोऽन्यत्र व्याप्रियते, तदा करोति इत्येवमपदिश्यते । तथा च किं करोति ? पचति; किं करोति ? पठति; किं करोति ? गच्छति; इति सामान्यविशेषरूपेण सामानाधिकरण्यप्रयोगो दृश्यते । न तु किं करोति भवत्यस्ति च इति प्रयुज्यते । तस्माल्लब्धात्मककर्तुर्व्यापारवचनानि करोत्यर्थवन्त्याख्यातानि । तत्र च क्रियमाणेन केनचिदवश्यं भवितव्यम् । कुतः ?

---

1. मी. वा. 2. 1. 1.

करोतिः क्रियमाणेन न कश्चित् कर्मणा विना ।
भवत्यर्थस्य कर्ता च करोतेः कर्म जायते ॥
नित्यञ्च भवनं यस्य यस्य वा नित्यभूतता ।
न तत्स्यात् क्रियमाणत्वं खपुष्पाकाशयोरिव[1] ।

य एव हि वृत्तभवनःसम्भावितभावनो वाऽन्येन प्रयुज्यते स एव क्रियमाणत्वेन ऽवधार्यते, नान्यः

करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः ।
भविता तमपेक्ष्याऽथ प्रयोज्यत्वं प्रपद्यते ॥

प्रयोज्यकर्तृकैकान्तव्यापारप्रतिपादकाः ।
ण्यन्ता एव प्रयुज्यन्ते तत्प्रयोजककर्मसु ॥

भावयति छेदयति इत्याद्याः ।
शक्तयः सर्वभावनां नानुयोज्याः स्वभावतः ।

तेन नाना वदन्त्यर्थान् प्रकृतिप्रत्ययादयः ॥

एवं करोत्यर्थद्वारेण सर्वाख्यातेषु भावयत्यर्थसिद्धिः ॥

तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः ।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥

अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते[1] ॥

तत्रार्थभावना पुरुषस्य सामान्यविशेषात्मकव्यापाररूपा सामान्यावगमपूर्वको व्यापारविशेषावगमश्च । कर्ता च व्यापारवान् भावनाव्यापारानुपपत्तिगम्यः । स यत्र प्राधान्येन गम्यते, तत्र तत्सङ्ख्या वचनार्थो यथा 'करोति' इत्युक्ते एक इति लभ्यते । यत्र कर्म प्राधान्येन गम्यते पच्यत इत्यादौ, तत्र कर्मसङ्ख्यैव वचनार्थः । कर्ता तु देवदत्तेन इत्यादितृतीयया गम्यते, न तत्सङ्ख्या वचनार्थः । यदा हि सर्वाख्यातवर्तिनी करोतिधातुवाच्या पुरुषव्यापाररूपा भावनाऽवगता भवति तदा तद्विशेषाः सामान्याख्यात-

1, मी. वा. 2. 1. 1 2 मी. वा. 2. 1. 1.

व्यतिरिक्तशब्दविशेषाभिधेया विधिप्रतिषेधभूतभविष्यद्वर्तमानादयः प्रतीयन्ते। तथा च सर्वत्र सामान्यतः करोत्यर्थोऽवगम्यते। किं करोति? पचति। किमकार्षीत्? अपाक्षीत्। किं करिष्यति? पक्ष्यति किं कार्यं? पचेत्, किन्न कुर्यात्, न पचेत् इति।

तथाऽर्थात्मिकायां भावनायां लिङादिशब्दानां यः पुरुषं प्रति प्रयोजकव्यापारः स द्वितीयः शब्दधर्मोऽभिधा भावना विधिः इत्युच्यते, सा च शाब्दी भावना। शब्द-कर्तृकार्थज्ञानभाव्यनिष्ठा शब्दज्ञानकरणिका सम्बन्धज्ञानसंस्कारेतिकर्तव्यताका सर्वशब्दा-नामविशेषवती। लिङादिशब्दे तु भिद्यते। सा हि लिङादिकर्तृकार्थभावनात्मकपुरुष-प्रवृत्तिलक्षणभाव्यनिष्ठा स्वज्ञानकरणिका स्तुतिनिन्दार्थवादादिज्ञानेतिकर्तव्याताका च समाश्रीयते। लिङादीनां विधिविवक्षया प्रयुज्यमानानां चेतनविषयप्रयोगत्वात् पुरुष-प्रयत्नः पुरुषार्थभाव्यनिष्ठो धात्वर्थकरणको लोकवेदोचितेतिकर्तव्यताकोऽर्थभावनालक्षणः करोत्यर्थोऽभिधेयः।

तत्र स्वाभिधेयार्थभावनाज्ञानजनको लिङादिव्यापारः स्वाभिधेयार्थभावनामप्युत्पाद-यति इति भेदः। कथं? लिङादिश्रवणानन्तरं प्रवृत्तिदर्शनात् शब्दमात्रस्यागृहीसम्बन्धस्या-प्रवर्तकत्वात् प्रवृत्तिहेतुं कञ्चिदर्थमभिधाय शब्दः प्रवर्तयति इति गम्यते। तत्र शाब्द-भावनातिरिक्तकार्याद्यभिधाने शाब्दभावनाभिधाने च कल्पनागौरवात् तामेवाभिधाय अर्थ-भावनां प्रवृत्तिं जनयति इति परिशेषार्थापत्तिभ्यां कल्प्यते। ततश्चार्थभावना भाव्यनिष्ठा शब्दभावना केवलं तदर्था न भाव्यनिष्ठा, प्रवृत्तिजनकत्वस्य प्रमाणसिद्धत्वात्। अभिधान-जन्यं शब्दभावनाविषयज्ञानं प्रवर्तकज्ञानत्वात् प्रवृत्तिलक्षणभाव्यनिष्पादनद्वारेण शब्द-भावनायाः करणतामश्नुते। अंशत्रयसहितार्थभावनाविषयस्तुतिनिन्दार्थवादविज्ञानस्यापि प्ररोचनद्वारेण प्रवृत्तिहेतुत्वात् शब्दभावनां प्रति इतिकर्तव्यतात्वावधारणाभावे कथं प्रवृत्तिजनकत्वम्। स च परिशेषार्थापत्तिभ्यां स्वाभिधेयमनुवदति। तदेवमंशत्रयसहिता शब्दभावना शाब्दव्यवहारे प्रवृत्तिहेतुः।

अथ शब्दभावना कर्तुः स्वात्मनि प्रवृत्तिहेतुतया प्रतीयते न प्रतिपत्तिपर-शब्दार्थतया साऽनुमीयेत। ततस्तस्याः शब्दार्थत्वावधारणाभावे कथं प्रवृत्तिजनकत्वम्। न च परिशेषार्थापत्तिभ्यां स्वाभिधेयाभिधानमवगम्यते; लोकसिद्धकार्यानुमानेनैवान्यथा-सिद्धेः, एकस्य शब्दस्य शब्दार्थभावनाभिधेयद्वयकल्पनागौरवाच्च। अतो न भावनावादो युक्तः।

**अत्रोच्यते**—स्तनन्धयस्यापि "एहि स्तनं पिब वत्स" इति जननीवचनमाकर्णयतो यद्ययं शब्दो मां स्तनपानं प्रति प्रयोजयति इति विज्ञानं नाभविष्यत् नाकरिष्यत् प्रवृत्तिमपि इति शब्दभावनेति विशेषनामापरिज्ञानेपि स्वरूपावधारणस्यानपवादात्। कार्यं च प्रेरणैव चेन्न विवादः। प्रवृत्तिलक्षणं च कार्यं प्रेरणसापेक्षमेव। प्रेक्षावतः शब्दव्यापारप्रवृत्तिभ्यां विलक्षणकार्यस्य बालेनाविज्ञातत्वाच्च पर्यनुयोगः तवैवाऽयम्। प्रेरणासामर्थ्याच्चावगम्यमानमिष्टसाधनं न वाक्यार्थः। तदाहुर्**विधिविवेके मण्डनमिश्राः** :—

"साधने पुरुषार्थस्य सज्जिरन्ते त्रयीविदः।
बोधं विधौ समायत्तमतः स प्रविचिन्त्यते ॥"[1]

इति। "अनुमेया तु कर्तुरिष्टाभ्युपायता"[2] इति **उदयनेना**प्युक्तत्वाच्च। न च वक्तुरभिप्रायो विधिः, 'कुरुष्व' इति शब्दोपात्तप्रेरणापरिहाण्या तदनुमेयाभिप्रायविधिकल्पनाऽसंभवात्। अतःप्रेरणायाः प्रमाणसिद्धत्वात् नाभिधेयद्वयकल्पनागौरवम्। अतो भावनापक्ष एव रमणीयः।

ननु शब्दभावना नाम शब्दस्वरूपमेव इत्यनुपपन्नम्, भावार्थतया हि प्रमाणत्वात् अनियमात्प्रवृत्तेः संविदाश्रयात् समभिव्याहृतेः शाब्दो न विधिः, कार्यकल्पनात् प्रमाणं हि शब्दः प्रतिज्ञायते—चोदनालक्षणोऽर्थो धर्म इति। बोधकं च प्रमाणमबाधितानधिगतासन्दिग्धार्थप्रमाजनकम्। तत्र प्रवृत्तेर्हेतुं कञ्चनार्थातिशयमवगमयन्नेव शब्दश्चोदनार्थत्वेन प्रमाणतामश्नुते। शब्दस्वरूपविविवादिनस्तु मते स्वयमेव प्रवृत्तेरप्रमायाः कारकः स्वां प्रमाणतामपजह्यात्।

कथं तर्हि "चोदनेति क्रियायाः प्रवर्तकं वचनम्" इति च "विधिना त्वेकवाक्यत्वात्" इति च शब्दस्यैव विधित्वोपदेशः, उच्यते; विध्यभिधायकत्वाच्छब्दोऽपि तथा व्यपदिश्यत इति। शब्दस्वातन्त्र्ये च पुंसः प्रवृत्तौ, नियोगतोऽवश्यप्रवृत्तिः स्यात् तथा च "अकुर्वन् विहितं कर्म"[3] इति धर्मसूत्रकाराणां च वचनम् निर्विषयं स्यात्।

---

1. विधिवि. p. 1
2. न्या. कु. 5 15.
3. मनु. 11. 44.

न हि तदानीं बलवदनिलसलिलौघनुद्यमानस्येवेच्छाऽपि तत्र प्रवृत्तिं प्रति पुरुषस्य । अतोऽविषयादौ प्रवृत्तेरनियमो न स्यात् । ज्ञापकश्च स्वरूपतत्कर्मसम्बन्धविषयज्ञानमपेक्षते, न तु कारकः। लिङादिस्वरूपं च प्रवृत्तेः कारकम्। ततो वाय्वादिनुद्यमानस्येव प्रवृत्तिविषयादिसंविदाश्रयणं न स्यात्। न चाभिधायकत्वेनाज्ञापकस्य केवलं कारकस्य शङ्खध्वनेः प्रवर्तितव्यम् इत्युपयुक्तस्वरूपसंबन्धसंविद एव प्रवर्तन्ते नेतर इति तत्र व्यभिचारः।

अनभिधायकोऽपि शङ्खध्वनिर्न प्रवृत्तौ कारकः अपि तु प्रवृत्तिहेतुमभिप्रायविशेषमनुविधेयस्यावगमयन् ज्ञापक एव इत्यव्यभिचारात्। न च प्रवृत्तिकारकोऽपि लिङादिः प्रवृत्तिविषयमवगमयति; प्रबलपवनेरितस्येव परतन्त्रप्रवृत्तौ वेदस्यानङ्गत्वात्। न च कारकोऽपि प्रायेण अहिदंशः ज्ञानमपेक्षत इति व्यभिचारः; शङ्काविषेणापि मरणदर्शनेन विज्ञानस्यैव तत्र कारणत्वात्। बालादीनामपि प्राग्भवीयवासनाप्रबोधादहिदंशविज्ञाने सत्येव मरणम्। प्रत्ययमात्रात् प्रकृतिमात्राच्चार्थप्रतीतेरनुत्पत्तेः प्रकृतिप्रत्यययोः सहाभिधानात् समभिव्याहृतिः स्यात्, नान्यथा;

तथा हि—प्रकृत्यर्थानुगताद्वा एको द्वौ बहव इति प्रकृत्यर्थद्योतनाद्वा ? यथा कुमारी इति ङीप् प्रत्ययः स्त्रीत्वं द्योतयति। प्रकृत्यर्थसम्बन्ध्यर्थान्तराभिधानाद्वा ? यथा पचति पाचक इति। अवाचकस्य तु लिङादेः प्रवृत्तिकारकस्य न समभिव्याहारो युक्तः, सहाभिधानाभावात्।

अपि चाश्रुतफलेषु स्वर्गादिफलाध्याहारः, आरादुपकारकल्पना समिदादौ, श्रुतानामपि पुरुषविशेषणतया स्वर्गादीनां फलत्वाध्यवसाय इति सर्व एष महिमा विधेः। स च शब्दस्य विधिभावेऽनुपपन्नः। न हि तदा शब्दादनवकल्पमानं फलं क्रतूपकारं च विना किञ्चिद्गम्यते, यच्छब्दादवगतं फलादिना विनाऽनुपपद्यमानं फलादिकल्पनाबीजं भवेत्। तस्माद्धेतुपञ्चकान्न लिङादिशब्द एव विधिः।

अथाभिधाभावनामभिधायाः शब्दस्य भावनां प्रवर्तनां लिङादयः प्रतिपादयन्ति। एवं च कारकत्वेन यदप्रामाण्यमासञ्जितम्, तत् स्वकार्यप्रवर्तनाज्ञापकत्वेन परिहृतम्। इच्छायाश्चावश्यंभावनियमाभावात् प्रवृत्त्यनियमोऽप्युपपन्नः, प्रवृत्तिहेतुं बुद्ध्वा पुरुषस्येच्छया प्रवृत्तिः। तेन ज्ञापकत्वे सति संविदाश्रयणमप्युपपन्नम्। प्रकृत्यर्थानुरक्तप्रवर्तनाभि-

धायिना च प्रत्ययेन सह प्रकृतेः समभिव्याहारविशेषोऽप्युपपन्नः। शब्दव्यापारश्चाभिहितः इच्छासहकारी प्रवर्तयति इति कार्यकल्पनाऽप्युपपन्नेति।

**नैतत् सारम्**; तथा हि—

" न प्रयोगानिरूप्यत्वाद्वैयर्थ्यात्पूर्वदोषतः।
अप्रवृत्तेः फलायोगाद्रूपोक्ते व्यापृतिश्रुतेः॥"

श्रुतेर्लिङादिशब्दस्य व्यापृतिः प्रवर्तनालक्षणो व्यापारो विधिर्न भवति, कुतः? प्रयोगानिरूपणात्। न हि प्रेषणाऽध्येषणाऽभ्यनुज्ञानलक्षणः शब्दस्य प्रयोगो व्यापारो निरूप्यते, शब्दोच्चारणानन्तरमुपलभ्यमानस्यापि तस्य पुंधर्मत्वात्। न च वाच्यम्—यथा कारीषोऽग्निरध्यापयति इत्यध्ययनप्रवृत्तौ समर्थं शीतापनोदमध्येतुर्भावयन् कारिषाग्निरध्ययने प्रवर्तयति पुरुषम्, एवं लिङादयोऽपि प्रवृत्तिसमर्थं कञ्चिदुपकारं पुरुषस्याचरन्तः स्वव्यापारेण प्रवर्तयिष्यन्ति इति; प्रमाणान्तरेण तदुपकारानुपलब्धेः; शब्दस्य च सम्बन्धबोधसापेक्षत्वात् तत एव सम्बन्धिनोऽर्थस्य प्रतीतौ परस्पराश्रयप्रसङ्गात्।

स्यान्मतम्—पवनादिरिव लिङादिः प्रेरयति पुरुषं; किं मानान्तरव्यापारग्रहणेन इति मैवम्; तथा हि सति तद्वदेव प्रवर्तकत्वोपपत्तेः व्यापाराभिधानस्य वैयर्थ्यात्, पूर्वोक्ताप्रमाणत्वादिदोषप्रसङ्गाच्च। शब्दप्रयोगे तद्व्यापारे सत्यपि न पुमान् प्रवर्तते। न हि सर्वस्मिन् प्रवर्तयति प्रवृत्तिः प्रेक्षावताम् अपि तु अनुविधेये। न चार्थानर्थप्राप्तिपरिहाराद्यनुविधानकारणं स्वाम्यादाविव शब्दे समस्ति। न च फलप्राप्तिरनुविधानकारणम्; तथा सति फलात् प्रवृत्तेः प्रवर्तनावैयर्थ्यात्। स्वव्यापारेण कृतेनावभासितेन शब्दे प्रवर्तयितरि फलावगमायोगाच्च। आप्ते हि सप्रत्ययक्रिये हितकामे प्रवर्तयति अन्यथानुपपत्त्या फलावगमः।

अथ शास्त्रत्वेन फलावगमः, शासनाद्धि शिष्याणां शास्त्रमुच्यते। शासनं च सङ्केतसमारोपरूपव्यवच्छेदेन हिताहितप्राप्तिपरिहारोपायतत्त्वप्रज्ञापनम्। ततश्च न शास्त्रत्वादेव पुरुषश्रेयोऽधिगतिः, प्राक् फलावगमाच्छास्त्रत्वादेव सिद्धेः, फलावगमाच्च शास्त्रत्वे परस्पराश्रयप्रसङ्गात्। लिङादिव्यापारे च विधौ लिङादिस्वरूपाभिधानप्रसङ्गः।

यदि लिङादिस्वरूपं नाभिधीयते, ततस्तत् नावगतम् इति तद्विशिष्टव्यापाराप्रत्ययात् तद्रूपोक्तिप्रसङ्गः विनाभिधाभावनां विधिरूपाम्। अथार्थाभिधाव्यापार एव शब्दस्य

भावनाविधिर्लिङाद्यर्थ इति, तस्य च व्यापारस्यार्थसम्बन्धेन फलप्रसवोन्नीतसद्भावस्य प्रवृत्तिज्ञानं प्रति सामर्थ्यमात्रमुन्नेयम् । नैवमपि सर्वशब्दानां यथास्वमभिधेयेष्वभिधा-व्यापार इति घटादिशब्देभ्योऽपि प्रवृत्तिप्रसङ्गात् । न च लिङाद्यर्थभूतः प्रैषादिरेव विधिः, अपौरुषेये वेदे तदसम्भवात् । अतो न भावनानिर्णयः ।

**अत्र वदामः** :—शब्दस्य प्रवर्तनालक्षणो व्यापारः प्रैषादिः न सम्भवति अचेतनत्वात् इत्येतत्तावन्न सम्भवति । प्रयोज्यचेतनद्वारेण तत्सम्भवात् । अन्यथा लिङादेर्विधायकशब्दता न स्यात् । वदन्ति स्म च **भट्टाचार्याः** :—

"यद्यपि चाचेतनत्वान्न लिङादिष्वेवंविधप्रयोजकत्वं सम्भवति, तथाऽपि पुरुषस्य प्रयोजकस्य प्रयोज्यत्वानुपपत्तेः तद्गतचैतन्यद्वारेण विधायकानां प्रयोजकता । यदि चैवं न कल्प्येत, नैवैष विधायकव्यपदेशो भवेत् । तद्गतचैतन्यद्वारेण इत्येवं वदद्भिश्च शब्दप्रयोगे तद्व्यापारे सत्यपि पुमान्न प्रवर्तेत स्वाम्यादाविव शाब्दानर्थप्राप्ति-परिहाराद्यनुविधानकारणाभावात् इति चोद्यमपास्तम् । दृश्यते चाधिकारिणो विधायक-शब्दश्रवणमात्रात् स्वास्थ्यप्रच्युतरूपा प्रवृत्तिः, न शब्दमात्राकर्णनात् । तेन गम्यते प्रवर्तनाव्यापारः । न च प्रवर्तनाव्यापारमुत्पाद्य तदभिधाने तदाधारस्वरूपाभिधानम्, तस्य शब्दैकगम्यत्वेन सङ्गतिग्रहात् बोधकत्वम्, बोधकत्वे च सङ्गतिग्रह इति परस्पराश्रयश्च स्यात् इति वचनीयम् ; अर्थाबोधकत्वेऽपि श्रोत्रादेः शब्दादिबोधकत्वाङ्गी-कारात् शब्दस्वरूपस्य च प्रमाणान्तरादप्यवगमात्, परस्पराश्रयस्य च नियोगादिवादेऽपि तुल्यत्वात्, यथाकथञ्चित् समाधानस्यास्मन्मतेऽपि सम्भवाच्च । अतः प्रवर्तनाव्यापारस्य भावनात्वं युक्तम् ।

अथ कर्मप्रवर्तकमभिमतसाधनताज्ञानं तस्य प्रवर्तना प्रयोजकव्यापारः, तया खल्वभिमतसाधने कर्मणि स्वयं दुःखात्मकेऽपि प्रवर्त्यते ; नैतत् । प्रवृत्तिकर्तुः प्रयोजकः प्रवर्तकः सिद्धश्च स भवति । तदिह सिद्धं चेत् कर्मप्रवृत्तेः प्राक् प्रवृत्तेर्भावनया भाव्यम् । न चात्र सिद्धं गमनस्य भानं भवितुमर्हति ; असिद्धं न प्रवर्तकम् । सत एव क्रियातिरिक्तो नियोगो न प्रवर्तकः । तस्यापि साध्यैकस्वभावत्वाश्रयणाद्नियोगप्रत्ययसिद्ध एव प्रवर्तकः । सोऽपि विषयरूपनियोगानिरूपणात् कुतस्त्यः । तस्यापदार्थत्वे वाक्यार्थत्वानुपपत्तेः पदार्थस्यैकस्येतरपदार्था[न्वयस्यैव तथात्वात्]नाऽप्यसौ वाक्यार्थः । नापि पदार्थः मानान्तरसिद्धत्वाभावेन सङ्गतिग्रहाभावात् लोके । वेदे च 'ऐन्द्र्या गार्हपत्यम् उपतिष्ठते'

इति श्रुत्या लिङ्गबाधेन विनियोगे इन्द्रशब्दस्य फलैश्वर्यादिगुणात् गार्हपत्ये वृत्तिः, सहस्रसंवत्सरे कर्मणि च मनुष्यस्याधिकारिणस्तावज्जीवनासम्भवादहर्वाची संवत्सरशब्दः ।

अथास्ति तादृशो लिङादिपदस्य सामर्थ्यातिशयो येन गृहीतसम्बन्धमपि कतिपयश्रवणं सहकारि जनयति विलक्षणविषयमवबोधं, कतिपयश्रवणसमनन्तरं तत्सद्भावात् । न चान्ये गृहीतसङ्गतयः शब्दाः स्वार्थमभिदधति इत्यनेनापि तथा भवितव्यम् । मा भूदन्येषां न साक्षात्कार्यार्थता इत्यस्यापि तथाभावः ।

नैवं । प्रथमश्रवणाद्धि सम्बन्ध्यन्तराग्रहे शतशोऽपि श्रुताल्लिङादेः विलक्षणविषयबोधानुत्पत्तेः । व्यवहारदर्शनस्य च प्रसिद्धार्थसम्बन्धिदर्शनगर्भतयोत्पत्तेश्च नादृष्टचरसामर्थ्यातिशयकल्पना औत्सर्गिकशब्दमात्रवर्तिसंबन्धापेक्षापवादेन असति बलवद्बाधकोपनिपाते युज्यते ।

अथ मध्यमवृद्धव्यवहारलिङ्गेन बालस्यात्मोपमया लिङादिनां सामान्येन कार्याभिधायिताबुद्धिः । न च श्रेयस्साधनतैव कार्यता परस्परपरिहारस्थितिलक्षणविरोधाधारत्वात् । न ह्यस्ति सम्भवो यदेव समीहितं प्रति साधनत्वं, तदेव कृतिं प्रति साध्यत्वम् इति, सुखस्य कृतिसाध्यस्यापि समीहितसाधनत्वाभावात् । तदुक्तम् :—

"कार्यता कृतिसाध्यत्वं फलसाधनता पुनः ।
करणत्वं फलोत्पादे ते भिद्येते परस्परम् ॥"

इति । तच्च "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिवाक्येषु स्वर्गकामस्य नियोज्यस्य क्षणभङ्गुरक्रियायां कार्यधियोऽसम्भवादतिरिक्तं क्रियातः कार्यमवगम्यते; तदेव च लोकेऽपि कार्यम् । न च लोके प्रैषादयः कार्ये उपाधय एव, न तु शब्दार्थाः । त एव चोपाधयोऽत्र तटस्थाः प्रयोगदर्शनमात्रेण शब्दार्थविशेषे व्यवस्थापयन्ति । यथा दृतिहरिपदाभिधेयत्वे पशुत्वमुपाधिः । तथा हि—पशुत्वं तटस्थमेवाभिधानानिवेशि सत् दृतिहरिपदार्थत्वं पशावेव नियच्छति । एवं प्रैषादयोऽप्यभिधानाविनिवेशिन एव कार्यं विशेषे व्यवस्थापयन्ति । न पुनरभिधेया इति सम्बन्धग्रहणसम्भवात् । उत्कृष्टप्रेरितस्य प्रवृत्तेः समकनीयसां प्रवृत्त्यपेक्षया भेदात् सः प्रैषादिव्यपदेशभाग् इति । 'नाध्येषणं हानम्' इत्यौपाधिकभेदस्योक्तत्वाच्च । कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन् असौ नियोग इति मीमांसानिष्णातैरभिधीयत इति च ।

**अत्र समाधिः** :—सत्यम्; कर्तव्यताभिधायिनो लिङादयः कर्तव्यता च क्रियाया एव नापूर्वस्य लोकादिनाऽवधार्यत्वात् शब्दसामर्थ्यस्य। अत एव च कार्यतया प्रवृत्तिहेतुत्वेन स्वात्मनि भागान्तरेण विदितत्वात् न अपूर्वस्य; तस्य मानान्तरागोचरत्वात्। उपाधयश्चेन्मानान्तरसिद्धाः नैकस्तेष्वन्वयी प्रवर्तको नियोगाख्यःप्रमाणान्तरागोचरः। पशुत्वोपाधिप्रयुक्तइतिहरिशब्दोऽर्थात् न मानान्तरागोचरः पशुत्वस्यापि तदापत्तेः। न च परमते आनन्दादिवद्विशिष्टस्य मानान्तरगोचरत्वम्, केवलस्य शब्दैकवेद्यत्वं युक्तम्; आनन्दादिवदपूर्वस्य लोके सामान्यतोऽप्यप्रसिद्धेः। ततः प्रामाणान्तरगोचरत्वादुपाधीनामेव लिङादिवाच्यत्वज्ञानम्। तेषामेव च शब्दार्थता विदितसङ्गतित्वात्।

**अथ** वेदे क्रियातिरिक्तं कार्यं तथाऽपि तस्यैव लिङाद्यर्थता, न पुनः क्रियाया अपि लौकिक्या इति कुतस्त्यम्? अनेकार्थत्वस्यानेकशक्तिगौरवेणान्याय्यत्वात्। लक्षणयाऽपि च क्रियायां लौकिकस्य लिङादिप्रयोगस्योपपत्तेः क्रियाकर्तव्यतानान्तरीयकत्वात् अपूर्वकर्तव्यताया असाधितायाः क्रियायाः तत्साधनत्वानुपपत्तेः लौकिकप्रयोगाविरोधात्। अपूर्वकर्तव्यतायास्तु लोके क्रियाकर्तव्यतानान्तरीयकत्वानुपलब्धेर्वैपरीत्यानुपपत्तेः, अत्यन्तप्रयोगाभ्यासाच। लाक्षणिकस्यापि वाचकत्वाभिधानादपूर्वाभिधाननियमसिद्धिः इति चेत्; न, अनेकार्थत्वमनेकशक्तिकल्पनागौरवादन्याय्यम् चेत् तर्ह्यपूर्वाण्यनेकविधिप्रभावाद्भवन्ति नाना इति कथमैकार्थ्यं लिङः? अथ कृतिव्याप्यतायाः प्रवृत्तिनिमित्तस्य सर्वत्राविशेषात् रूपभेदेऽपि अपूर्वाणामेकैव शक्तिः, तर्हि क्रियाया अपि कर्तव्यतारूपाया अभिधानाय न शक्त्यन्तरापेक्षा लिङः।

**अथ** यद्यपि कर्तव्यताशब्दसाम्यम्, तथाऽपि कृतिं प्रति तव मता कर्तव्यता नापूर्वस्य, तदुद्देशेन पुरुषप्रयत्नस्य कृतेः अप्रवृत्तेः। सैव च लिङादिप्रवृत्तिनिमित्तम्। न त्वेवंरूपा क्रियाकर्तव्यता, तस्याः दुःखरूपतया तां प्रति प्रधानभावानुपपत्तेः; ओदनाद्यर्थप्रवृत्तकृतिव्याप्यतालक्षणा स्वस्य ओदनादिहेतोः कर्तव्यता; सा चान्यत्वान्न शक्त्यन्तरमन्तरेण लिङादिगोचर इति तन्निर्विशेषभावात् क्रियाकर्तव्यतायाः। न खल्वपूर्वमुद्दिश्य कृतिः प्रवर्तितुमर्हति, असुखत्वेनेच्छापूर्वककृतिधर्मत्वानुपपत्तेः। इष्टादिसाधनत्वकल्पनयोद्देश्यत्वं च क्रियाया अपि समानम्। उद्देश्यत्वं च फलतत्साधनयोरेव। प्रसिद्धापूर्वावान्तरव्यापारायाः क्रियाया एव स्वर्गादिसाधनत्वोपपत्तेश्च न कापि नियोगकल्पना। तदाहुः :—

"फलाय विहितं कर्म क्षणिकं चिरभाविने ।
तत्सिद्धिर्नान्यथेत्येवमपूर्वमपि गम्यते ॥

श्रुतार्थापत्तिरेवैका प्रमाणं तस्य चेष्यते ।
शब्दैकदेशभावाच्च स्वार्थेष्वागम एव नः ॥"[1]

येन वाक्येन यागात्स्वर्गो भवति प्रयाजादिभ्यश्च प्रधानोपकार इत्येतच्चोद्यते, नावश्यं विनष्टानामप्येषां कापि स्वर्गोत्पादनशक्तिरस्ति इत्यभ्युपगन्तव्यम् ।

"लौकिकं चापि यत्कर्म फले कालान्तरोद्भवौ ।
तत्रापि शक्तिरेवास्ते नत्वपूर्वमिहोच्यते ॥

यागादेव फलं तद्धि शक्तिद्वारेण सिद्ध्यति ।
ब्रह्मशक्त्यात्मकं वा तत्फलमेवोपजायते ॥"[2]

इति । "अग्निहोत्रं जुहुयात्स्वर्गकाम" इत्यत्र क्रियायाः सामान्येन फलसाधनत्वेऽवगते सन्निहितस्वर्गः फलविशेषश्चेत्र संबन्ध्यते । न च स्वर्गकामस्योपदेशबलात् यागस्वर्गयोः साध्यसाधनत्वेनान्वयकल्पना । "दण्डी प्रैषानन्वाह" इतिवत् स्वर्गकामपदं विशेषणस्वर्गपरं वाऽधिकारिव्यावर्तकम् वा इति संशयेऽर्थिन उपदेशा इत्युत्सर्गाद्विशिष्टाधिकारिप्राप्तेर्विशेषणपरत्वनिश्चयात् । अतो भावनापक्ष एव सूत्रकारादिभिरपि निर्णीतः । तथा हि—"**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्, तस्मादनित्यमुच्यते**"[3] अयमर्थः :—

"सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः ।
विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते ॥"[4]

धर्मे सामान्यतः प्रामाण्ये सिद्धे समस्तस्य वेदस्य विध्यर्थवादमन्त्रनामधेयात्मकस्य यथाविभागं धर्मं प्रत्युपयोगः प्रतिपाद्यते । तत्र पूर्ववाद्यभिप्रायः :—"चोदनालक्षणोऽर्थो

---

1. तन्त्र. वा. 2. 1. 2.
2. तन्त्र. वा. 2. 1. 2.
3. जै. सू. 1. 2. 1.
4 तन्त्र. वा. 1. 2. 1.

धर्म" इत्युपक्रमात् "तस्य ज्ञानमुपदेशः" तस्य धर्मस्य ज्ञानम् ज्ञायतेऽनेन इति प्रमाणं उपदेशः चोदना—

"चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः"[1]

इति वचनात्। **तद्भूतानां क्रियार्थेन समाम्नायः**[2]। तत्र वेदे भूतानां सिद्धवाचिपदानां कार्यवाचिपदेन समाम्नायः सम्बन्ध इत्युपसंहारात् विधिप्रतिषेधयोरेव प्रामाण्यं प्रतिपादितम्। न च तद्व्यतिरिक्तशब्दगम्यत्वं धर्माधर्मयोः नाप्यनधिगतार्थबोधनं मुक्त्वा शब्दव्यापारोऽस्ति। अतश्च यावन्त्येव साध्यसाधनेतिकर्तव्यतावाचित्वेन पदानि विधिप्रतिषेधान्तर्गतानि तेषां भवतु प्रामाण्यम्; यानि त्वतिरिक्तार्थानि अर्थवादमन्त्रनाधेयानुपातीनि "सोरोदीत्" "इषेत्वोर्जेत्वा" "उद्भिदा" इत्येवमादीनि तानि सत्यप्यपौरुषेयत्वे स्वार्थाभिधानसामर्थ्ये च धर्माधर्मयोरप्रमाणम्। **अतदर्थत्वात्** यथाश्रुतगृहीतानां तावत् प्रतिपत्त्यनुपलब्धेः प्रसिद्धमेवातदर्थत्वम्। अथ कयाचिच्छब्दवृत्त्या तादर्थ्यम् कल्प्येत प्रतिपत्त्यनुपलब्धेः (प्रसिद्धमेवातदर्थत्वं ते।) एवमपि व्यवस्थाहेत्वभावान्न धर्माधर्मयोरवधारणं स्यात्। यदेव हि वाक्यगृहीतम्, तदेवाध्याहारविपरिणामादिभिर्यथेष्टं कल्पयितुं शक्यते।

तथा "सोरोदीद्" इत्येतदेव तावत् वाक्यं विशिष्टपुरुषचरितोपन्यासद्वारा रोदनकर्तव्यतापरम्। यद्वा महतामप्येवंविधाः प्रमादा भवन्ति तस्मात् प्रयत्नेन वर्जयितव्यम् इति। अतो विधिप्रतिषेधयोः अस्फुटत्वात् धर्माधर्मत्वेन निर्णेतुं शक्त्यभाव इति।

अत्र **सिद्धान्तः**। [3]"**विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः**"। सकलस्य तावद्वेदस्य "स्वाध्यायोऽध्येतव्य" इत्यध्ययनभावना विधीयते। तत्र 'किं भावयेत्?' इत्यपेक्षायाम्" अध्ययनं इत्यवगतमपि पुरुषप्रवर्तनशक्तियुक्तेन विधायकेनापुरुषार्थसाध्यायां भावनायां प्रवर्तनाशक्तिप्रसक्तेः तदंशान्निराक्रियते। ततश्चाध्ययनेन इत्यविरोधात् सन्निधेश्च करणांशे निविशते। तेन किम् इत्यपेक्षते। यच्छवयत इत्युपबन्धादक्षरग्रहणम् इत्यापतति।

---

1. श्लो. वा. 1. 5. 11.
2. जै. सू. i. 1. 25.
3. जै. सू. 1. 2. 7.

तस्याप्यपुरुषार्थत्वात् तेन किम् इति पदावधारणम् इत्युपतिष्ठते । तेनापि पदार्थज्ञानम् । तेन च वाक्यार्थज्ञानम्, तेन चानुष्ठानम्, अनुष्ठानेन स्वर्गादिफलप्राप्तिः इति । एतावति प्राप्ते निराकाङ्क्षितं भवति । एवं सर्वविधीनां प्राक् पुमर्थलाभादपर्यवसानम् । अक्षरावाप्तिरेवाध्ययनविधिफलम् इति अत एव नास्थेयम् । न च स्वर्गादिफलोऽसौ साक्षादेव,

न खलु सहसैव विधिदर्शनात् स्वर्गाद्येव फलं कल्प्येत । योग्यतया हि यस्य यत्रानन्तरभाविनि व्यापारो लक्ष्यते, तदेव तस्य कार्यम् इत्यवधार्यते । तत्र यदि तावत् तदनुसारेणैव कियत्यप्यध्वनि फलमासाद्यते ततो नान्तरा कल्पनमर्हति, पारम्पर्यप्रयोजनेनापि श्रुतविध्यन्यथाऽनुपपत्तिलक्षणार्थापत्त्युदयात् ।

एतेनैतदपास्तम्, "स्वाध्यायाध्ययनेन स्वर्गं भावयेत्" इति वाक्यविपरिणाम इति । यदाहुः :—

"न च अक्षरावाप्तिपर्यन्त एव विधिव्यापारः, साक्षादपुमर्थत्वं भवदभिमतार्थावबोधस्यापि तुल्यम् । अन्यथाऽध्यापनविधेरेव स्वर्गादिपर्यन्तं व्यापारे उत्तरविध्यानर्थक्यम् इति वाच्यम्; आप्तवाक्यवत् प्राप्तमात्रस्यापुमर्थत्वात् । न च ब्रह्मयज्ञपारायणादिहेतुतया प्रयोजनम्, अवश्यकर्तव्यतालक्षणार्थावबोधाद्विना तस्याप्यसिद्धेः । न च पित्राद्युपदेशात् सन्ध्योपासनादिवत्तत्सिद्धिः प्रेक्षाकारिणो हि विहितदर्थप्रदर्शनमन्तरेण प्रवर्तयितुमशक्यत्वात् "स्वाध्यायोऽध्येतव्यः" इति विहिताध्ययनस्यार्थावबोधकत्वानुष्ठानादिपरम्परया फलवत्त्वम् तावत्; राजसूयादीनां च केषाञ्चित् वेदाधिकृतानामप्यनुष्ठानासम्भवात् तत्पाठः पाठार्थ एव स्यात् । अतस्तत्राध्ययनविधिरर्थवत्त्वानुपपत्त्या प्राणाग्निहोत्रे आस्यमाहवनीय इत्यादिसम्पादनात् तत्कर्मफलसिद्धिर्वक्तव्या" इति । वेदान्तिभिरपि स्वीकाराच्च ।

यत्र त्वनन्तरदृष्टं कार्यं न स्वयं पुरुषार्थो नापि पारम्पर्येण तमाप्नोति । यथा होमस्याहवनीयप्राप्तिः भस्मसाद्भावो वा तत्र तदतिक्रमेण कर्मण एव साक्षाददृष्टकल्पना । सर्वत्र चैतल्लक्षयितव्यम् ।

इह च लिङादियुक्तवाक्येषु द्वे भावने गम्येते—शब्दात्मिका, अर्थात्मिका च । अर्थात्मिकया अर्थवादा नापेक्ष्यन्ते । शब्दात्मिकया तु ग्रहीष्यन्ते । सा ह्येव

प्रवर्तते "भावयेत्" इति। तत्र लिङादीनां प्रयोजककर्तृत्वं, पुरुषः प्रयोज्यते। ननु किम्? इत्यपेक्षायां पुरुषप्रयत्नवर्तनम् इति सम्बध्यते।

अथवा योग्यतयैव लिङादिविषया क्रिया उच्यते, "प्रवर्तयेद्" इति। तत्र किम् इत्यपेक्षिते "पुरुषम्" इति सम्बध्यते। यद्यपि वाऽचेतनत्वाल्लिङादिष्वेवंविधं प्रयोजकत्वं न सम्भवति, तथाऽपि पुरुषस्य प्रयोज्यस्य प्रयोजकत्वानुपपत्तेः तद्गतचैतन्यद्वारेण प्रयोजकता। अथ केन इत्यपेक्षिते पूर्वसंबन्धानुभवापेक्षेण विधिज्ञानेन इति सम्बध्यते। कथम्? इति प्राशस्त्यज्ञानानुगृहीतेन इति। कुत एतत्? बुद्धिपूर्वकारिणो हि पुरुषा यावत् प्रशस्तोऽयम् इति न बुद्ध्यन्ते, तावन्न प्रवर्तन्ते, तत्र विधिविभक्तिरवसीदति तां प्राशस्त्यज्ञानमुत्तभ्नोति। तत्र पुरुषार्थात्मकफलांशे सर्वस्य स्वयमेवानुष्ठानं भवति इति प्रसिद्धत्वान्न वेदादुत्पद्यमानमपेक्ष्यते। साधनेतिकर्तव्यतयोस्त्वप्रवृत्तपुरुषनियोगाच्छास्त्रमेव प्राशस्त्यप्रतिपादनाया काङ्क्ष्यते। तत्पुनः केन क्रियेत इति साधनापेक्षा; सा यदि वा फलेन निर्वर्त्यते प्रशस्तोऽयं फलत्वात् इति।

अथवा विधिनैव सर्वदोषाशङ्काविनिर्मुक्तवेदविहितत्वात् इति। अथवा विशिष्टद्रव्यदेवतेतिकर्तव्यतायुक्तत्वात् इति। एवं च न प्ररोचनाऽन्यकृता कर्माङ्गम्। न वाऽर्थवादैः प्रयोजनान्तरं साधनीयं इत्यज्ञानसामर्थ्यात् उभयमतेन प्रतिषेधापेक्षितद्वेषसिद्ध्यर्थं निन्दापदसङ्गतिर्व्याख्याता, तत्रापि न द्वेषादृते निन्दा निवर्तते; द्वेषश्चाप्रशस्तप्रत्ययाधीनोत्पत्तिः।

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति॥"

"वेदः समुपबृंहण" इति च स्मरणात्। एवं भारतादिवाक्यान्यपि व्याख्येयानि। तेषामपि "श्रावयेच्चतुरो वर्णान्" इत्येवमादिविध्यनुसारेण पुरुषार्थान्वेषणात्। अक्षरादीन्यतिक्रम्य धर्मार्थकाममोक्षाधर्मानर्थदुःखसंसारसाध्यसाधनप्रतिपत्तिरूपो न परित्यागाङ्गभूतः फलम्। तत्रापि मोक्षधर्मादिषु केषुचित् साक्षात् विषयः। केचित् पुनः परकृतिपुराकल्परूपेणार्थवादाः। सर्वेष्वाख्यानेषु च तात्पर्ये सति "श्रावयेद्" इति विधेरानर्थक्यात् कथञ्चिद्गम्यमानस्तुतिनिन्दापरिग्रहः। तत्परत्वाच्च नातीवोपाख्यानतत्त्वाभिनिवेशः कार्यः वेदप्रस्थानात्। वाल्मीकिद्वैपायनप्रभृतिभिः तथैव स्ववाक्यानि प्रणीतानि। तत्र तु

विधिप्रतिषेधाः केचिद्वृत्तिमूलाः केचिदर्थसुखादिषु लोकमूलाः । तथाऽर्थवादाः केचिद्वैदिका एव; अपरे लौकिकाः; केचित्तु काव्यन्यायेन स्वयमेव रचिताः । सर्वे च स्तुत्यर्थतया वेदवदेव प्रमाणम् ।

इत्थमर्थवादानां प्रामाण्ये सिद्धे मन्त्राण्यपि चिन्त्यन्ते । **तदर्थशास्त्रात्**—स्वाध्यायाध्ययनविधिनैव मन्त्राः पुमर्थाय नीयन्ते । तथा हि—

दर्शपूर्णमासादिभिः क्रमप्रकरणाभ्यां यावत् संस्पृश्यते, तावत् सर्वमुपकारकत्वेन स्वीक्रियते मन्त्ररूपमपि । तत्र प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्ते । मन्त्राः पुनः कर्मानौपयिकार्थाभिधायित्वात् तेनांशेनानपेक्षिताः । स्तुतिविधिस्मृतीनां च प्रकारान्तरेण सिद्धिः इति प्रयोगवचनेनैषां रूपमेवाङ्गीक्रियते । स्वाध्यायकथनचोदनापि प्रत्यासन्नतरं मन्त्रस्वरूपमेव समर्प्य चरितार्थत्वात् न विप्रकृष्टम् यावद्गच्छति । तस्माद्रूपमेवाङ्गम् । तथा च तदर्थं शास्त्रादीन्युच्यन्ते । यथा खलु (नी)रोगाद्युपहतेन्द्रियस्य चक्षुरस्त्येव इति परैर्दृश्यते । परेण तु नीयमानमुपलभ्य न पश्यति इति ज्ञायते; तथा मन्त्ररूपमालोचयतामर्थप्रकाशनशक्तिबुद्धिः यद्यपि भवति, तथाऽपि परेण विनियोगं दृष्ट्वा स्वयं विनियोजकशब्दो नास्ति इति गम्यत इति; **एवं प्राप्ते सिद्धान्तः :—**

**अविशिष्टस्तु वाक्यार्थः** । मन्त्रोच्चारणं तावत् अर्थग्रहणेन कृतार्थीकृतम्, न साक्षात्क्रत्वङ्गतां प्रतिपद्यते अक्षराणाञ्च द्रव्यवदनितिकर्तव्यतात्वात् प्रकरणेनाग्रहणम् । एवं पदार्थज्ञानस्य वाक्यार्थप्रत्ययेन नैराकाङ्क्ष्यादग्रहणम् । वाक्यार्थप्रत्ययस्त्वकृतार्थः प्रकरणे विपरिवर्तमानः क्रियात्मकत्वात् प्रयोगवचनाकाङ्क्षितकर्मसमवेतानुष्ठास्यमानार्थस्मृतिफलत्वेनेतिकर्तव्यता भवति । तत्रादृष्टकल्पनानिमित्ताभावः । समाम्नानान्यथानुपपत्तौ हि तत्कल्प्येत । नोपपन्नेऽर्थवत्त्वे । यद्यपि च कल्पनावसरो भवेत् । तथाऽपि कामं वाक्यार्थप्रत्ययादेव । तच्चौपयिकार्थप्रतीतिनिराकाङ्क्षाद्वा स्यात् अवश्यं च दृष्टादृष्टयोः विनियुज्यमानस्य प्रमाणमुपन्यसितव्यम् । इह च प्रकरणाद्दृष्टार्थता स्यात् । लिङ्गाददृष्टार्थता ।

> " अर्थात्प्रकरणाल्लिङ्गादौचित्याद्देशकालतः ।
> शब्दार्थान् प्रतिपद्यन्ते न शब्दादेव केवलात् ॥ "

इति उक्तत्वात् ।

तत्र न प्रकरणम् अशक्येऽर्थे विनियोक्तुमर्हति इत्येकान्तेनैतदापतति यच्छक्नुयात्तन्मन्त्रेण कुर्यात् इति। न च असावदृष्टं शक्नोति इति लौकिकं वैदिकं वा प्रमाणं विद्यते। तस्मादुभयोर्लिङ्गप्रकरणयोर्दृष्टार्थप्रयोगेणैकवाक्यता। एवं च सति याज्ञिकप्रयोगप्रसिद्धेन मूलान्तरकल्पनाक्लेशो भविष्यति इति मन्त्राणामपि विध्येकवाक्यत्वेन प्रामाण्यम्।

नामधेयानां तदुच्यते—**उक्तं समाम्नायैदमर्थ्यम् तस्मात्सर्वं तदर्थं स्यात्**[1] उद्भिदादीनुदाहृत्य सन्देहः क्रियते —किमेते कञ्चिद्धर्मं प्रत्युपयोगं गच्छन्ति, उत न इति? किम् प्राप्तम्? आम्नायस्य क्रियार्थत्वादानर्थक्यम्। न ह्येते विध्यादिष्वन्तर्भवन्ति साध्यसाधनेतिकर्तव्यतानभिधायित्वात् तावच्चोदनाबाह्यत्वं, स्तुतिबुद्ध्यभावादर्थवादातिरेकः, कर्माङ्गद्रव्यदेवतादिप्रकाशयितव्यार्थाभावान्मन्त्रकार्यनिवृत्तिः। न च अन्यद्वेदेन प्रयोजनमस्ति इत्यप्रमाणम् एवंजातीयका इत्यवान्तरपूर्वपक्षं कृत्वोक्तम्।

सर्वस्य त्रिविभागत्वात् वेदस्योक्तेन हेतुना उद्भिदाद्यप्रमाणत्वानतिरेकात् न सिद्ध्यति यदा तदा तदर्थत्वयान्यतमार्थम् इति स्थितम्। तदा विचारः—किमर्थम् इति? न तावदर्थवादत्वं वाक्यशेषत्वाभावात्। कथं पुनरयं न वाक्यशेषो यावता वायुक्षेपिष्ठत्वादिवत् एकवाक्यताऽवगम्यते, नैतदस्ति; विधायकस्य हि यश्शेषः, स वाक्यशेषः सोऽर्थवादः, अयन्तु विध्युद्देशादेव नातिरिच्यत इति न वाक्यशेषः। न चास्य मन्त्रत्वम्, ताद्रूप्येणाप्रतीतेः, अध्येतृस्मरणाभावाच्च। तस्माद्विध्युद्देशान्तर्गम एव।

तत्र च गुणविधिर्नामधेयम् वा? प्रातिपदिकं तावदुद्भेदनसमर्थे द्रव्ये खनित्रादाववयवप्रसिद्ध्या वर्तते। न च समुदायोऽर्थान्तरवाची लोके प्रसिद्धः। न च लोकादनवगतोऽर्थवादादेवावगम्यते सम्बन्धस्याशास्त्रहेतुत्वात्। तृतीयाऽपि च करणवाचिनी। क्रियायाश्च शक्तिमद्द्रव्यम् तदाधारा वा शक्तिः करणम्। तेन उद्भित्साधनको यागो विज्ञायत इति प्राप्ते सिद्धान्तः:—

**अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्वमविधायकत्वात्।**[1] यस्य यागस्योत्पत्तावपूर्वं निष्पद्यते तस्येदं नामधेयमेव गुणविधायकत्वानुपपत्तेः। तत्र फलं प्रति

1. पू. मीमां. 1. 4. 2.

गुणे विधीयमाने परपदसंबन्धविधानं, व्यवहितकल्पना, औत्पत्तिकसोमबाधः, अनदनीयेन च खनित्रादिनाऽत्यन्ताप्रसिद्धेन याग इति च दोषाः। तथा यागं प्रति गुणविधौ फलपदानर्थक्यम् प्रत्ययव्यापारविप्रकृष्टतादयो दोषाः। द्रव्ययागयोर्भेदात् "उद्भिदा यजेत" इति यागसामानाधिकरण्यं न स्यात्। "उद्भिद्वता यजेत" इत्युक्ते मत्वर्थलक्षणाप्रसङ्गात्। "उद्भिदा यागं भावयेत्" "यागेन फलम्" इति वैय्यधिकरण्ये च 'यागस्य फलं प्रति साधनत्वं' द्रव्यं प्रति साध्यत्वम्' इति वैरूप्यापत्तिः, विध्यावृत्तौ वाक्यभेदः। तथा विशिष्टविधावनेकविधिशक्तिकल्पनामत्त्वर्थलक्षणादयो दोषाः। तस्मान्न गुणविधिः किन्तु विधेययागनामधेयतयैव विध्युद्देशान्तर्गम इति। एवं स्मृतिप्रामाण्यमपि विध्युद्देशान्तर्गमेनोक्तम्। तथा हि :—

"विरोधे त्वनपेक्षं स्यात्प्रामाण्यं स्मृतिबन्धनम्।
अविरोधे हि वेदेन तन्मूलमनुशील्यते॥

या तु वेदविरुद्धेह स्मृतिः काचन दृश्यते।
सा तु स्याद्भ्रान्तिमूलैव न स्पष्टश्रुतिमूलिका॥

स्वातन्त्र्येण प्रमाणत्वं स्मृतेस्तावन्न संमतम्।
वेदमूलानुमानं च प्रत्यक्षेण विरुध्यते॥

वेदवाक्यानुमानं हि तावदेव प्रवर्तते।
तदर्थविषयं यावत् प्रत्यक्षं नोपलभ्यते॥

प्रत्यक्षे श्रूयमाणे तु न विद्येतानुमानिकम्।[1]
न हि हस्तिनि दृष्टेऽपि तत्पदेनानुमेष्यते॥

अतः स्मृतीनां वेदानुसारेण विध्यादिष्वन्तर्भावात् प्रामाण्यम्, तथोपनिषदामपि इति प्राप्त आह :—

॥ तत्तु समन्वयात् ॥

इति॥

---

1; तन्त्र. वा. 1. 3. 2,

सम्यक् तात्पर्येण ब्रह्मात्मैकत्वनिरूपणे वेदान्तपदानामन्वयदर्शनात् तद्वेदान्तवेद्यं, तदेकवेद्यञ्च इत्यर्थसंक्षेपः। अत्र हि न धर्म इव चोदना प्रवर्तकं वचनं प्रमाणम्, प्रवृत्त्यसाध्यत्वाद्ब्रह्मणः ; किन्तु समन्वय उपनिषत्पदानाम् "फलिता अमी द्रुमा" इत्यादिवत्। स च "सत्यं ज्ञानमनन्तं ब्रह्म" इत्येवमादिवत् दृश्यत्वाद्वह्निदग्धृत्वादिवन्न सन्देहमर्हति। तदाहुर्भट्टपादाः :—

स्पष्टशब्दात्प्रतीतेऽर्थे नानर्थक्यं हि शङ्क्यते।
अग्नौ दहति दृष्टे वा दग्धृत्वं किं विचार्यते ॥ [1]

इति। न च उपनिषदां मन्त्रान्तर्गमः कर्मौपयिकार्थस्मारकत्वात्।

किञ्च उपनिषदां मन्त्राणमिव कर्मणि विनियोगे तद्गतोपासनाविधानानि तिरोधीयेरन्। तदाहुः :—"प्रकाशवच्चावैयर्थ्यात्"[2]। "यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसम्बन्धाद्दृजुवक्रादिभावं तेषु प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते, एवं ब्रह्मापि पृथिव्याद्युपाधिसम्बन्धात्तदाकारतामिव प्रतिपद्यते तदालम्बनो ब्रह्मण आकारविशेषोपदेशः उपासनार्थो न विरुध्यते। एवमवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति"[3] इति सूत्रभाष्यकाराः। मन्त्रेष्वप्याहुः :—

"अनुष्ठाने पदार्थानामवश्यं भाविनी स्मृतिः।
अनन्यसाधनाऽनन्यकार्यैर्मन्त्रैः प्रसाध्यते ॥"[4]

न तावदनुष्ठानवेलायामस्मृतः कश्चिदपि पदार्थः शक्यः कर्तुम् इत्यवश्यंभाविन्या स्मृत्या योग्यसाधनमालापेक्षणात् यत्किञ्चित् ब्राह्मणार्थानुसन्धानं वा पूर्वपदार्थप्रत्यवेक्षणं वा सूत्रग्रन्थो वाऽऽत्मीयग्रहणकवाक्यानि वा उपद्रष्ट्रादि वा साधनं ग्रहीतुमारभ्यते। तत्रानन्यप्रयोजनान्मन्त्रान् प्रकरणे पठ्यमानान् सामान्यतः किमप्येभिः कर्तव्यम् इत्येवं प्रयोगवचनेन गृह्यमाणानुपलभ्य यादृशेन वाक्येन स्मृतिः कर्तुमाकाङ्क्ष्यते तद्रूपा एते इति विदित्वा लिङ्गप्रकरणानुमितश्रुत्या विनियोगे सत्यभिधानार्थता विज्ञायते। ततश्चोपा-

---

1. श्लो. वा.
2. ब्र. सू. 3. 2. 15.
3. सू. भा. 3. 2. 15
4. मी. तन्त्रवा. 2. 1. 31.

यान्तराण्यप्रमाणकत्वान्निवर्तन्ते । नियमाद्दृष्टसिद्धिश्च मन्त्रैरेव स्मृत्वा कृतकर्माभ्युदयकारी इत्यवधार्यते । तथा च मन्त्रेषु पठ्यमानाः 'वदामि' 'गृह्णामि' "निर्वपामि" इत्यादिभावनास्तिरोधीयन्त इति । एवम् उपनिषद्गत—"आत्मेत्येवोपासीत" इत्यादि-भावना अपि तासां मन्त्रवत्कर्माङ्गत्वेऽपि तिरोधीयेरन् ।

ननु मन्त्राणां विधायकत्वपक्षाश्रयणमपि मीमांसायामस्ति । तथा हि येऽप्येत-माहुः :—

> "यस्माद्व्रीह्यादिवन्मन्त्राः करणत्वेन कर्मणाम् ।
> ब्राह्मणेन नियुज्यन्ते तद्वत्ते न विधायकाः ॥"[1]

इति । तैरपि सामान्यतो दृष्टमात्रं व्यपदिष्टम्; कुतः ?

> "विधिशक्तिर्नियोगेन न मन्त्रस्यापनीयते ।
> स्वतो विधास्यति ह्येष नियोगात्स्मारयिष्यति ॥"[2]

इति विधायकत्ववर्णनात् । तथोपनिषदामपि । एवमपि मन्त्रवदुपनिषदां लिङ्गप्रकरणयो-र्विनियोजकश्रुत्यनुमापकयोरभावात् समाख्या स्थानं तत्प्रकरणं तद्वाक्यं तल्लिङ्गं तच्छ्रुतिं कल्पयति विनियोगाय । अत एव—

> "बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।
> मध्यमानान्तु बाध्यत्वं बाधकत्वमपेक्षया ॥
>
> यथा शीघ्रप्रवृत्तत्वाल्लिङ्गादेर्बाधिका श्रुतिः ।
> तथैव विनियोगेऽपि सैव पूर्वं प्रवर्तते ॥"[3]

इति विनियोगं प्रति सन्निकर्षविप्रकर्षाभ्यां श्रुत्यादीनां प्राबल्यदौर्बल्यकृते विरोधे बाध्य-बाधकभाव इत्यङ्गीकारात्तत्कर्माङ्गत्वलाभः । प्रत्युत

---

1. तन्त्रवा. 2. 1. 31.
2. तन्त्रवा. 2. 1. 31.
3. तन्त्रवा. 3. 3. 14.

"तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्" तै. उ. 3. 4. 99

इत्यादिकर्मत्यागलिङ्गात् "एष पन्था एतत्कर्म एतद्ब्रह्म" इति प्रकरणविभागाच्च कर्मानङ्गत्वमेवोपनिषदां गम्यते। न च अर्थवादत्वमप्यासाम्; अविधायकवाक्यशेषत्वेन अर्थवादत्वस्वीकारात्, अत्र च तदभावात्, तस्मात् 'वायव्यं पशुमालभेत' इतिवत्प्रशंसा-पूर्वकविध्यदर्शनाच्च।

किञ्च अर्थवादानामपि मानान्तराविरुद्धाज्ञातप्रत्यायकत्वाद्भूतार्थवादत्वेन स्वार्थे मानत्वम्।

"विरोधे गुणवादस्स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥"

इति वचनात् यदा, तदा किमु वक्तव्यम् स्वतन्त्रवाक्यानां तात्पर्यवतां प्रयोजनाय वाक्यान्तरान्वयं प्रयाजादिवाक्यवत् अनिच्छतां स्वार्थे निरङ्कुशं मानत्वम् इति सगुणो-पासनविधायिप्रकरणस्य कर्मप्रकरणादविशेषात्। निर्गुणवचसां न स्यादुपास्यप्रशंसा-परत्वम्। तद्बहिर्भूतत्वेन तद्विशेषाणामग्रहात्। तत्रारोपितत्ववत्स्वानुविद्धविशेषाणां तत्रारोपेण ततोऽनतिरेकबुद्धेर्निर्धार्यत एवात्माद्वैतम् श्रुतौ। स्थितिकाले चिन्मात्रत्वे दुन्दुभ्यादिशब्दानां दृष्टान्तत्वम्। प्रागुत्पत्तेराद्ये धाम्नि आविवेकप्रलये सर्वासामविभाग-स्थानमब्धिः, विद्यानिमित्तप्रलये च सैन्धवखिल्यो दृष्टान्तः। न चैवमर्थप्रतीतावविवक्षितार्थ-त्वेन जपमात्रोपयोगित्वाशङ्काऽपि। अत एव जपवादिनाऽपि कस्यचिददृष्टस्य कल्पनीय-त्वात् तद्वरं दृष्टमेव स्वार्थप्रत्ययेन प्रयुक्तं फलमनर्थनिवृत्त्यादि।

किञ्च पदोच्चारणमात्रप्रयुक्तादृष्टमपि परममन्त्राणामिव स्वार्थप्रत्यायनप्रयुक्तम्। तदा किमु वाच्यं दृष्टस्य परत्वे यथोक्तमविरुद्धं; परं अदृष्टार्थोच्चारणवादिनोऽपि तन्नियमा-दपरमवश्यं कल्पनीयमदृष्टम्, तन्ममापि प्रत्यायननियमाद्भविष्यति इत्यविरोध इति मन्त्राणां दृष्टपदार्थस्मृतिसमवेतं परं स्वार्थप्रत्यायनप्रयुक्तं फलम् इति। एवं न मन्त्रार्थ-वादवद् उपनिषद्भावनाशेषः। नापि विधिरत्र कश्चिन्निश्चितो, येन तत्प्रवेश आशङ्क्येत।

"अग्निहोत्रं तपस्सत्यं वेदानां चानुपालनम्।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते॥"

"वापीकूपतटाकादिदेवतायतनानि च ।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥"

"शरणागतसन्त्राणं भूतानां चाप्यहिंसनम् ।
बहिर्वेदि च यद्दानं दत्तं तदभिधीयते ॥"

इत्यादेः कर्तव्योपदेशस्याभावाच्च । न च सिद्धार्थकथने फलादर्शनात् प्रमाणान्तर-सापेक्षत्वप्रसक्तेश्च यथाकथञ्चित् प्रमाणान्तरागोचरफलवत्साध्यार्थकथनमेव युक्तम् इति मन्तव्यम् । किन्तु "स्थाणुः" इति सिद्धकथनेऽपि भयनिवृत्तिपुरुषार्थोपलम्भात् । न च तत्राप्यभिलषितस्थानप्राप्तिरेव प्रयत्नसाध्यः पुमर्थः, स्थानान्तरं गच्छतोऽप्यन्धकारादौ स्थाणौ चोरभ्रमदर्शनात् । सिद्धस्यापि रूपादिशून्यस्यात्मनः प्रमाणान्तरागोचरत्वेन तत्सापेक्षं वेद्यस्थानं स्यात् । पुरुषप्रणीतत्वञ्च प्रमाणान्तरसापेक्षत्वप्रयोजकम् । न च अपौरुषेये वेदे सिद्धार्थेऽपि तत्प्रसञ्जयितुं शक्यम् । न च साध्याङ्गत्वेऽपि सिद्धत्वप्रयुक्त-मात्मनः सापेक्षत्वं व्यावर्त्यते, प्रमितस्यैवाङ्गत्वेन विनियोगात् ब्रह्मणो विज्ञानविधौ । न च वेदादन्यप्रमाणगोचरोऽसौ इत्युद्घोषितमस्माभिः । **एकं वा संयोगरूपचोदनाख्या-विशेषात्** इति । यथा फलसंयोगद्रव्यदेवतात्मकरूपैक्यादिना सर्वशाखास्वेकं कर्म, तथा सर्वशाखाप्रत्ययचोदनाद्यविशेषात् इति ब्रह्मापि सर्वोपनिषत्स्वेकं प्रमातव्यम् इति सूत्रयामास स भगवान् **व्यासः** ।

फलरूपं ब्रह्मैवानन्दशरीरमावेदितम् । तेन न फलसिद्ध्यर्थमप्यङ्गत्वकल्पना । अतः स्वातन्त्र्येणैवोपनिषत्समन्वयगम्यं ब्रह्म, तथापि किं **प्रतिपदाधिकरणन्यायेन** । यद्वा प्रकारान्तरेण समन्वयः । **तथाहि वर्णयन्ति**—किं सर्वाणि पदानि फलेन सम्बध्यन्ते किं वा एकं इति । किं प्राप्तम्? प्रतिपदम् इति । कुतः? ऐकरूप्येण सम्बन्धः प्रधाने च न च सिद्ध्यति । तस्मात् फलपदेनैव सर्वं सम्बध्यते । यदि विशेषो गम्यते 'इदं फलसम्बन्धयोग्यम्, नेदम्' इति ततः किञ्चिदेव सम्बध्येत; अगम्यमाने तु सर्वाणि पदानि तेनैव सम्बध्यन्ते । यदि चैकं फलसम्बन्धि, इतराणि तत्सम्बन्धीनि कल्प्यन्ते, तदेकस्य तं प्रत्युपादानविधानगुणभावात् इतरस्य तं प्रति उद्देशानुवादप्राधान्याद्वैरूप्यं इति

1. मी. सू. 2. 4. 9.

वाक्यभेदप्रसङ्गः । सर्वेषां तु फलं प्रत्युपादीयमानानामैकरूप्यात् तत्र सम्बन्धोपपत्तिः । सर्वश्च सति सम्भवे गुणमतिलङ्घ्य प्रधानेनैव सम्बन्ध्यते । तस्मात्सर्वेषां फलसम्बन्धाद्धर्मत्वम् इति । एवमुपनिषत्पदानामपि प्रत्येकं जीवब्रह्मगोरैकत्वे समन्वयश्चेत्, सत्यज्ञानाद्यन्यतमपदार्थज्ञानान्मोक्षः प्रसज्येत, वाक्यार्थज्ञानाद्वा वा । न च तथेष्यते । अथैतत्सिद्धान्तानुसारेण समन्वयः, तथा हि—

"फलेन यस्य सम्बन्धः ततोऽपूर्वं प्रकल्प्यते ।
तदल्पत्त्वोपपत्तौ च न युक्ता बहुकल्पना ॥ [1]"

यदि फलसम्बन्धमात्रपर्यवसाय्येव वाक्यं भवेत्, ततः कदाचित्सर्वाण्यपि फलेन सम्बद्ध्येरन् । इह तु तावन्मात्रेणासिद्धेरपूर्वमन्यत्कल्पयितव्यम् । तच्चान्यथानुपपत्तिप्रमाणकम् । तत्रैकापूर्वकल्पनयोपपत्ते वाक्ये नादृष्टान्तरकल्पनाप्रमाणमस्ति । यो हि बहून्यपूर्वाणि कल्पयति, कल्पयत्यसावेकम् ; तच्चेत् कल्पितं अर्थवत्त्वाद्वाक्यस्य क्षीणाऽन्यथानुपपत्तिर्नापूर्वान्तरस्य प्रमाणं भवति । तस्मादेकमेव फलसम्बन्धि, तस्माच्चापूर्वमितरत्फलवदुपकारि इत्यध्यवसीयते । न चात्र विरोधो भविष्यति, नामधेयत्वेन परिहारात् । अगत्या वा 'दशापवित्रेण ग्रहं सम्मार्ष्टि' इतिवन्मत्वर्थलक्षणाश्रयणादर्थाक्षिप्तसाध्यांशद्वारेण वा धात्वर्थैरात्मीयकरणग्रहणासिद्धिः । एवं स्थिते कतरदेकं सम्बध्यताम् इति ? सर्वथाऽनेकादृष्टकल्पनापरिहारादनियमप्राप्तौ उच्यते ;—

"प्रधानं फलसम्बन्धि तत्सम्बन्ध्यङ्गमिष्यते ।
प्रधानाङ्गत्वमेकस्य न चैकत्रावकल्पते ॥"

न ह्येकस्मिन्वाक्ये तदेव फलसम्बन्धात्कदाचित् प्रधानम्, कदाचिच्च फलवदुपकारादङ्गं युज्यते, नियतरूपत्वादङ्गाङ्गिभावस्य । तस्मान्नियोगेनाख्यातादपूर्वप्रतीतिः इति । एवमत्राप्येकतमपदात् ब्रह्मप्रतीतिर्विवक्त्या पदान्तराणां कर्मवाक्यवत्फलवदुपकारकत्वम् । न च एतद्युज्यते, तद्वत्प्रकरणेतिकर्तव्यताद्याकाङ्क्षाभावात् । अन्यथा साध्यत्वप्रसङ्गात् । प्रकारान्तरमपि । **भावार्थाः कर्मशब्दाः तेभ्यः क्रिया प्रतीयेत एष ह्यर्थो विधीयत** इत्यत्र यथा, तथोपनिषदां वाच्यम्, समन्वयेऽन्यस्याप्रसिद्धत्वात् । तथा हि—यावानेव ह्यनन्यलभ्योऽर्थः शब्दाद्गम्यते, स सर्वः शब्दार्थः सर्वत्र चाख्याते धात्वर्थः, तदनुरक्ताश्च भावना विज्ञायन्ते । तस्माद्भावार्थत्वव्यपदेशो यागदानाद्याख्याता-

1. त. वा. 2. 1. 1.

नाम् इति भावार्थनिरुक्तिपूर्वकमुक्तम् । सर्वत्र हि फलं साध्यरूपत्वात् सिद्धसाधनमपेक्षते, न साध्यान्तरं, नामार्थश्च सिद्धत्वात् तदपेक्षापूरणसमर्थो नाख्यातार्थः स्वयमेव तत्साध्यत्वात् । तस्मात् द्रव्यादिलभ्यं फलम् इति प्राप्ते सिद्धान्तः :—

"भावार्थाः कर्मशब्दा ये तेभ्योऽपूर्वाक्रियागतिः ।
तैः कुर्याद्यजिना स्वर्गमेष ह्यर्थो विधीयते ॥"[1]

केवलभावनाकर्मणोऽनुवादकशब्दान्नापूर्वावगतिः, किन्तु धात्वर्थोपरक्तभावनाभिधायक 'यजेत' इत्यादिशब्दात् । फलसम्बन्धो हेतुः अपूर्वप्रतिपत्तेः, सम्बन्धश्च भावनाकाङ्क्षापूर्वकः । सा च भावशब्देभ्यः प्रसरन्ती दृश्यते, न द्रव्यगुणशब्देभ्यः । तस्मादाख्यातेभ्योऽपूर्वभावना गम्यते तत एव फलम् इति । तथा च शब्दविशेषेभ्यो ब्रह्म प्रतीयते चेत्, तदा भावनावत्प्रतिवाक्यं भेदफलादिकमापद्येत । न च तादृशाः शब्दविशेषा दृश्यन्ते । अतः शास्त्रप्रमाणकत्वेन ब्रह्मणः समन्वयात् इत्यसमर्थो हेतुः इति ।

**अत्रोच्यते**—समर्थ एवासौ । इष्यते हि परेणाप्याख्यातस्य वाक्यत्वम् तदर्थभूतभावनाबोधकस्य । तेनास्माकमप्याख्यातस्थाने महावाक्यम् इतरपदस्थानीयञ्चावान्तरवाक्यम् महावाक्योपकारिपदार्थशुद्धया तद्गतानां सत्यज्ञानादिपदानामखण्डार्थे लक्षणया समन्वयस्य दर्शितत्वात् । तथा महावचः समन्वयस्यापि करणादिवत् पदार्थभेदाभावादेव न वाक्यभेदाद्याशङ्का सकलपदानां प्रत्येकं समन्वयेऽपि न कर्मवाक्यवदपूर्वगौरवम् तदङ्गीकारात् तत्तदंशाविद्योच्छेदफलस्य दृष्टत्वात् । नाप्येकैकपदार्थज्ञानान्मोक्षो दर्शादिभ्यः स्वर्ग इव प्रत्येकं सच्चिदानन्दाद्वयादिपदानां प्रत्येकं समग्रांशाज्ञापकत्वादेव, मोक्षस्य समस्ताविद्योच्छेदरूपत्वाच्च । अतो युक्तः सर्वपदानां समन्वयः । न च "आग्नेयोऽष्टाकपाल" इत्यत्र "आग्नेय" इति तद्धितान्तर्गताग्निपदस्य मन्त्रत्वेन देवताप्रकाशकत्वेन हविः प्रक्षेपोऽग्निशब्देनैव देवतामुद्दिश्य यथा, तथा तत्त्वप्रकाशने ब्रह्माद्यन्यतमपदनियमोऽपि, देवतादेशस्यादृष्टाङ्गत्वेन नियमसम्भवात् । अत्र तु दृष्टाविद्याध्वंसफलत्वादनियमोपपत्तेः ।

किञ्च आथर्वणश्रुतीनामिव यज्ञाङ्गानुपयोगित्वेऽपि वेदान्तानां केवलपुरुषार्थत्वेनापि प्रामाण्योपपत्तेर्वेदोपरा वेदान्ता इति प्रलापमात्रं केषाञ्चित् । यदाहुर्वार्तिककृतः :—

---

1. त. वा. 2. 1.

"यदि यज्ञोपयोगित्वं नेहास्त्याथर्वणश्रुतेः ।
अर्थान्तरप्रमाणत्वं केनास्याः प्रतिहन्यते॥ "

इति । अत्र च सकलक्लेशोपशान्तिः शान्त्यादिशास्त्रवद्दृष्टमेव फलम्—

"शरदर्कांशुजं तापं निन्ये तारापतिः शमम् ।
अहंमानोद्भवं दुःखं विवेकस्सुमहानिव ॥"

इति पराशरवचनात् ।

निषेधवाक्यानां च मुख्यार्थत्यागेन क्रियान्तलक्षणाद्वरं तत्परिग्रहेण "न सर्पायाङ्गुलिं दद्यात्" इत्यादौ प्रसिद्धानुपायत्वज्ञानम् तद्वद्वेदान्तानां सिद्धबोधकत्व-सम्भवाच्च । न च "तत्त्वमसि" इति नवकृत्वोऽभ्यासात् समिदादिवत् तत्त्वभेदः । तत्र हि कस्य विधित्वम् इत्यनिश्चयात् अन्येषां विधेयानुवादेन गुणविधित्वासम्भवात् सर्वयजतीनां तुल्यत्वेन कर्मभेदः । अत्र त्वेकस्यैव कर्मणः किञ्चित्तदुपयोग्यैकत्वानु-वादत्वादितरेषामेक एव विधिः इति न तत्त्वभेदशङ्का । 'भूय एव मा भगवान् विज्ञापयतु' इति पूर्वोक्तेरेव प्रश्नाद्यज्ञकाण्डस्यादृष्टार्थत्वविप्लवाच्च ।

"लोकायतिकमूर्खाणां नैवान्यत्कर्म विद्यते ।
यावत्किञ्चिददृष्टार्थं तद्दृष्टार्थं हि कुर्वते ॥

वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः ।
अल्पेनापि निमित्तेन विरोधं योजयन्ति च ॥

तेभ्यश्चेत्प्रसरो नाम दत्तो मीमांसकैः क्वचित् ।
न च कञ्चन मुञ्चेयुर्धर्ममार्गं हि ते सदा ॥

प्रसरन्न लभन्ते हि यावत्क्वचन मर्कटाः ।
नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे[1] ॥

इति । न चार्वाकवदस्माकं मीमांसकेष्वप्रसरः । न चात्र विरोधयोजनमात्रेणाप्रामाण्यं कर्मकाण्डस्यास्माभिर्वर्ण्यते ; किन्तु विवर्तदृष्टिमाश्रित्य "यत्र त्वस्य सर्वमात्मैवाभूत्"

1. तन्त्रवा. 1. 3. 2.

इत्यादिकी । एवं दृष्टश्रुतिमूलब्रह्मसमन्वितगीतादिस्मृतीनामपि मूलान्तरोद्भवत्वेनाप-स्मृतित्वमुपनयनादिस्मृतिवन्न मन्तव्यम् । यदाहुर्भट्टपादाः :—

" कठमैत्रायणीयादिपठितश्रुतिमूलिकाः ।
दृश्यन्ते स्मृतयस्सर्वा यदोपनयनादिषु ॥

तदा तन्मध्यपात्येकं वाक्यं किञ्चिदपस्मृतिः ।
मूलान्तरोद्भवं वक्तुं जिह्वा नो न प्रवर्तते[1] ॥

इति । " अथातो धर्मजिज्ञासा " इति च वेदार्थैकदेश एवोपक्षिप्तः, स एव च " आम्नायस्य क्रियार्थत्वात् " इत्यादिना विध्यर्थवादमन्त्राणामुपयोगेन निगृह्यते ; वेदान्तानां ब्रह्मसमन्वयस्य न्यायसिद्धत्वात् । अत एव पृथगारम्भोऽपि । न च धर्म-शब्देन वेदार्थमात्रं न तदेकदेश इति युक्तम् , प्रामाण्यप्रसाधनात्प्राक् सामान्यप्रतिपत्ति-विशेषप्रतिपत्तिपुरुषार्थसाधनत्वानां वेदार्थेऽसम्भवेन जिज्ञासानुदयात् । तथा सति चोदनालक्षणत्वविशेषणवैयर्थ्याच्च । चोदनायाः प्रवर्तकवचनत्वेन वेदविशेषत्वाच्चोदना-शब्देनापि वेदविवक्षायामर्थवादादेरपि प्रमाणत्वेन द्वितीयाधिकरणेनैवार्थविशेष-व्यवस्थापनात अर्थवादाद्यधिकरणानारम्भः सिद्धः प्रामाण्यविचारश्च इति तत्प्रामाण्य-चिन्तानवतारः स्यात् । लोकप्रवादाख्यप्रमाणाभासेन प्रसिद्धं सामान्यात्मना धर्ममुद्दिश्य तस्याग्निहोत्रचैत्यवन्दनादित्वेन विचारे न सर्वमेतद्युज्यते । वेदार्थस्य पुनर्विचारे सिद्धसाध्यादिभेदेन सन्देहे तन्निर्णय एव कर्तव्यस्स्यात् । वेदार्थजिज्ञासा तत्र वेदः प्रमाणं च इति । अनुचितं च पण्डितंमन्यस्य धर्मचोदनाशब्दयोर्लाक्षणिकत्वप्रसङ्गात् सर्ववेदवाक्योदाहरणस्य मुख्यार्थबाधकस्यादर्शनाच्च धर्मशब्दस्य चैत्यवन्दनादावपि प्रसक्तत्वेन वेदार्थे रूढत्वासम्भवात् । अस्तु वा वेदार्थजिज्ञासैवेयम् ; तथाऽपि श्रुतिलिङ्गादिप्रमाणकब्रह्मसमन्वयस्य श्रौतस्य स्मार्तेन कार्यार्थसमन्वयेन नापह्नवो युक्तः ।

" यावदेकं श्रुतौ कर्म स्मृतौ चान्यदितीर्यते ।
तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते[2] ॥ "

---

1. तन्त्रवा. 1. 3. 2.
2. तन्त्रवा. 1. 3. 2.

इति वार्तिकान्मन्वादिवचोवद् व्यासवचोऽपि युगादिषु प्रवर्तमानं प्रमाणमेव। तदाहुः—

“ वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता ।
नित्यानामभिधेयानां मन्वन्तरयुगादिषु ॥

तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताम् ।
वचनानि प्रमाणानि नान्येषामिति निश्चयः ॥ ”[1]

इति। तस्मादध्वरमीमांसालोचनया ब्रह्मणि वेदान्तसमन्वयो नानुपपन्नः ।

एवं निर्विशेषे ब्रह्मणि वेदान्तानामुत्सर्गसिद्धे समन्वये तत्प्रतिपत्त्यर्थं क्वचिद्विशेषविवक्षया विशेषनिरूपणे तत्र महातात्पर्ये सत्येवावान्तरतात्पर्यात् अवान्तरवाक्यभेदेनोपासनाविधिरपि मन्दानुकम्पार्थमपवादत्वेन, यथा हिरण्मयपुरुषादौ। अन्नमयादिश्च निर्विशेषपुच्छब्रह्मज्ञानद्वारमेव। एवमन्यत्राप्यूह्यम्। न च अभूतार्थप्रादुर्भावफला भावनैव सर्वत्र वाक्यार्थः सिद्धार्थवादानामपि बहुलमुपलम्भात्। न च सर्वत्र क्रियोत्प्रेक्षणं न्याय्यम्, निराकाङ्क्षान्वये सत्यपि क्रियाकल्पनायामतिप्रसङ्गात्। “ अयमात्मा ब्रह्म ” इत्यादौ च “ अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽपि गम्यत ” इति स्मरणात् “ अस्ति ” इत्यादिविवक्षितक्रियालाभात्। किञ्च—

“श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ ”[2]

इति पुरुषस्य प्रवृत्तिं प्रति स्वातन्त्र्यश्रवणादिष्टसाधनादिबोध एव शब्दसाध्यो, न प्रवृत्त्यादिकमपि फलवत्। साधनेतिकर्तव्यतयोरपि फलरागेण समुत्पादितरागेणैव प्रवृत्तस्य तद्विशेषबोधनमात्रेण शास्त्रस्य चरितार्थत्वसम्भवात्। यद्यपि साधनविशेषानवगमेनेतिकर्तव्यतां वाञ्छति सामान्येनापि, तथाऽप्यर्थित्वादिसम्पन्नस्य फलवती नैसर्गिकी प्रवृत्तिः इति विधेरज्ञातज्ञापन एव व्यापारः अनेनैव च प्रकारेण प्रयोज्यचैतन्यद्वारेण शब्दस्य प्रवर्तकत्वदर्शनात्। कृतिसाध्यैकार्थसमवायिनी हितसाधनविधिः इति हि वृद्धाः।

1. तन्त्रवा. 1. 3. 3.
2. कठ. 1. 2. 2.

इत्यादिकी । एवं दृष्टश्रुतिमूलब्रह्मसमन्वितगीतादिस्मृतीनामपि मूलान्तरोद्भवत्वेनाप-स्मृतित्वमुपनयनादिस्मृतिवन्न मन्तव्यम् । यदाहुर्भट्टपादाः :—

" कठमैत्रायणीयादिपठितश्रुतिमूलिकाः ।
दृश्यन्ते स्मृतयस्सर्वा यदोपनयनादिषु ॥

तदा तन्मध्यपात्येकं वाक्यं किञ्चिदपस्मृतिः ।
मूलान्तरोद्भवं वक्तुं जिह्वा नो न प्रवर्तते[1] ॥

इति । " अथातो धर्मजिज्ञासा " इति च वेदार्थैकदेश एवोपक्षिप्तः, स एव च " आम्नायस्य क्रियार्थत्वात् " इत्यादिना विध्यर्थवादमन्त्राणामुपयोगेन निगृह्यते ; वेदान्तानां ब्रह्मसमन्वयस्य न्यायसिद्धत्वात् । अत एव पृथगारम्भोऽपि । न च धर्म-शब्देन वेदार्थमात्रं न तदेकदेश इति युक्तम् , प्रामाण्यप्रसाधनात्प्राक् सामान्यप्रतिपत्ति-विशेषप्रतिपत्तिपुरुषार्थसाधनत्वानां वेदार्थेऽसम्भवेन जिज्ञासानुदयात् । तथा सति चोदनालक्षणत्वविशेषणवैयर्थ्याच्च । चोदनायाः प्रवर्तकवचनत्वेन वेदविशेषत्वाच्चोदना-शब्देनापि वेदविवक्षायामर्थवादादेरपि प्रमाणत्वेन द्वितीयाधिकरणेनैवार्थविशेष-व्यवस्थापनात् अर्थवादाद्यधिकरणानारम्भः सिद्धः प्रामाण्यविचारश्च इति तत्प्रामाण्य-चिन्तानवतारः स्यात् । लोकप्रवादाख्यप्रमाणाभासेन प्रसिद्धं सामान्यात्मना धर्ममुद्दिश्य तस्याग्निहोत्रचैत्यवन्दनादित्वेन विचारे न सर्वमेतद्युज्यते । वेदार्थस्य पुनर्विचारे सिद्धसाध्यादिभेदेन सन्देहे तन्निर्णय एव कर्तव्यस्स्यात् । वेदार्थजिज्ञासा तत्र वेदः प्रमाणं च इति । अनुचितं च पण्डितंमन्यस्य धर्मचोदनाशब्दयोर्लाक्षणिकत्वप्रसङ्गात् सर्ववेदवाक्योदाहरणस्य मुख्यार्थबाधकस्यादर्शनाच्च धर्मशब्दस्य चैत्यवन्दनादावपि प्रसक्तत्वेन वेदार्थे रूढत्वासम्भवात् । अस्तु वा वेदार्थजिज्ञासैवेयम् ; तथाऽपि श्रुतिलिङ्गादिप्रमाणकब्रह्मसमन्वयस्य श्रौतस्य स्मार्तेन कार्यार्थसमन्वयेन नापह्नवो युक्तः ।

" यावदेकं श्रुतौ कर्म स्मृतौ चान्यदितीर्यते ।
तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते[2] ॥ "

---

1. तन्त्रवा. 1. 3. 2.
2. तन्त्रवा. 1. 3. 2.

इति वार्तिकान्मन्वादिवचोवद् व्यासवचोऽपि युगादिषु प्रवर्तमानं प्रमाणमेव । तदाहुः—

"वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता ।
नित्यानामभिधेयानां मन्वन्तरयुगादिषु ॥

तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताम् ।
वचनानि प्रमाणानि नान्येषामिति निश्चयः ॥"[1]

इति । तस्मादध्वरमीमांसालोचनया ब्रह्मणि वेदान्तसमन्वयो नानुपपन्नः ।

एवं निर्विशेषे ब्रह्मणि वेदान्तानामुत्सर्गसिद्धे समन्वये तत्प्रतिपत्त्यर्थं क्वचिद्विशेष-विवक्षया विशेषनिरूपणे तत्र महातात्पर्ये सत्येवावान्तरतात्पर्यात् अवान्तरवाक्यभेदे-नोपासनाविधिरपि मन्दानुकम्पार्थमपवादत्वेन, यथा हिरण्मयपुरुषादौ । अन्नमयादिश्च निर्विशेषपुच्छब्रह्मज्ञानद्वारमेव । एवमन्यत्राप्यूह्यम् । न च अभूतार्थप्रादुर्भावफला भावनैव सर्वत्र वाक्यार्थः सिद्धार्थवादानामपि बहुलमुपलम्भात् । न च सर्वत्र क्रियोत्प्रेक्षणं न्याय्यम्, निराकाङ्क्षान्वये सत्यपि क्रियाकल्पनायामतिप्रसङ्गात् । "अयमात्मा ब्रह्म" इत्यादौ च "अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽपि गम्यत" इति स्मरणात् "अस्ति" इत्यादिविवक्षितक्रियालाभात् । किञ्च—

"श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥"[2]

इति पुरुषस्य प्रवृत्तिं प्रति स्वातन्त्र्यश्रवणादिष्टसाधनादिबोध एव शब्दसाध्यो, न प्रवृत्त्यादिकमपि फलवत् । साधनेतिकर्तव्यतयोरपि फलरागेण समुत्पादितरागेणैव प्रवृत्तस्य तद्विशेषबोधनमात्रेण शास्त्रस्य चरितार्थत्वसम्भवात् । यद्यपि साधनविशेषानव-गमेनेतिकर्तव्यतां वाञ्छति सामान्येनापि, तथाऽप्यर्थित्वादिसम्पन्नस्य फलवती नैसर्गिकी प्रवृत्तिः इति विधेरज्ञातज्ञापन एव व्यापारः अनेनैव च प्रकारेण प्रयोज्यचैतन्यद्वारेण शब्दस्य प्रवर्तकत्वदर्शनात् । कृतिसाध्यैकार्थसमवायिनी हितसाधनविधिः इति हि वृद्धाः ।

1. तन्त्रवा. 1. 3. 3.
2. कठ. 1. 2. 2.

रागगोचरे हितसाधने च चन्द्रोदयादौ कृतिसाध्यत्वाभावेनाप्रवृत्तेः एकतमकालसम्बन्ध-व्यावृत्त्यर्थं अनुपपदं कृतिसाध्यत्वं वा विशेषणम् । तस्माल्लोकवेदयोः सिद्धे समन्वयः सिद्धः ॥

अथ न्यायविरुद्धोऽयं समन्वयः न्याये हि षोडशतत्त्वानि निरूपितानि; " प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धन्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छल-जातिनिग्रहस्थानानां तत्त्वज्ञानात् निःश्रेयाधिगम "[1] इत्युद्देशपूर्वकं त्रिविधा अस्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा च इति । तत्र नामधेयेन पदार्थाभिधानमात्रमुद्देशः, उद्दिष्ट-तत्त्वव्यवस्थापको धर्मो लक्षणं लक्षितस्य यथालक्षणमुपपद्यते न वा इति प्रमाणैः तत्त्वावधारणम् परीक्षा । विभागस्य चोद्देश एवान्तर्भावः । तत्र प्रत्यक्षानुमानोपमान-शब्दाः प्रमाणानि । 'प्रमाणानि' इत्यनेनैव निरुक्तिसामर्थ्याद्विशेषविभागाक्षिप्तं सामान्यलक्षणं सूच्यते 'प्रमासाधनानि' इति । प्रमायाः साधकतममेव च प्रमाकरणम् ।

कर्तृत्वानधिकरणत्वे सति प्रमासार्वत्रिकं कारकं प्रमाकरणम् । प्रमाकारका-वृत्तिप्रमाकारकनिष्ठात्यन्ताभावाप्रतियोगित्वं प्रमासार्वत्रिकत्वम् इति लक्षणं न युक्तम् । उभयावृत्तिपदेन कर्तृकर्मव्यावृत्तौ प्रमासार्वत्रिकं कारकं प्रमाकरणम् इत्येतावताऽलम्; प्रमासार्वत्रिकव्यापारस्य कारकपदेन व्यवच्छेदात् । प्रमा च स्मृतेरन्योऽव्यभिचारी स्वतन्त्रः, लोके तथा व्यवहारात् । न हि लोकःस्मृतिमर्थव्यभिचारिणौ च प्रमाणविपर्ययौ प्रमाणपराधीनं च तर्कं प्रमामाचष्टे । अत एतदनवकाशम् यत्केचिदाहुः—

स्मृतेरन्यत्वं प्रमाणेन व्यवस्थाप्यते अप्रमाणेन वा? प्रमया साध्ये प्रमाणविशेषेण स्मृतेरन्यप्रमासिद्धिः, ततस्तत्करणतया प्रमाणसामान्यसिद्धिः, सिद्धौ च तस्य प्रमाण-विशेषसिद्धिः इति चक्रकम् । प्रमाणेन प्रमाव्यवस्थापनम् तया च प्रमाणव्यवस्थापनम् इति परस्पराश्रयं वा । द्वितीयं व्यर्थम्, प्रमाणनिरूपणप्रमाणादपि व्यवस्थासिद्धेरिष्टत्वात् इति प्रमास्वीकारास्वीकारयोरनाक्षेपात् स्वीकारस्य तल्लक्षणादिनिश्चयमूलत्वात् प्रमाण-शून्यविप्रतिपत्तेः सर्वत्र सुलभतया सर्ववादविधिनिषेधप्रसङ्गात् । वितण्डाप्रवृत्तेरपि परिशेषात् स्वपक्षसिद्ध्यभिसन्धानपूर्वकत्वस्य व्युत्पादितत्वात् परिशिष्टतत्त्वानुभूतेः प्रमात्वानपलापाच्च । एतेनैतदपास्तम् ॥ यदाहुः खण्डनकाराः :—

---

1. न्या. सू. 1, 1,

"तत्त्वानुभूतिः प्रमा" इत्यत्र तस्य भावस्तत्त्वम् इत्यर्थविवक्षायाम् प्रकृतार्थेन तच्छब्देन किं परामृश्येत ? प्रस्तुताभावात् । अथ अनुभूत्या स्वसम्बन्धी विषयः आक्षेपात् बुद्धिस्थः कार्यते स तच्छब्देन परामृश्यते वक्तृश्रोतृबुद्धिस्थतायामेव प्रकरण-पदार्थविश्रमात् । तेन यस्यार्थस्य यो भावः ततस्य तत्त्वमुच्यते ; न, अरजतादेरपि रजताद्यात्मनाऽनुभूतिविषयतासम्भवात् असत्यानुभूत्यव्यवच्छेदात् , भवितुः अतत्त्व-शब्दार्थत्वप्रसङ्गेन च धर्मांशेन विशिष्टे च प्रमाया अप्रमात्वापातात् ।

अथ तत्त्वशब्दः स्वरूपमात्रवचनः, तदपि न, स्वरूपत्वस्य जातेः उपाधेर्वा स्वात्मनि वृत्त्यवृत्तिभ्यामनुपपत्तेः स्वरूपशब्दार्थस्यैकस्यासम्भवे प्रतिविषयव्यावृत्त्या लक्षणस्याव्यापकत्वापातात् कथं तत्त्वशब्दः ? कथं च 'तत्त्वं' इति पदेन विपर्यासादे-र्निरासः । तथा हि—शुक्तौ यो 'रजतम्' इति प्रत्ययः, सोऽपि स्वरूपबुद्धिर्भवत्येव । न हि धर्मी इदन्ता रजतत्वं वा न स्वस्य रूपम् ; नापि तयोः प्रतिभासमानः सम्बन्धो न स्वरूपम् इति युक्तम् , समवायो हि तयोः सम्बन्धः प्रतिभाति, स च स्वरूपमेव ; सत्यम् ; समवायः स्वरूपम् । स एव तु शुक्तिव्यक्तेः रजतत्वस्य नास्ति इति चेत् , मैवम् ; तत्र नास्तित्वेऽपि स्वरूपताया अव्यावृत्तेः । न हि "गृहे देवदत्तो नास्ति" इति स्वरूपं न स्यात् ।

अथ न स्वरूपमात्रं तत्त्वम् ; किन्तु यद्देशकालसम्बन्धि यस्य स्वरूपं प्रतीतम् , तस्य तद्देशकालसम्बन्धि स्वरूपं तत्त्वमुच्यते । एवमपि देशकालसम्बन्धांशे प्रमाया अप्रमात्वापातात् । तयोः स्वरूपमेव तत्त्वशब्दार्थ इति चेत् , न, तत्त्वपदस्यानेकार्थत्वे लक्षणाव्यापकत्वापत्तेः । कुम्भश्यामदशायामपि रक्तोपाधिना रक्ततयोपलभ्यमानः तत्त्वं स्यात् इति तद्बुद्धेः प्रमात्वापत्तेः । 'यदा तदा' इति विशेषणप्रक्षेपणे च कालविशिष्टताप्रतीते-रप्रमाणतापातः । न हि कालवैशिष्ट्यावगमेऽपि कालान्तरसम्बन्धः सम्भवी । अन्योपा-ध्यवच्छिन्नेन सम्भत्स्यन्ति इति चेत् , तर्हि "दण्ड्यपि देवदत्तः कुण्डलिनं समारोक्ष्य-स्येव । उपाधिभेदेऽप्युपधेयस्यैकत्वानिवृत्तेर्नैवम् इति चेत् , तुल्यम् इति तत्त्वमनारोपितं रूपम् इति निर्वचनस्याखण्डितत्वाच्च ।

यच्चानुभूतित्वखण्डनं—अनुभूतित्वे न ज्ञानत्वावान्तरजातिभेदः, तज्जातित्वस्यैव गमकाभावात् । "अनुभवामि" इति प्रत्ययानुगमवशात् तत्सिद्धिः इति चेत् , न ; माघमासीयनिशावसाने सितासितसरित्सम्भेदस्नायिनः सत्यपि शब्दबलात् भाविरवकीय-

स्वर्गसुखसम्प्रत्यये "सुखमनुभवामि" इति प्रत्ययानुदयात्। प्रत्युत शीतसम्भूतवेदनासंवेदनादेव। परस्त्रिया उपगन्तुर्जनस्यास्तिककामुकस्य शब्दाधीने सत्यपि भाविनरकगमनानुभवनीययातनाधिगमे "दुःखमनुभवामि" इति मतेरनुपपत्तेः; प्रत्युत "अमन्दमानन्दं संविदानः साम्प्रतं अस्मि" इति प्रत्ययात्। यदि तु शब्दोपदर्शितव्याप्तिजमनुमानमनुभव एव स्यात्, तर्हि "सुखं दुःखञ्चानुभवामि" इति तयोः प्रत्ययः स्यात्।

नापि स्मृत्यन्यत्वमनुभूतित्वम्; यत्किञ्चित्स्मरणान्यत्वं स्मृत्यन्तरेऽप्यस्ति इति, तत्राप्यनुभूतित्वप्रसक्तेः। सर्वस्मृत्यन्यत्वं चेत्, तर्हि मदीयादिस्मृतिव्यक्तिभ्यो भवता कथं व्यतिरिक्तत्वमवधारणीयम्? प्रमायाः परकीयज्ञाने परस्यास्मादृशाऽध्यूहासम्भवात्। नाप्यनुमानार्थापत्ती; लिङ्गानुपपद्यमानयोः सर्वत्रार्वागदृशा प्रत्येतुमशक्यत्वात्। उपमानाद्यसम्भवोऽपि स्फुट एव। ततः कथं सर्वाभ्यः स्मृतिव्यक्तिभ्यो व्यतिरेको निरूप्यः प्रमाया इत्यनवबोधादसिद्धिर्लक्षणस्य। न च वाच्यम्—स्मृतित्वे च सर्वास्स्मृतिव्यक्तयः सर्वकालसर्वपुरुषसम्बन्धिन्यः स्वात्मीयां स्मृतिव्यक्तिं प्रत्यक्षतया प्रत्यक्षादेवावगम्यन्ते सामान्यलक्षणद्वयप्रत्यासत्त्या व्याप्तिग्रहकाल इव व्याप्यव्यापकव्यक्तय इति। दृष्टान्तदार्ष्टान्तिकयोर्दोषग्रस्तत्वात्। तथा सति एकं प्रमेयं प्रत्यक्षयतः प्रमेयत्वसामान्यप्रत्यासत्या विश्वमेव प्रत्यक्षं स्यात्। एवमभ्युपगच्छतश्च—

"श्रद्दधीमहि सार्वज्ञ्यमिदं यदि जानासि किमस्मच्चेतसि विपरिवर्तते" इति,

**तदयुक्तम्**; तात्कालिकासाधारणकारणविशिष्टसामग्रीजन्यं ज्ञानमनुभूतिः, तत्समान्यं च "अयमनुभवोऽयमनुभव" इति सर्वत्रानुगतमनुभूतित्वम् इत्यङ्गीकारात्। न च वाच्यम् कार्यलक्षणानुगममन्तरेण क्व कारणता क्व साधारण्यं ज्ञेयम् इति। अर्थावग्रहत्वादिलक्षणस्य कृतिसाध्यस्य ज्ञानादिकार्येऽनुगमाभावे परोक्तप्रतीत्यनुदयेन खण्डनानामप्यनवतारप्रसङ्गात्।

**यदप्यवादि** "तत्त्वानुभूतिः प्रमा" इत्येतत् काकतालीयमपि यथार्थं ज्ञानं व्याप्यते, तद्यथा—पाणौ पञ्च वराटकान् पिधाय कश्चित् पृच्छति 'कति वराटका' इति? पृष्टश्च **अजाकृपाणीयन्यायेन**[1] ब्रवीति 'पञ्च' इति। ततः 'पञ्च' इति

---

1. Same as काकतालीयन्यायः

ज्ञानमस्ति वक्तुः श्रोतुश्च । तच्च न तत्पदेन व्यवच्छेत्तुं शक्यम्; वस्तुतः तस्य 'पञ्च' सङ्ख्यावच्छिन्नत्वेनातथाभूतत्वाभावात् । नापि अनुभवशब्दव्यवच्छेद्य अननुभूतचरगोत्वेन स्मरणलक्षणोपेक्षणात् । न च प्रमैव तत् इत्युररीकरणीयम् मध्येऽध्यक्षादिदुरन्तभावत्वात् इति,

तदप्यसारम्; 'कति वराटका' इत्युक्ते, नानासङ्ख्यावच्छिन्नवराटकस्मृतौ "'पञ्च' वराटका" इत्येतत्, स्मृत्युद्गारादनुभवपदेन तद्व्यवच्छेदोपपत्तेः । तत्र विप्रतिपत्तौ सङ्ख्यान्तरस्मृत्युद्गारदर्शनात् । अनुभूयन्ते हि पाणौ बहुवारं तादृग्वराटकाः। ततः समीचीनमेव प्रमालक्षणम् इन्द्रियार्थसन्निकर्षकृतम् उत्पन्नं ज्ञानं अव्यपदेश्यम् अव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् । यच्छब्दपूरणेन यतश्चक्षुरादेरेतादृशं ज्ञानम्, तत्प्रत्यक्षम् इत्यर्थः । फलेन करणलक्षणात् निर्विकल्पकावरोधार्थं तत्र **अव्यपदेश्य** पदम् । क्षित्यादिस्वरूपमात्रग्राहि, न तु मिथो विशेषणविशेष्यभावावगाहि ज्ञानं निर्विकल्पकं प्रत्यक्षम् । सविकल्पकावरोधार्थं **व्यवसायात्मक**पदम् । व्यवसायो निश्चयो विकल्प इत्येकोऽर्थः । विकल्पकात्मकं ज्ञानं 'गौः' इत्युल्लेखि सविकल्पकम् इत्यर्थः । तदाहुः :—

> "अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
> बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥[1]
>
> ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
> बुध्यावसीयते सापि प्रत्यक्षत्वेन संमता ॥"[2]

इति । चक्षुरादेर्घटादेश्च 'संयोग, संयुक्तसमवाय, संयुक्तसमवेतसमवाय, समवाय, समवेतसमवाय, विशेषणविशेष्यभावरूपः षोढा सन्निकर्षपदेनोक्तः । न च वचनीयं योग्यतासम्बन्धेनैव प्रमितिकार्यस्योपपत्तेः न षोढा संबन्धकल्पना युक्तिमती इति; योग्यताया यावद्द्रव्यभाविन्याः संयोगादिनिरपेक्षत्वे सर्वदा कार्यकरत्वप्रसङ्गात् । न च संयोगजन्यघटादिद्रव्यप्रमायां संयोगस्यार्थविशेषणत्वे प्रत्यक्षाप्रत्यक्षसंयोगस्याप्रत्यक्षत्वा-

---

1. श्लो. वा. p. 168.
2. श्लो. वा. 172.

दर्थाप्रत्यक्षत्वम् इति शङ्कनीयम्। स्वप्रकाशत्वात् विशेषणत्वस्याप्रत्यक्षत्वेऽपि ज्ञान-प्रत्यक्षतावदत्रापि सम्भवात्। न च संयुक्तसमवायमात्राद्रूपस्य चाक्षुषत्वे रसादेरपि चाक्षुषत्वप्रसङ्गः कार्यदर्शनगम्ययोग्यतानियामकत्वे सत्येव संबन्धविशेषाकाङ्क्षायामुक्त-सम्बन्धनिवेशात् विपरीतापादनस्याशक्यत्वात्। न च यदि श्रोत्रे नभोभागनिग्रहे समवाया-च्छेदोपलम्भस्स्यात् तर्हि बधिरस्यापि इति वचनीयम्, भेरीदण्डसंयोगस्येव आकाशा-वच्छेदस्य दृष्टत्वे समवायस्य तथाविधकार्यकरत्वसम्भवात्। न च नभोऽक्षागम्यः।

"षट्पदार्थातिरिक्तत्वादसत्त्वाद्वा नृशृङ्गवत्"

इति न विशेषणविशेष्यभावसम्बन्धोपयोग इति वाच्यम्, द्वैतस्य सत्त्वासत्त्वाभ्यामनि र्वाच्यत्वमिच्छतो हेतोरसिद्धेः साधनविकलत्वाच्च दृष्टान्तस्य।

**अपर आह**—किमर्थमिदमुच्यते? किं सजातीयविजातीयव्यवच्छिन्नतत्प्रती-त्यर्थम्, उत साक्षात्कारित्वप्रतीतये तच्चिह्नोपदर्शनमिदम्, उत व्यवहारार्थम्? नाद्यः; किं सजातीय इति प्रत्यक्षत्वेन साजात्यं ते विवक्षितम्, रूपान्तरेण वा? नाद्यः, तस्माद्व्यवच्छेदावधेः प्रत्यक्षजातीयादव्यावृत्तत्वे व्यवच्छेदकत्वानुपपत्त्या व्यावृत्तत्व-स्वीकारेणाव्यापकत्वात्। नापि द्वितीयः, विजातीयपदोपादानवैयर्थ्यात्। अस्ति हि प्रमेयत्वादिना सर्वसाजात्यम्।

अथ प्रमाणत्वादिना विशेषेण साजात्यं विवक्षित्वेदमुच्यते, तर्हि लक्ष्यस्यापि प्रमाणत्वेन साजात्यात् तद्व्यवच्छेद्यकोटिप्रविष्टतया सङ्ग्राह्याभावप्रसङ्गः। लक्ष्यस्य यत्प्रमाण-त्वादिभिः सजातीयम्, तद्व्यवच्छेद्यम्। न च लक्ष्यस्य लक्ष्यं सजातीयम्, षष्ठ्यर्थस्य भेद-व्यवस्थितत्वात् इति चेत्, एवं तर्हि लक्ष्यापेक्ष्या भिन्नाद्व्यवच्छेद इत्येवोच्यताम्; कृतं प्रमाणत्वादिना साजात्येन प्रकृतानुपयोगिना वर्णितेन। यदा च लक्ष्यादन्यत्वं परेषा-मवगतम्, तदा परस्मादन्यत्वमपि लक्ष्यस्यार्थादवगम्यत इति सिद्धं मदग्रत एव लक्षण-योजनम् इति व्यर्थं लक्षणाख्यानम्।

अस्तु वा विवक्षावैचित्र्यवशात् कथमपि ईदृशमभिधानम्, तथापि न भावदर्शनेन लक्षणेनानवगतेनैव व्यवच्छिन्नप्रतीतिसम्भवोऽतिप्रसङ्गात्। न विज्ञातेन, दुरवधारणत्वात्। न तावदिन्द्रियार्थसन्निकर्षोत्पत्तिः प्रत्यक्षा, अप्रत्यक्षविशेषणत्वात्। नापि कार्येण लिङ्गेन

तदनुपपत्त्या वा तदवगमः, ताभ्यां सामान्यतः कारणमात्राक्षेपेण कारणगतानुगतरूपासिद्धावेकरूपलक्षणासिद्धेः। कार्यस्यैकजात्यादेकजातीयकारणसिद्धिः इति चेत् तर्हि कार्यगतैकजात्यस्य पूर्वमवश्यं प्रत्येतव्यत्वाङ्गीकारे ततस्सजातीयव्यवच्छेदप्रतिपत्तिरस्तु, कृतमनया पारम्पर्यदृष्ट्या। नापि द्वितीयम्, साक्षात्कारित्वावगममन्तरेण तच्चिह्नावगमानुपपत्तेः। तदवगमाच्चास्य प्रतीतावन्योन्याश्रयप्रसङ्गः। नापि तृतीयः, स ह्येवंरूपो यदिन्द्रियार्थसन्निकर्षजाति तत्प्रत्यक्षम् इति व्यवहर्तव्यम् इति; अयमप्यनुपपन्नो लक्षणस्य ज्ञातुमशक्यत्वात्। साक्षात्कारित्वात्तु तदवगमे साक्षात्कारित्वमेवास्तु व्यवहारनियमनिदानम् अव्यवहितप्रतिपत्तिकत्वात्।

अव्यभिचारिपदं च व्यर्थम्। न हि शुक्तौ रजतज्ञानं रजतेन्द्रियसन्निकर्षादुत्पन्नम्, येन व्यवच्छिद्येत; ततो नैतल्लक्षणं युक्तम् इति।

**अत्रोच्यते।** उपन्यस्यते तावत्परेणापि ब्रह्मणो लक्षणम् किंलक्षणं पुनस्तद्ब्रह्म इत्याकाङ्क्षापुरस्सरम्—"जन्माद्यस्य यतः" इति। तत्र जीवप्रधानादिकं सजातीयविजातीयाभिमतं व्यवच्छिद्यते। तथा च पर्यनुयोगसाम्यम् प्रपञ्चस्यानिर्वाच्यत्वेऽपि लक्षणादेर्व्यवस्थितब्रह्मरूपलक्ष्यगमकत्वमास्थीयत एव, अपरथा तस्याप्यनिर्वाच्यत्वप्रसङ्गात्। ततः खण्डनानामपि स्वव्याघातकत्वादखण्डनतैव। तेन युक्तमेव प्रत्यक्षलक्षणम् तत्पूर्वकं त्रिविधमनुमानम् पूर्ववत् शेषवत् सामान्तो दृष्टं चानुमानम् इति वक्ष्यमाणम्। तत्पूर्वकम् इति लक्षणम्। तानि सर्वप्रमाणानि पूर्वं यस्येति। अत्र पक्षे प्रमाणचतुष्टयपूर्वकमप्यनुमानं सिद्ध्यति इति नाव्याप्तिः। व्याप्तिकाले महानसादावेकं लिङ्गदर्शनम्, पर्वतादौ च धर्मिणि द्वितीयम् इत्येते लिङ्गदर्शने पूर्वं यस्य। तथा च "अयं धूमवान्" इत्यादेः परामर्शज्ञानस्य तदिदं तत्पूर्वकं परामर्शज्ञानमनुमानम्। व्याख्यानतो विशेषप्रतिपत्तेः।

तदनुमानं त्रिविधम्:—तत्र पूर्वं तावत्कारणं तत् विद्यते विषयतया यस्य परामर्शज्ञानस्य तत्कारणेन कार्यानुमानम् पूर्ववत्। यथा—वृष्टिमन्त एते मेघा गम्भीरध्वानवत्त्वे नीरप्रभावत्त्वे च चटुलबलाकावत्त्वे च अत्युन्नतत्वात्; य एवं स तथा, यथा दृष्टो मेघः, तथा चामी; तस्मात्तथा। कारणस्य प्रागुपयोगादनुपयुक्तं कार्यम् शेषः स विद्यते विषयतया यस्य परामर्शज्ञानस्य तत्कार्येण कारणानुमानं शेषवत्; यथा—उपरि वृष्टिमद्देशसम्बन्धिनी नदी, कलुषितोदकत्वे शीघ्रतरस्रोतस्त्वे फलफेनकाष्ठादिवहनत्वे च सति पूर्णत्वात्; यैवम्, सा तथा; यथा उभयसिद्धा नदी, तथा चेयम्; तस्मात्तथा।

अकार्यकारणभूतेननाना धर्मेण यदनुमानं, तत्सामान्यतो दृष्टम्; यथा दूरवर्तिजलाशया एते वृक्षा अजहद्वृत्तिबलाकावत्त्वात्; य एवम्, स तथा; यथा उभयसिद्धो वृक्षः, तथा चामी; तस्मात् तथा। अथवा व्यतिरेकात्पूर्वं प्रतीयत इति पूर्वोऽन्वयः। स एव शुद्धे नास्ति इति पूर्ववत् केवलान्वयिविवक्षितजातीयोपपत्तौ विपक्षहीनम्। यथा:— अभिधेयो विशेषः प्रमेयत्वात्; यत्प्रमेयम् तदभिधेयम्; यथा सामान्यम्, तथा च विशेषः; तस्मादभिधेयः। अदृष्टादिकं कस्यचित्प्रत्यक्षम् प्रमेयत्वात् मीमांसकानामप्रत्यक्षत्वाच्चास्मत्सुखादिवत् इति वा॥

ननु सन्दिग्धाश्रयासिद्धेऽयं हेतुः। न खल्वदृष्टादिव्यक्तीनामनन्तानामतीन्द्रियाणामेकेन प्रमाणेन धर्मत्वेन निश्चयः शक्यः कर्तुम्। न च बहूनां प्रमाणानां सम्भूय धर्मिनिश्चायकत्वं सम्भाव्यते, स्वगोचरशूरत्वात् सर्वेषाम् इति। नैवम्; प्रत्यक्षागमाद्यनेकप्रमाणोपकल्पितमर्त्यलोकादिप्रपञ्चस्य मिथ्यात्वानुमाने दृश्यत्वादेर्धर्मित्वेन निश्चयोपपत्तेः स्वगोचरशूरत्वेपि प्रमाणानां प्रमातुस्तत्तदर्थनिश्चयोपपत्तेश्च। तदुक्तम्—

"यदि षड्भिः प्रमाणैस्स्यात्सर्वज्ञः केन वार्यते"

इति। न च कस्यचिच्छब्दस्यानिर्धारितार्थत्वात् तद्विशेषितं प्रत्यक्षमप्यप्रसिद्धविशेषणम्; पक्षस्य विशेष्यस्य प्रकारान्तरलभ्यत्वेन सामान्यप्रसिद्धौ च विशेषप्रसिद्ध्युपपत्तेः। न च विपक्षे बाधाभावः, असंभाविते विपक्षे बाधकानुपयोगेनादोषत्वात्। न च प्रत्यक्षत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वात् रूपवत् इति विपक्षसम्भावना, संयोगिप्रत्यक्षत्वस्यातथात्वेन सिद्धसाधनत्वात् तदतिरिक्तस्य तत्राप्रसिद्धत्वात् धर्म्यसिद्धेश्च। ततो नैषा दूषणरीतिः साध्वी।

पश्चात् प्रतीयमानत्वात् शेषो व्यतिरेकः स एव शुद्धोऽस्यास्तीति शेषवत्तेन च व्यतिरेकिपक्षव्यापकत्वे सपक्षाभावे च विपक्षावृत्ति, यथा जीवच्छरीरं सात्मकम् प्राणादिमत्वात्, यत्सात्मकं न भवति, तन्न प्राणादिमत्, यथा घटः। न च जीवच्छरीरं न प्राणादिमत्; तस्मात् सात्मकम्।

यत्सामान्येन अन्वयव्यतिरेकाभ्यां द्वाभ्यामपि दृष्टम्, तत् सामान्यतो दृष्टमन्वयव्यतिरेकि; यथा:—"पर्वतोऽग्निमान् धूमवत्वात्; यो धूमवान् सोऽग्निमान्; यथा रसवतीप्रदेशः, तथा चाऽयम्; तस्मात्तथा।

ननु अग्निमत्त्वमात्रेण व्याप्तिश्चेत् प्रागेव प्रत्यक्षं इति वैफल्यमनुमानस्य । न च पर्वतावच्छिन्नवह्निमत्त्वेनाविनाभावग्रहो धूमस्य इति चेत्, मैवम्; धूमवत्त्वस्यैव प्रत्यक्षत्वाविवादात्, क्वचित्पर्वतेऽपि व्याप्तिग्रहाच्च । न च पक्षे तद्ग्रहणमपराधः, पक्षाभिमतेऽपि कालभेदेन व्याप्तिग्रहात् । न च विवक्षितधूमवह्निव्यक्त्योरविनाभावाग्रहोऽपराधः व्यक्तिविशेषस्यासाध्यत्वात्, वह्निमत्त्वधर्मस्यैव खलु साध्यत्वात् । न च इदानीं पक्षे व्याप्त्यग्रहोऽपराधः पूर्वगृहीताविनाभावस्यैवेदानीं स्मृतस्य साधकत्वात्; ततो न कश्चिद्दोषः ।

**प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ।** प्रसिद्धेन गवा साधर्म्यात् सादृश्यात् साध्यस्य संज्ञासंबन्धस्य साधनम् सिद्धिः । अयं गवयशब्दवाच्य इति बुद्धिस्ततो भवति । तत्सादृश्यज्ञानमुपमानम् प्रमाणम् । 'कीदृग् गवय' इत्येवं पृष्टो नागरिकैः यदाब्रवीत्यारण्यको वाक्यम्—"यथा गौर्गवयः तथा" तदा तच्छ्रुत्वा वनं गतस्य नागरिकस्य गवयगतसादृश्यज्ञानं वाक्यार्थानुभवाहितसंस्कारजस्मृत्यपेक्षं संज्ञासंज्ञिसंबन्धबुद्धिं कुर्वदुपमानमेव ।

**आप्तोपदेशः शब्दः**; आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा । तस्योपदेशः परप्रयोजनवत्पदमात्रं शब्दः ।

अत्र यदा वाक्यज्ञानं प्रमाणं, तदा वाक्यार्थज्ञानं फलम् । पदार्थस्मृत्याकाङ्क्षायोग्यताप्रकरणादय आन्तरालिकय इतिकर्तव्यताः । यदा वाक्यार्थज्ञानं प्रमाणम्, तदा उपादानादिबुद्धिः फलम् । नास्तिका हि प्रत्यक्षदृष्टार्थमेव शब्दं मानं मन्यन्ते । तत्राह—**स द्विविधो दृष्टादृष्टार्थत्वात् ।** यथैव दृष्टार्थः शब्दो मानम्, तथाऽदृष्टार्थो प्याप्तोक्तत्वाविशेषात् इत्यर्थः । यथोक्तस्य च मालतीमाधवादिवाक्येऽभावाद्याहतिरित्यव्याप्तिः । **आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्**[1] अस्त्यन्यदपि द्रव्यादिसमवायान्तं प्रमेयम् । यत्तु मोक्षोपयोगि तद् द्वादशविधमेव इति तुशब्दार्थः । तत्रेच्छाद्वेषप्रयत्नसुखदुःखज्ञानाद्यात्मलिङ्गं, इच्छादयः क्वचिदाश्रिताः गुणत्वात्; यो गुणः, स तथा; यथा रूपम्, तथा चैते; तस्मात् तथा । न च पारिशेष्यान्मन एवैतदाश्रय इति नात्मलिङ्गता । करणस्यैव मनसः स्वनियमार्थेच्छाद्याधारत्वानुपपत्तेः ।

---

1. न्या. सू. 1. 2.

**चेष्टेन्द्रियार्थाश्रयः शरीरम्**[1] । चेष्टा स्पन्दमात्रम् । तदाश्रयो घटादिरपि इति हिताहितप्राप्तिपरिहारार्थस्पन्दश्चेष्टा सामर्थ्याद्द्रष्टव्या । तथापि रथादिनाऽनेकान्तः । अतो 'मूर्तान्तराप्रयोज्यत्वे सति' इति विशेषणमुन्नेयम् । पाणिपादादयोऽपि चैवम् । अतो ऽन्त्यावयवित्वे सति इत्यूह्यम् । योग्यताश्रयणाच्च न पाषाणमध्यवर्तिमण्डूकशरीराव्याप्तिः तस्यापि पाटिते पाषाणे चेष्टाश्रयत्वात् । इन्द्रियाणि तु यद्यपि घ्राणरसनाचक्षुःस्पर्शनानि स्वावयवाश्रितानि; श्रोत्रमनसी त्वतदाश्रिते, तथाऽपि तदुपघातानुग्रहयोगित्वमाश्रयत्वं द्रष्टव्यम् । यथा "ग्रामीणाः ग्रामण्यमाश्रिता" इति । अर्थास्तु गन्धादयो यद्यपि न देहाश्रयाः, तथापि तेषां कार्यं सर्वदा दुःखसंवेदनरूपं देहाधिष्ठानम् इति शरीराश्रयत्वं द्रष्टव्यम् । **घ्राणरसनचक्षुस्त्वक्श्रोत्राणि इन्द्रियाणि भूतेभ्यः** ।[2] जिघ्रत्यनेन गन्धं गृह्णाति इति घ्राणम् । रसयत्यनेन रसमास्वादयति इति रसनम् । चष्टेऽनेन रूपं पश्यति इति चक्षुः । त्वक्स्थानमिन्द्रियं त्वक् । शृणोत्यनेन 'शब्दं गृह्णाति' इति श्रोत्रम् । इति निर्वचनसामर्थ्यादिन्द्रियाणि लक्षणान्यपि भवन्ति । ग्रहणकरणत्वस्य विवक्षितत्वाच्च न इन्द्रियार्थसन्निकर्षे गन्धादिज्ञानसाधनेऽतिव्याप्तिः । शरीरसंयुक्तमतीन्द्रियं संस्कारदोषव्यतिरिक्तम् साक्षात्प्रतीतिसाधनमिन्द्रियम् इति सामान्यलक्षणमिन्द्रियपदेनैव सूचितम् ।

**गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः** । पृथिव्यादयश्च गुणाश्च इति द्वन्द्वः । तत्र पृथिव्यादयः पृथिव्यप्तेजांसि गुणाश्च धर्माः सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगकर्मसामान्यसमवायाभावास्तेषामिन्द्रियाणामर्थाः ।

**बुद्धिरुपलब्धिर्ज्ञानम् इत्यनर्थान्तरम्** । बुद्ध्यादिपर्यायाभिधेयत्वं बुद्धेर्लक्षणम् । पर्यायात्मकलक्षणाभिधानं साङ्ख्यमतनिरासार्थम् । तेषां हि प्रधानस्याद्यो विकारो बुद्धिः बुद्धेः परिणतिविशेषो ज्ञानम्, तद्वृत्तिरुपलब्धिः; तच्चायुक्तम्; बुद्ध्यादीनां पर्यायत्वेन लोकत एव सिद्धेः ।

**युगपज्ज्ञानानुत्पादो मनसो लिङ्गम्** । चक्षुरादयःस्वक्रियासु क्रमकारिकरणान्तरसापेक्षाः सत्त्वेऽप्यनुत्पाद्योत्पादकत्वाद्वास्यादय इव हस्तापेक्षाः । **प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः** । आरम्भोऽनुष्ठानम् प्रवृत्तिः । तत्र वाचिकी सत्यासत्यादि ।

---

1. न्या. सू. 1. 1. 11.
2. न्या. सू. 1. 1. 12.

कायिकी दानहिंसादिका । मानसी शुद्धाशुद्धात्मिका यथाक्रमं पुण्यपापहेतुः । **प्रवर्तना-लक्षणा दोषाः** रागद्वेषमोहाः । **पुनरुत्पत्तिः प्रेत्यभावः** ; पुनः इत्यभ्यासोक्तिः । अपूर्वाभिः शरीरेन्द्रियबुद्धिवेदनाभिः सम्बन्ध उत्पत्तिः । प्रेत्य मृत्वा भावो जन्म, प्रेत्य भावः ; स पुनः पुनरुत्पत्तिः इत्यर्थः ।

**प्रवृत्तिदोषजनितोऽर्थः फलम् ।** यथोक्तप्रवृत्तिदोषजनितोऽर्थः सुखदुःख-संवेदनतत्साधककर्मरूपः सहदेहादिभिः फलम् । **बाधनालक्षणं दुःखम् ।** बाधनं पीडा, तया स्वविषया बुद्धिर्लक्ष्यते । तेन तद्विषयत्वाद्बाधनाच्च तदनुषङ्गिणश्च देहादयो दुःखम् । सा च बाधनाबुद्धिः दुःखे मुख्या, दुःखिदेहादौ च गौणी । **तदत्यन्त-विमोक्षोऽपवर्गः** । तेन दुःखेन शरीरादिनाऽत्यन्तं विमुक्तिरपवर्गः ।

**समानानेकधर्मोपपत्तेः विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः** । तत्र विमर्शस्संशय इति समान्यलक्षणम् । विरोधि-नानार्थावमर्शो विमर्शः 'किमयम्' 'किं वाऽयम्' इति । स त्रिविधः । तत्र समानो धर्मो यस्यासौ समानधर्मा धर्मी ; तस्योपपत्तेरुपलब्धेः संशयो भवति । एवं सति विशेषास्मरणेऽपि समानधर्मधर्मिणो दर्शनात् संशयः स्यात् । अत उक्तम् विशेषापेक्ष इति, विशेषस्मृत्यपेक्ष इत्यर्थः ।

तथाऽपि सहकारतरुमनुभूय दूरं गतस्य तद्गतसमानधर्मोपलम्भे करितरुरूपविशेष-स्मृतौ च संशयः स्यात् 'नगो' 'नागो' वा इति; अत उक्तम्—**उपलब्ध्यनुप-लब्ध्यव्यवस्थातश्च इति** । साधकबाधकप्रमाणाभावात् इत्यर्थः । न च सहकारादौ साधकबाधकप्रमाणाभावोऽस्ति इति भावः । तदेवं कारणद्वयोपकृतस्समानधर्मोपलंभः संशयो यथा—ऊर्ध्वत्वविशिष्टधर्मदर्शनात् अयं 'स्थाणुः' 'पुरुषो' वा इति ।

एवमनेकधर्मोपपत्तेः कारणद्वयोपकृतायाः सन्देहः । तत्र गुणत्वेन समानजातीयं रूपादि असमानजातीये च द्रव्यकर्मणी; तदिदमनेकम् । तस्मादनेकस्माद्व्यावृत्तो धर्मो अनेकापादानव्यावृत्तिहेतुत्वात् लक्षणया अनेक इत्युच्यते, असाधारण इत्यर्थः । अनेको-ऽसाधारणो धर्मो यस्य, असौ अनेकधर्माऽसाधारणधर्मा, तस्योपपत्तेरुपलब्धेः सन्देहः ; यथा— कारणमात्रविभागजविभागजत्वात् किं शब्दो द्रव्यं गुणः कर्म वा? न हि कारणमात्रविभागजविभागजं द्रव्यगुणकर्मणामन्यतमद् इति । ततस्ततो व्यावृत्तेः तस्मात्

सारकत्वेनासाधारणधर्मोपलम्भात्सन्देहः। एवं विप्रतिपत्तेरपि विशेषणद्वयसहितायाः सन्देहः विप्रतिपत्तेर्वादिगताया दुर्ज्ञातत्वात्। तच्छब्देन तदुत्थितः प्रवादो गृह्यते; यथाः— 'अस्त्यात्मा' इत्येकः 'नास्त्यात्मा' इत्यपरः ततो विरुद्धप्रवादं शृण्वतः पार्श्वस्थस्य सन्देहो भवति 'किम् अस्त्यात्मा न वा' इति। तदेवं त्रिपदविशेषणः त्रिविधः संशयः स चायं प्रमाणे प्रमेये वाऽन्तर्भवन् न्यायाङ्गत्वात् पृथगुक्तः। उक्तं चः—

"तत्र नानुपलब्धेऽर्थे न निर्णीते प्रवर्तते।
किन्तु संशयिते न्यायस्तदङ्गं तेन संशयः॥"

इति।

**यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम्।** यमर्थं प्राप्तव्यं हातव्यं वा तं निश्चित्य कर्म आरभते तत् प्रयोजनम्। ससाधनसुखदुःखावाप्तिहाने इत्यर्थः।

"प्रयोजनमनुद्दिश्य न यन्न्यायं प्रयुञ्जते।
प्रमेयान्तर्गतं तस्माद्भेदेनोक्तं प्रयोजनम्॥"

**लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यम् स दृष्टान्तः।** लौकिकाः प्रतिपाद्याः, परीक्षकाः प्रतिपादका वादिप्रतिवादिन इत्यर्थः। तेषां यत्रार्थे साध्यसाधर्म्यात् तद्धर्मभाविनि साध्यवैधर्म्यादतद्धर्मभाविनि वा बुद्धिसाम्यम्, स दृष्टान्तः।

"एषामेवाबहिर्भूतो दृष्टान्तः पृथगुच्यते।
न्यायसम्बन्धविज्ञानस्थानं यत्नामुना विना॥"

**तन्त्राधिकरणाभ्युपगमसंस्थितिः** सिद्धान्तः। तन्त्र्यन्ते व्युत्पाद्यन्ते प्रमेयाण्यनेन इति तन्त्रम् प्रमाणम्; तदेवाधिकरणं आश्रयो येषामर्थानाम्, ते यथाप्रामाणिका इत्यर्थः। तेषामभ्युपगमसंस्थितिरङ्गीकरणं सिद्धान्तः। सामन्यलक्ष्मेदम्। स चतुर्विधः :—सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्। **तत्र सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः** यथाप्रमाणं प्रमेयबोधनम् इति। समानतन्त्रसिद्धः प्रतितन्त्रासिद्धः **प्रतितन्त्रसिद्धान्तः**। यथा—"इदं साङ्ख्यानाम्" "इदं योगानाम्" इति। यत्सिद्धावन्यप्रकरणसिद्धिः, **सोऽधिकरणसिद्धान्तः।** यस्यार्थस्य हेतोर्वा पक्षस्य वा सिद्धावन्यस्य प्रकरणस्य प्रक्रियमाणस्यानुक्तस्यार्थस्य सिद्धि-

भवति **सोऽधिकरणसिद्धान्तः**। तत्रेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थ-ग्रहणात् इति हेतोस्सिद्धावनुषङ्गिणोऽर्था इन्द्रियनानात्वम् तदविषयाणीन्द्रियाणि गन्धादि-द्रव्यं गुणाधिकरणमनियतविषयाश्चेतना इति । विवादाध्यासितं बुद्धिमत्पूर्वकम् इति पक्षसिद्धावनुषङ्गिणोऽर्थाः सर्वज्ञत्वादयः सिद्धान्ताः। अपरीक्षिताभ्युपगमात् तद्विशेष-परीक्षण**मभ्युपगमसिद्धान्तः**। अपरीक्षितं साक्षाच्छास्त्रेणानुक्तं यथामनस इन्द्रियत्वम् तस्याभ्युपगमादभ्युपगमसिद्धान्तः। कथम्? तदनुक्तमप्यभ्युपेतं सूत्रकृता इति तद्विशेष-परीक्षणं करोति। यतः :—

"धर्मिणं प्रापयन्नेष ह्याश्रयासिद्धिवारकः ।
वादजल्पवितण्डानां हेतुरित्युच्यते पृथक् ॥"

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः**। अवयवा इत्यनेन साधक-वाक्येन निर्देश्यत्वं सामान्यलक्षणमवयवानां सूचितम् । तत्र **साध्यनिर्देशः प्रतिज्ञा** सिषाधयिषितधर्मविशिष्टो धर्मीह साध्यः तस्य निर्देशोऽङ्गीकरणं प्रतिज्ञा। यथा "अनित्यः शब्दः" इति। **उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः**। साध्यसाधनं हेतुः इति सामान्यलक्षणम्। साध्यम् साध्यतेऽनेन इति व्युत्पत्त्या साध्यसाधनपरम्। तत्रोदाह्रियते-ऽस्मिन् इति **उदाहरणम्** दृष्टान्तधर्मी तेन साधर्म्यं साध्यधर्मिणः। कृतकत्वादि साधनम्। तस्मात् यदुत्थितं ज्ञानविवक्षादिक्रमेण वचनं "कृतकत्वात्" इत्यादि साध्य-साधनं हेतुः। अत्र तु यदा उदाहरणेन साधर्म्यं इत्येतावन्मात्रत्वं विवक्षितं, तदा केवलान्वयिहेतुः । यदा तु विशेषनिषेधार्थत्वादनुदाहरणेन विपक्षेण वैधर्म्यं, तदा अन्वयव्यतिरेकी। तथा वैधर्म्ये तु उदाहरणेन विपक्षस्वरूपेण वैधर्म्यात् व्यतिरेकादेव साध्यसाधनं, स हेतुर्व्यतिरेकी ।

**साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्**। साध्यसाधनयोर्व्याप्तिः अनेन उदाह्रियत इति उदाहरणम् इति निरुक्तिः सामान्यलक्षणम्। सर्वं तु सूत्रं साधर्म्योदाहरणलक्षणम्। तथा च साध्येन पक्षेण साधर्म्यात् कृतकत्वादेः प्रयोजकाद्यः तद्धर्मभावितस्य पक्षस्य धर्मो नित्यत्वादिः स यस्यासौ भावश्च विधीयमानः अस्ति इति तद्धर्मभावी दृष्टान्तः तद्वचनम् इत्यर्थः। एतत् साधर्म्योदाहरणम् तत्र साध्यसाधर्म्यात् इति साधनविकलमपास्तम्। तद्धर्मभावी इति साध्यविकलम् द्वाभ्यां पदाभ्यामुभय-विकलम्।

**तद्विपर्ययाद् विपरीतम्** । तेन पक्षेण विपर्ययात् वैधर्म्यात् निरात्मकत्वाद्यो-ऽतद्धर्मभावी प्राणादिमत्त्वरहितो घटादिः तदचलम् वैधर्म्योदाहरणम् ।

**उदाहरणापेक्षस्तथा इत्युपसंहारो न तथा इति वा साध्यस्योपनयः** । उदाहरणापेक्षः साध्यस्य पक्षस्य दृष्टान्तसिद्धव्याप्तिहेतुमत्तयोपसंहार उपनय इति सामान्य-लक्षणम् । तथा इति न तथा इति सामान्यापेक्षे द्वे विशेषलक्षणे । तथा च कृतकः शब्दो; न च तथा प्राणादिमज्जीवच्छरीरम् इति ।

**हेतुव्यपदेशात् प्रतिज्ञायाः पुनर्वचननं निगमनम्** । तस्मात् इति हेत्वपदेशानन्तरं तत्सहितमेव यत् प्रतिज्ञायाः स्वार्थद्वारा पुनरभिधानं तन्निगमनम् तस्मादनित्य इति ।

"वादजल्पवितण्डानां प्रवृत्तौ हेतवो यतः ।
तत्त्वव्यवस्थितेः स्थानमतो भेदेन भाषिताः ॥

अवयवाः ।

**अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितः तत्त्वज्ञानार्थमूहस्तर्कः** । पुरोवर्तिन्यूर्ध्वे धर्मिणि सामान्यतो ज्ञाते विवक्षिते तत्त्वेऽनिर्णीतयथास्वरूपे जिज्ञासा तावद्भवति । ततः संशयः "किम् अयं स्थाणुः पुरुषो वा" इति तदनन्तरं कारणोपपत्तितो विपर्यये ऽनिष्टापत्तितो भवितव्यतात्मा भवति प्रत्यय ऊहरूपस्तर्कः पुरुषेणानेन भवितव्यम् इति । अनिष्टापत्तिस्तु सततमिह वाहान् वाहयति राजा इति न शक्यं तृणमात्रकेणापि स्थातुमत्र, किंपुनरियता स्थाणुनेति ।

"इतिकर्तव्यतारूपो विषयस्य विवेचनात् ।
प्रमाणस्य यतस्तर्कस्तेनायं सुतोषितः ॥"

पृथक् प्रमाणार्थसन्देहेऽस्य निर्णयाङ्गत्वेनापेक्षणादेव न संशयान्तर्भावः शङ्कनीयः ।

**विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः** । विमृश्य इति संशयं कृत्वा यदर्थस्य तर्कविवेचितस्यावधारणं पक्षप्रतिपक्षाभ्याम् इति लक्षणया तद्विषयसाधन-दूषणाभ्यां स निर्णयः । निर्णयाङ्गत्वादस्य जल्पवितण्डयोर्निर्णयार्थत्वाच्च पृथगुक्तोऽयम् ।

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ।** पक्षप्रतिपक्षपरिग्रहस्थानेनैव नानाप्रवर्तना विचारविषया वचनसन्दृब्धिः कथा इति कथायाः सामान्यलक्षणं सूचितम् । सर्वन्तु कथाविशेषवादलक्षणार्थम् । तत्र सामान्यतोऽधिगतस्य वस्तुनः शब्दादेर्विशेषैः नित्यत्वानित्यत्वादिकैः एकाधिकरणौ विरुद्धौ एककालौ अनवसितौ पक्षप्रतिपक्षौ ; तयोः परिग्रहोऽङ्गीकारवचनम् वादः । एवं च जल्पवितण्डे अपि वादः स्यात् । अत उक्तं 'प्रमाण' इत्यादि ।

प्रमाणेन तर्केण वा पक्षस्य साधनं सिद्धिः प्रतिपक्षसाधनस्योपालम्भ उपालब्धिश्चास्मिन् क्रियत इति । न च एवमपि तुल्यता, अभिप्रायनियमात् ; तत्त्वतो हि तर्कसहितप्रमाणमूला अवयवा भवन्तु, मा वा भूवन् । वादिनोस्त्वयमभिप्रायः—भवन्ति प्रमाणमूला एव इत्येतावतैव वादः । जल्पवितण्डयोस्त्वाभासेनापि प्रत्यवस्थेयम् एकान्ते पराजयाद् वरम् संशय इति । उपालम्भपदेन सर्वनिग्रहस्थानप्राप्तौ नियमार्थं सिद्धान्त इत्यादिपदद्वयम् । तत्र सिद्धान्ताविरुद्ध इत्यनेनापसिद्धान्तो वादे न चोद्य इति लभ्यते । पञ्चपदात् न्यूनाधिके, अवयवोपपन्नपदाच्च हेत्वाभासाः । स्वपक्षसाधनपरपक्षसाधनोपालम्भः स्वपक्षसाधनसाधन—परपक्षसाधनसाधनदूषणशब्दतो विवक्षितानि साधनोपालम्भशब्देनैवोक्तानि । प्रतिज्ञादयश्च प्रमाणशब्देनैवोक्ताः । अतो न तत्कथनाय पञ्चावयवपदम् ; किन्तु न्यूनादिनिग्रहस्थानसूचनायैव । न च अयं नियमोऽष्टनिग्रहस्थानक एव वादः ; किन्तु यावत्यनुद्भाविते तत्त्वप्रतिपत्तिव्याघातः तत्सर्वमुद्भाव्यम् । न त्वप्रतिभादि । तस्यानुद्भावनेऽपि तत्त्वाविरोधात् शिष्यादिविषयत्वाच्च वादस्य नाप्रतिभादिचोदना न्याय्या । तदाह—तं शिष्यगुरुसब्रह्मचारिशिष्टश्रेयोऽर्थिभिरनसूयुभिः अभ्युपेयात् इति । त्रिविधफलत्वाच्च वादस्य । अज्ञावबोधो ज्ञातानुमानं संशयच्छेद इति त्रीणि चोक्तानि । प्रमेयेऽपि पृथग्वाद उपलक्षयितुमुच्यते । तादृशो व्यवहारश्च तत्त्वज्ञानाय जायते ।

**यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ।** अभिप्रायनियमवर्जं सकलेन वादलक्षणेनोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भश्च जल्पः । समाधाने परेणोक्ते झटिति तात्त्विकोत्तरास्फुरणे समाकुलबुद्धेश्छलादिप्रयोगः । कदाचिदसौ छलादिना व्याकुलबुद्धिरुत्तरं न प्रतिपद्येत ; । अतो निगृह्यते इति । एवञ्चासदुत्तरत्वेऽप्येषां सिध्युपालब्ध्यङ्गता ।

**स प्रतिपक्षस्थापनाहीनो वितण्डा ।** सजल्प एव प्रतिपक्षे प्रतिवादिपक्षे यदा स्थापनया साधनवाक्येन हीनो भवति तदा वितण्डा । पक्षमङ्गीकृत्य न स्थापयति ; किन्तु

प्रथममेवोपालभते द्वितीयः । तत्त्वाध्यवसायसंरक्षाहेतुभूते उभे अपि, कण्टकवृतितुल्यत्वात् । अतो भेदेन भाषिते ।

**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला** हेत्वाभासाः । हेतुलक्षणाभावादहेतवो हेतुसामान्यात् हेतुवदवभासमाना हेत्वाभासा इति सामान्यलक्षणं हेत्वाभासा इत्यनेन पदेन सूचितम् । सर्वेण तु विभागः, पञ्चैव इति । तत्र **अनैकान्तिकः** सव्यभिचारः । एकोऽन्तः सपक्षो, अपरश्च विपक्षः । तत्रान्वयेन व्यतिरेकेण वा गत उभयपक्षगामी इत्यर्थः । अन्वयेनासाधारणानैकान्तिको, यथा—"नित्यः शब्दः प्रमेयत्वात्' इति । व्यतिरेकेणासाधारणानैकान्तिको, यथा—"नित्या भूर्गन्धवत्त्वात्" इति ।

**सिद्धान्तमभ्युपेत्य तद्विरोधी** विरुद्धः । सिद्धान्तमङ्गीकृत्य तमेव यो विरुणद्धि स विरुद्धो, यथा—"नित्यश्शब्दः कृतकत्वात्" इति । अत्र च हेतुद्वारा पुंसोऽभ्युपगमो हेतावुपचरितः अभ्युपगमविषयतामात्रेण च पक्ष एव सिद्धान्त उक्तः । तेन तु तद्विरोधो विरुद्धो न मीमांसकस्येव विशेषे विरुद्ध इत्युक्तम् । न हि विशेषोऽभ्युपगमविषयः प्रतिज्ञापदागोचरत्वात् , किन्तु प्रतिज्ञातार्थानुषङ्गी; यथा—'विवादाध्यासितं बुद्धिमद्धेतुकम्' इत्यत्र 'सर्वज्ञत्वादिः ।

**यस्मात्प्रकरणचिन्ता स निर्णयार्थमुपदिष्टः प्रकरणसमः** । प्रक्रियेते प्रसूयेते इति प्रकरणम् पक्षप्रतिपक्षौ । तयोश्चिन्तावमर्शात् प्रभृति निर्णयम् यावदालोचनं सा यस्माद्भवति सुखनिर्णयार्थं यदोच्यते तदा प्रकरणसमो भवति । सर्वथा सत्प्रतिपक्षः प्रकरणसम इति ज्ञेयः, अन्यथाऽनैकान्तिकेपि प्रसङ्गात् ; निदर्शनम् यथा— नित्यः शब्दो वस्तुत्वे सत्यनुपलभ्यमानानित्यधर्मकत्वात् आकाशवत् । एवम् अनित्यः शब्दो वस्तुत्वे सत्यनुपलभ्यमाननित्यधर्मकत्वात् घटवत् । न वा इतरेतरबाद्यभिप्रायेणासिद्ध एवान्तर्भावः । सन्देहावस्थाने द्वयोर्वादिनोः प्रकरणसमाङ्गीकारात् तदा च तयोरुद्भावनासामर्थ्यात् । सामर्थ्ये त्वन्यतरासिद्धत्वमेव । एवमन्यदप्युदाहरणम्—"मूर्तं मनः क्रियावत्त्वात् शरवत्" "अमूर्तं मनः अस्पर्शवत्त्वात् आकाशादिवत्" इति ।

**साध्याविशिष्टःसाध्यत्वात् साध्यसमः**, साध्येन योऽविशिष्टस्तुल्यः स साध्यसमः । अत्र चासिद्धः साध्यसम इत्येव सूत्रे सिद्धे साध्याविशिष्टपदं अन्यतरासिद्धस्यापि संग्रहार्थम् । अन्यथा अत्यन्तासिद्ध एव परमसिद्धः स्यात् । न त्वेवमन्यतरा-

सिद्ध एवैकस्यात् ; अन्येषां सर्वथा सिद्धत्वेन साध्यविशेषाभावात् । अत उक्तम्— साध्यत्वात् इति ।

साध्यत्वेन असिद्धत्वमुच्यते । तच्च केषांचित्सर्वदा, केषाञ्चित्कादाचित्कम् इत्यविरोधः ।

**कालात्ययापदिष्टः कालातीतः ।** काल इति हेतूपन्यासकालः स तु सन्देह-विशिष्टः सन्दिग्धे न्यायप्रवृत्तेः । तस्य कालात्ययः प्रत्यक्षादिभिः तद्विपरीतार्थनिर्णयात् तस्मिन् कालात्ययेऽपदिष्ट उपदिष्टः उपन्यस्तो यः स कालात्ययापदिष्टः ।

**वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ।** वक्तुं विवक्षितादर्थादन्योऽर्थो-ऽत्रार्थः । तस्य विकल्पः कल्पना, तस्योपपत्तिः सद्भावः तया विवक्षितार्थादर्थान्तर-कल्पनया यो वचनविघातः क्रियते तत् छलम् । तत्त्रिविधम् :—वाक्छलम् सामान्य-छलम् उपचारच्छलञ्च । **अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ।** अविशेषेण सामान्येनाभिहितेऽर्थे या वक्तुरभिप्रायादर्थान्तरस्य कल्पना तद्वाङ्निमित्तत्वाद्वाक्छलम् । यथा—“ नवकम्बलोऽयं माणवक ” इति नूतनाभिप्राये-णोक्ते कश्चिन्नवसङ्ख्याभिप्रायेण प्रतिषेधति “ कुतोऽस्य नवकम्बला ” इति । **सम्भवतो ऽर्थस्यातिसामान्ययोगादसद्भूतार्थस्य कल्पना सामान्यच्छलम् ।** यथा— “ चतुर्वेदाभिज्ञोऽयं ब्राह्मण ” इत्युक्ते व्रात्येनानैकान्तोक्तिः । **धर्मविकल्पनिर्देशेऽर्थ सद्भावप्रतिषेध उपचारच्छलम् ।** शब्दस्य धर्मः प्रयोगः तस्य विकल्पो द्वैविध्यम्— प्रधानताऽप्रधानताभेदेन । तेन निर्दिश्यतेऽनेन इति व्युत्पत्त्या वाक्ये, “ मञ्चाः क्रोशन्ति ” इत्येवंरूपे सति योऽर्थसद्भावस्य प्रतिषेधः क्रियते—“ न मञ्चाः क्रोशन्ति अचेतनत्वात् ” इति । अर्थसद्भावेन च प्रतिषेधः—“ पुरुषाः क्रोशन्ति न मञ्चाः ” इति । तदुपचारनिमित्तत्वात् उपचारच्छलम् ।

**साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ।** प्रतीपमवस्थानं प्रत्यवस्थानम् । तेन द्वितीयवाद्येव जातिवाद्युक्तः । यथा पक्षे सति प्रतिपक्षवचनं स्थापनायां सत्यां प्रत्यवस्थानं जातिः । एवं सति सम्यक्साधने प्रसङ्गात् अत उक्तम्—साधर्म्य-वैधर्म्याभ्याम् इति । तस्मात् हेत्वाभासाप्रयोजकाभ्याम् इति ज्ञेयम् ।

**विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्** । अन्यथाऽभिहितस्यान्यथा प्रतिपत्तिः विप्रतिपत्तिः । स्वपरोत्तरसाधनासंवित्तिः अप्रतिपत्तिः । त एते षोडश पदार्थाः समयादौ लक्षणतो निरूपिताः । एतद्विरुद्धोऽयमद्वैतसमन्वय इति ।

**अत्र वदामः** :—"अस्यैव तत्त्वविभागस्य साङ्ख्याद्यभिमततत्त्वविभागेन विरुद्धत्वात् सर्ववादिविभागकल्पनालम्बनस्य चाविभक्तवस्तुनः सर्वाविरुद्धत्वात् तद्विषय-वेदान्तसमन्वयस्य पदार्थविभागालम्बनन्यायकलापेन न विरुद्धत्वं युक्तम् । पदार्थभेदस्य च तत्र तत्र सन्दिग्धत्वात् । न च एतेषां तत्त्वज्ञानं निश्श्रेयसाय, द्वैतदर्शनात् भयश्रवणात् । तस्मात् अद्वैते वेदान्तानां युक्त एव समन्वयः ॥

## त्वंपदार्थविचारः ।

**अथ** अहं ब्रह्मास्मि इति अहम् पदार्थो निर्णेतव्यो यस्य ब्रह्मत्वं विधातव्यम् । न च "सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहम्नामाभवत्" इति श्रुतेः शुद्धस्यैव 'अहम्' इति नामधेये शोधनानवतारः स्यात् । श्रुतेः प्रथमजशरीरिविषयत्वेन नाम्नोऽपि संविदित-विषयावधारणात् । **तत्र केचिदाहु** :—

पृथिव्यादिभूतसङ्घ एवाहंपदार्थः ऐकैकश्येनादृष्टोऽपि स्त्रीपुंसयोरिव मिलितभूतानां भोगः सम्भवति । न च स्वतन्त्रभोक्तॄणां गुणप्रधानभावसाध्यसंघातो न युक्तः । स्त्रीपुंसयोरपि शरीरयोरेव गुणप्रधानभावो न केवलभोक्त्रोः इति वाच्यम् ;

"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः"

इति श्रुतेः विशिष्टस्यैव भोक्तृत्वाङ्गीकारात्, विशिष्टयोश्च स्त्रीपुंसयोर्दृष्टत्वादेव भोगस्या-नपह्नवात् ।

अथ चैतन्यस्य विशेषगुणत्वेन रूपादिवत् न देहे सति व्युपरमः संभवति । तथा च कथं स्वापादि । न च तदनभिव्यक्तिस्तदुपपत्तिः, तदभिव्यक्तेरपि तद्धर्मत्वे तथाभावस्य समानत्वात्, **नैवम्** ; गन्धस्य विशेषगुणत्वेऽपि मल्लिकामुकुलादौ कादाचित्काभिव्यक्ति-दर्शनात्, भल्लातकादिना विनश्यद्देहरूपेण व्यभिचाराच्च । वैशेषिकैरपि चैतन्यस्य विशेष-गुणत्वं वदद्भिः तस्य स्थितेऽप्यात्मनि जन्मविनाशाङ्गीकारेण स्वापाद्युपपादनस्वीकाराच्च न तन्मतेनायं पर्यनुयोगः । वेदान्तिभिश्चैतन्यस्य विशेषगुणत्वानङ्गीकाराच्च ।

अथान्तःकरणवृत्तिप्रतिविम्बितचैतन्यस्य बिम्बभूते आत्मन्यध्यस्तत्वेन तदध्यासाद्विशेषगुणव्यवहारः, तथाऽपि भूतविशेषगुणत्वेन रूपादिवद्देहभावाभावित्वसाधने भवत्येवान्यतरासिद्धिः। विशेषगुणमात्रेण यावद्देहादिभावित्वसाधने वैशेषिकस्य सुखादिशब्दाभ्यां वेदान्तिनश्चातपादिविनश्यद्रूपेण व्यभिचारः।

अथ देहस्यात्मत्वे बाह्येन्द्रियवेदनापातः। न हि चक्षुःस्पर्शने विनाऽन्यतो रूपवद्ग्रहणसंभवः न चेष्टापत्तिः; अव्यावृत्तबाह्येन्द्रियस्यापि 'अहम्' इत्यात्मोपलब्धेः। न च चक्षुषोऽतिरिक्तस्य स्पर्शनस्येव मनसो विरूपवद्ग्राहकत्वं कल्प्यम्; कल्पकाभावात्। न च निमीलितनयनस्यापि अहम्मतिः कल्पिका इति युक्तम्, तस्या नीरूपविषयत्वेनाऽप्युपपत्तेः। उत्कातिप्रसक्त्या च न विनिगमनसम्भवः।

अत्र वदामः। केयम् निमीलितनयनस्य अहम्मतिः किं गौरत्वादिविशेषिता? किं वा सुखादिविशेषणा? सर्वथा निर्विशेषणा वा? आद्ये कथङ्कारं नीरूपविषयत्वेनोपपत्तिः? चार्वाकमते च चक्षुषोपलब्धस्यानुवादमात्रत्वात्। द्वितीयेऽपि नाम-जातिरूपादेरत्यन्ताभ्यस्तस्य सङ्घातस्य तादात्म्याध्यासवादिनो "अहम्" इति प्रत्ययस्य विषयत्वेन तस्य च नीरूपविषयत्वम्। बार्हस्पत्यस्य तु चक्षुरादिना विषयसंश्लेषवद्देहं तत्र विकारिणमनुभूय निमीलितनयनस्याप्येवं अनुवादसम्भवात्। एतेन तृतीयोऽपि व्याख्यातः। अत एव प्रत्यक्षादेव व्यतिरिक्तात्मासिद्धौ तत्प्रत्यक्षातिरिक्तप्रमाणाभावाद्देहव्यतिरिक्तात्मनो नास्तित्वाभिधानं तदपोह्यम् इत्यपेयम्; बाह्यप्रत्यक्षस्यान्तरस्य च यथायोगं भूतसङ्घाततत्कार्यग्राहकत्वमात्रेण चरितार्थत्वात्, "य एवाहं बाल्ये पितरावन्वभूवं स एव स्थाविरे प्रणप्तॄननुभवामि" इति प्रत्यभिज्ञायामपि "स एवायं देवदत्त" इतिवत् देह एवाभाति। मम शरीरं इति व्यपदेशो नास्तिकस्य आस्तिकस्य ममात्मा इति व्यपदेशवदौपचारिको नीयते। तेन अहं मनुष्य इति तादात्म्यवत् "मम शरीरम्" इति भेदो भाति इति न प्रतिबन्दी युक्ता।

अथ देहो न चैतन्याश्रयो भूतत्वात् घटवत्; न च अनुमानं न मानम्? बाधकाभावात्। भवताऽपि प्रत्यक्षव्यतिरेकमात्रं नेष्यते, न प्रामाण्यं कथानविकारप्रसङ्गात्, तदसाधु; कदाचिच्चैतन्यानाश्रयत्वेन सिद्धसाधनत्वात्; यथैव कदाचित् चैतन्यानाश्रयत्वं व्यतिरिक्तस्यात्मनः, तथा भूतात्मकस्यापि इति स्वीकारात्, "वेद, विद्वान् ब्राह्मण" इति सामानाधिकरण्यप्रत्ययविरोधाच्च।

**यदप्युक्तम्**—चैतन्यविशिष्टस्य देहस्य 'अहम्' प्रत्ययवेद्यत्वेऽन्यत्रापि 'अहम्' प्रत्ययप्रसङ्गः। अथ, स्वशरीर एव 'अहम्' इति मतिः।

ननु स्वमतमवधार्य वदन्तु भवन्तः, न च प्रसङ्गसाम्यम्; अस्मन्मते परात्मनोऽप्रत्यक्षत्वेन तदप्रसङ्गात्; न च त्वम् तदिच्छसि, तदसिद्धिप्रसङ्गात्। तदप्यनालोचनपूर्वकं, यद्यात्मत्वप्रयुक्तमेव 'अहम्' धीगम्यत्वम्, तदा कथं न प्रसङ्गसाम्यम्। यदि वा तत्प्रत्यक्षमूलत्वम्, तदप्यनुचितम्; योगिनामीश्वरस्य वा परात्मसु प्रत्यक्षेष्वपि अहम्बुध्यभावात्।

अथ चैतन्यस्य भूतविशेषगुणत्वे रूपादिवत् पृथिव्यादिव्यापितापातः, तदा घटादावपि चैतन्यं समवेयात्। देहावयवेष्वपि चैतन्योपलब्धिः स्यात्,

**नैतदपि**; पार्थिवलोहितादिरूपेणैकप्रतीकवर्तिना शब्देन च व्यभिचारात्। देहव्यतिरिक्तात्मगुणत्वेऽपि पवनगुणत्वात् तत्परिमाणवच्चैतन्यस्य सर्वत्र प्रसङ्गः स्यात्। संघाताधीनचैतन्यस्य प्रत्येकं भूतेषु प्रेक्षयितुमशक्यत्वाच्च देहाकारपरिणतानामेव भूतानां चैतन्यस्वीकारात्। अतो देहस्य अहम्पदार्थत्वे न दोषं पश्यामः; दृश्यत्वादेरात्मत्वेऽपि योजयितुं शक्यत्वात्। न च स्वर्गादिफलकर्मचोदनावशादतिरिक्तात्मसिद्धिः, सुखविशेषात्मकस्य स्वर्गस्यानेनैव देहेन भोगसम्भवेन तदनाक्षेपात्। मेरुपृष्ठादिगमनस्य पादुकादिसिद्धिबलेन सुकरत्वाच्च "यज्ञायुधी यजमानः स्वर्गं लोकं याति" इति चोपपत्तेः अनेकशरीरहेतुपुण्यादेश्चोचितसुखदुःखद्वारेणैकेनापि शरीरेण भोगोपपत्तेश्च। फले देहान्तरे च तात्पर्ये वाक्यं भिद्येत, योगबलेन चिरकालयौवनस्थायित्वादिसंभवेन देवदेहत्वव्यपदेशव्युत्पादनाच्च। विग्रहवत्या देवताया अध्वरमीमांसकैरनभ्युपगमाच्च। न च प्रत्यक्षागोचरप्रेतादिसंवादाद्देहव्यतिरिक्तः आत्मा, कदाचित्प्रेतादेरपि शरीरं दृश्यत एव प्रत्यक्षेण, न पुनर्व्यतिरिक्तात्ममात्रम्; यतः "तम् विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा[1] च" इतिवत् जन्मान्तरीयत्वेन प्रज्ञाया अप्रत्यभिज्ञानादेवासङ्गतम्। देहान्तरसञ्चारश्च **कदलीगर्भफल-न्यायेन**[2] देहस्यैव, श्राद्धादिक्रिया च कर्तुरेव फलदायिनी कथमपरथा सर्वथा मुक्तस्य पक्षान्तरेऽपि पुत्रादेः श्राद्धादिक्रिया फलपर्यवसायिनी स्यात्। जातिस्मरादेश्च स्वप्नदृष्टवन्मिथ्यार्थानुवादकत्वात्। तस्मादयमेव पक्षो रमणीय इति **बार्हस्पत्याः**।

---

1. बृ. 4. 4. 2.   2. कदली यथा स्वगर्भेण फलेन नश्यति तथेत्यर्थः

**तत्र ब्रूमः** :—कथाऽधिकारलोकयात्रासिद्धौ शब्दानुमानयोः स्वरूपमात्राव-गाहिप्रत्यक्षागृहीतप्रामाण्यत्वात् तत्सिद्धदेहातिरिक्तचेतनस्य न कथञ्चिदपह्नवः शक्यानुष्ठानः ।

किञ्च बृहस्पतिः सहस्राक्षस्य वस्वाद्युपलक्षितसुरसमूहाधिपतेः पुरोधाश्चेत्, तर्हि भारतभूभागे सम्यगनुष्ठिताश्वमेधशतफलत्वात् सहस्राक्षपदस्य तथेतरेषां पुरुषाणामपि "ये कर्मणा देवानपि यन्ति" इत्यागमात् तत्तत्कर्मविशेषफलत्वात् पूर्वदेहविनाशेन फल-शालित्वे नानादेहसञ्चार्यात्मसिद्धिः संस्कारेण प्रेतत्वादिव्यावृत्त्या । प्रेतादीनामपि च विरुद्धमरणादिकर्मफलानां कथङ्कारं देहतावन्मात्रत्वम्? तेन सुराचार्यस्य नैतद्वास्तिक-मनुमतं भाति । सुराश्च लोकेऽनुवर्तमानं देहान्तरात्मानं जन्मान्तरीयचरित्रसंवादेन द्रढयन्ति । स्वप्नेऽपि न च जाग्रद्व्यवहारो बाह्यज्योतिरनुग्रहाभावे करणादिज्ञानाधीनः, विलक्षणात् "ज्योतिरात्मा" "आत्मनैवायं ज्योतिषास्त" इत्यस्मादवगम्यते । **अथासुराणां** ह्येषोपनिषदिति छन्दोगश्रुतेः कश्चिदसुर एव बृहस्पतिर्नाम, **तदापि** जातिस्मृत्यादिबलाद्देह-व्यतिरेक आत्मनो दुर्वारः । न च चैतन्यं प्रत्यक्षदेहधर्मः शूलादिवदान्तरतयाऽपि देहधर्मत्वेन व्यपदेशादर्शनात्, आन्तरदेहदेशपरिणामत्वानङ्गीकाराच्च ।

**अथ** 'गच्छामि' 'जानामि' इति समानव्यपदेशाद्गतिज्ञानयोः समानाधारत्वं स्फुरति, तर्हि रथादिना गच्छतोऽप्येवंविधव्यपदेशदर्शनात् रथादेरपि प्रज्ञाधारत्वं प्रसज्येत । **अथ** रथारूढ इव देहारूढश्चेतनो नानुभूयते अनुभूयत एव स्वप्नं सेवमानैः । देहस्यैवात्मत्वे स्वाप्नदेहस्यौषधादिगृहीतस्य च व्याघ्रादिदेहस्यापगमे द्रष्टुरपगमात् पुनः स्वदेहे तत्रानुभूतानुसन्धानं न स्यात् । मरणे च यमदर्शनात् पुनरायातस्य तथानुभव-संवादाच्च । अतो नागमा अपि "यथा च मरणं प्राप्य आत्मा भवति गौतम तथा वक्ष्यामि" इति प्रतिज्ञाय—

> "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
> स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥
>
> एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
> तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥ "[1]

---

1. कठ. 2. 2. 8.

इति व्यतिरेकात्मनिरूपणपराः स्वर्गादिपराश्च यथाकथंचित् कदर्थनीयाः । तेन न देह एव अहम्पदार्थः । देहोऽपि शरावादिवत्परिमाणभेदाद्भिन्न इति कश्चिदाह—न च देहान्तरारम्भासम्भवः अनारब्धत्वे भुक्तपीतयोश्चर्मप्रसेविकादिनिक्षिप्तयोरिव परिणामवत्त्वं न स्यात् ।

यदपि पराशरमुनिनोक्तम् :—

"मृन्मयं हि गृहं यद्वन्मृदालिप्तं स्थिरीभवेत् ।
पार्थिवोऽयं तथा देहः पार्थिवैः परमाणुभिः ॥"

इति, तदपि कुड्यादिवद्देहस्यान्तरलोपासम्भवात् परमाणुग्रहणाच्चारम्भं गोचरयति ; ततः परिमाणभेदाद्भेद इति, नैतत्साधुः ; वृद्धिविकारेणापि परिमाणभेदसंभवात् । अपरथा "वर्धते" इति लोकव्यवहारस्य "अष्टवर्षं ब्राह्मणमुपनीयत" इत्यादिशास्त्रीयव्यवहारस्य चोच्छेदः स्यात् । न च सन्तानालम्बनोऽयं व्यवहारः तस्यावस्तुभूतत्वात् ; सन्तानिनां भेदाच्च द्वितीयादिशरीरिणां योनिजत्वादिव्यवहारस्योच्छेदप्रसङ्गात् । ततो न परिमाण-भेदाद्देहभेदः ।

न च अयं "पृथिवी शरीरम्" इत्याम्नायात् पृथिवीमात्रारब्धः ; 'पञ्चात्मकम्' इति श्रुत्या त्रिवृत्करण-श्रुत्या पञ्चत्ववचनाच्च विनाशे पृथिवीश्रुतेर्भूतान्तरोपलक्षणत्वोपपत्तेः । भूतान्तरस्यापचये देहस्यापचयदर्शनाच्च तन्त्वपचयेऽपचीयमानपटस्य तन्त्वारब्धत्ववत् । न च सुवर्णवत् अन्यथासिद्धिः, शुक्लशोणितयोर्भुक्तपीतयोश्च श्रुत्यैव धातुविशेषारम्भकत्वेन जलाद्यात्मकत्वयोर्विनियोगात् । न च प्रत्यक्षाप्रत्यक्षारब्धत्वेन घटादेरप्रत्यक्षत्वप्रसङ्गः ; प्रत्यक्षाप्रत्यक्षशब्दाभ्यां सरूपनीरूपविवक्षायामपि यावदवयवैरारम्भः तावदवयवानां प्रत्यक्ष-त्वाभावेऽपि घटादेः प्रत्यक्षत्ववत् अनियतारब्धस्यापि तत्सम्भवेन प्रसङ्गस्य दुर्बलत्वम् । न खलु रूपवन्तोऽपि घटस्यान्तरावयवाः प्रत्यक्षीभवन्ति । इन्द्रियेणैकदेशसन्निकर्षेऽपि प्रत्यक्षज्ञानस्वीकारात् वायुवनस्पतिसंयोगादेर्धर्मिग्रहणसापेक्षत्वेन तदग्रहणे ग्रहणाभावो युक्तः, शरीरस्य पुनः द्रव्यस्य समग्रसमवायिग्रहणाभावेऽपि घटादेरिव ग्रहणसम्भवाच्च । अतो बाधकाभावात्पञ्चात्मकं शरीरम् । तच्च नात्मेति स्थितम् ।

इन्द्रियाण्यपि न मेलकमात्रम् सर्पादेःश्रोत्रादिगोलकाभावे कार्यापलापप्रसङ्गात् । अत एव न गोलकशक्ती, विनापि दृगादिशक्तिसम्पिण्डित आत्मा, तत्रैव शक्तिश्चक्षु-

रूपात्मना परिणमते इत्येकदेशिकल्पना। "एतेभ्यः कार्यकारणाकारपरिणतेभ्यो भूतेभ्यः प्रतिबिम्बतया तेषु समुत्थाय"[1] "मात्रासंसर्ग" इति च श्रुतेर्भूत-विकारत्वावगममात्रम्।

नापि पित्तधातुगतं तेज एव स्थानावच्छेदेनेन्द्रियम् इति वैद्यकल्पना। चक्षुर्वदितरेषामप्यालोकापेक्षाप्रसङ्गात्।

खानि च समुदितानि प्रत्येकं वा नात्मा, तथा सत्यन्यतमनाशेन मूकान्ध-बधिरादौ नाशव्यवहारप्रसङ्गात्। द्वितीयोऽपि सर्वेषां स्वातन्त्र्ये विमनस्कस्य व्यर्थदृष्टि-र्युगपत्स्यात्। अतः सर्वेन्द्रियानुभूतानुसन्धानसिद्ध्यर्थं मन एव तत्तदिन्द्रियात्मोपकरणं सर्वार्थसाधकम् इत्यपि दुर्घटम्। ग्राहकत्वे चेतनपारतन्त्र्यदृष्टेश्च। अतो न तान्यप्यात्मा।

**तानि चैकादश,** "दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्माच्छरीरादुत्का-मन्त्यथ[1] रोदयन्ति" इति आमुक्तेः सहभावप्रकाशकवेदात्, कार्यानुसाराच्च भौतिकत्वेऽपि सत्त्वासत्त्वप्रधानभूतजन्यतया ज्ञानक्रियाकर्तृत्वविभागः तेषाम्। न च "श्रोत्रादीनि च पञ्च" "षष्ठं च मन" इति इन्द्रियाणि षडेव, व्यापकम् त्वगिन्द्रियमेव तत्तत्स्थान-विशिष्टं तत्तत्कार्यकरम् इति न कर्मेन्द्रियकल्पना इति वाच्यम्; आत्मन एव त्वगिन्द्रियस्येव व्यापकस्य तथात्वकल्पनादनिन्द्रियवादप्रसङ्गात् एकेन्द्रियवादप्रसङ्गाच्च। न च देहेन्द्रियसंघातोऽप्यात्मा, सङ्घातस्यासनादिसङ्घातवत् परार्थत्वात्। न च तर्हि देहादिसङ्घातस्यापि सङ्घातार्थत्वमासनादिवत्प्रसज्यत इति वाच्यम्; वास्यादिकरणानां हस्तादिकरणप्रेर्यत्वेऽपि हस्तादेः तथात्वस्य केनाप्यनङ्गीकारात्। तथव च सङ्घातार्थत्वमेव सङ्घातस्य इत्यापादयितुमशक्यम्; आसनादिसङ्घातस्यापि तुल्यसङ्घातार्थत्वाभावात्। दृष्टं चैकबिलप्रकाशशरीरभास्वत्प्रकाशतया त्रैलोक्यसङ्घातस्य तद्वशवर्तित्वम्। एवं विज्ञानैकतान-विग्रहचेतनप्रकाश्यतया तद्वशवर्तित्वं देहादिसङ्घातस्यावश्यंभाव्येव। अतः केवलो देहः करणानि वा तदुभयसङ्घातो वा नात्मा, किन्तु लोकान्तरसञ्चारी विभुः कर्मफलभोक्ता तावदास्थेयः।

[1]अन्नरसमयः, प्राणमयो मनोमयः "तेह वाचमूचुस्त्वं न उद्गायेति[2]" "त्वं जीर्णो दण्डेन वञ्चसि"[3] इत्यागमात् "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नाय-

1. बृ. 4. 5. 13.
2. बृ. 3. ९. 4.
1. तै. 2. 1.
2. बृ. 1. 3. 2.
3. श्वे. 4. 3.

मस्तीति चैके "[1] इत्युत्तरपक्षत्वेनोपादानाच्च लोकायतिकमतं नापह्नोतुं युक्तम् इति चेत्, नैवम्; तदेतत् पदनीयमस्य सर्वस्य यदयमात्मा "[2] इति सर्वसारभूतात्मनो विज्ञाने तात्पर्योपदेशात् "यथाह वै पदेनानुविन्देत्" इति पदन्यासलिङ्गेन गवादिलाभवत् बुद्ध्यादिसङ्घाते चित्प्रतिबिम्बलिङ्गेन बिम्बभूतपूर्णचैतन्येन लाभोपदेशात् न प्रसिद्धान्नमयत्वादिसम्भवो, यतः अन्नमयादीनामन्तरान्तराद्दृष्टिसञ्चारणेन ब्रह्ममयनिरुपचरितात्मप्रतिपत्त्यर्थं "ब्रह्मपुच्छं प्रतिष्ठा" इति श्रुतेरुपन्यासात्। आनन्दमयस्यात्मनः पुच्छमयत्वेन श्रुतमपि ब्रह्म निरपेक्षया श्रुत्या प्रच्यावयति प्रथमश्रुत्या चरमश्रुतावयवार्थपुच्छश्रुतिम्। आनन्दमयवादिनोऽपि मुख्यपुच्छासंभवात्, स्वार्थच्युतत्वेन दुर्बलं बाधित्वा स्वप्रधानं ब्रह्म निरतिशयप्रतिष्ठात्वेन 'पुच्छम्' इति व्यवस्थितत्वाच्च। प्रकरणात्पूर्वपक्षतया "योनिमन्ये प्रपद्यन्ते" "न जायते म्रियत" इत्यादेर्व्यवस्थापनाच्च। इन्द्रियाणामिन्द्रियान्तरस्वीकारे तेषामप्यात्मत्वस्तवार्थमिन्द्रियानवस्थाप्रसङ्गाच्च। भूतार्थवादत्वात् शरीरादे रथहयादिरूपककल्पनया व्यतिरिक्तात्मप्रतिपादनाच्च। ततो नागमिकं बार्हस्पत्यमतम्।

अथ व्यापकस्यात्मनः कथं लोकान्तरसञ्चारः? उच्यते; उपाधयः पञ्चतन्मात्रमहाभूताख्यास्तदारब्धम् लिङ्गशरीरम्। तत्र स्थूलदेहे स्वक्षाणि नित्याकाशकल्पस्यात्मन उपाधिः तदुपहितोऽसौ लोकान्तरं देशान्तरं ईहते तल्लब्धधर्माधर्मफलं च तत्रानुभूयते इति तत्त्वदर्शिनः। "अस्ति खल्वन्योऽपरो भूतात्माख्यो योऽयं तदाश्रितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यते" इति मैत्रश्रुतेः "सर्वे अनन्ताः "[1] "समो मशकेन समो नागेन "[3] इति प्राणाद्यात्मकलिङ्गादनन्तस्यापि स्थूलदेहे संकोचावगमात् तत्सहितस्य गत्युपपत्तेः। स्वमन एव केवलं लोकान्तरं गत्वा तत्तत्कलेबरानुप्रविष्टं तदवच्छिन्नस्यात्मनो भोगं साधयति इति। "तद्यथाऽनस्सुसमाहितं सम्भारोपेतं शकटमुत्सर्जत् शब्दं कुर्वद्याति एवमेवायं शारीर आत्मा लिङ्गदेहोऽविद्याकर्मकर्मफलभोगवासनामयपूर्वज्ञासन्तानः प्राज्ञेनात्मनाऽऽत्मनि रूढोऽधितिष्ठतः उत्सर्जन् हिक्कादिशब्दं कुर्वन् याति "[4] इति जाग्रत्स्वप्नदृष्टान्तेनेहलोकपरलोकसंचारार्थो वेदाविरुद्धः पक्षः।

---

1. कठ 1. 20.
2. बृ. 1. 4. 7.
3. बृ. 1. 5. 13.
4. बृ 1. 3. 22.
5. बृ. 4. 3. 35.

किञ्च अस्मिन् पक्षे धर्माधर्मयोर्देहदेशमात्रवर्तिक्रियानिष्पन्नयोर्लोकान्तरवर्त्यात्मप्रदेशसमवायाभावात् भारतभूभागमपहाय क्रिययापि तयोरनुत्पत्तेर्देवादिभोगसद्भावो न स्यात्। प्रदेशवर्तिन्यपि क्रिया चेत् सर्वत्राधत्ते धर्मादिकं संस्कारं तदा तत्कार्यं प्रमोदादिकं देहप्रदेशादन्यत्रापि प्रसज्येत। क्रियाया इव विषयेन्द्रियसंप्रयोगस्यापि सर्वत्र स्वकार्याधायकत्वसम्भवात्।

अथ कश्चित् सत्तयैव कर्मादिकं फलोपयोगि, वैश्वानरीयेष्ट्यादिक्रियायाः पित्रादिगताया अपि पुत्रपूतत्वादिफलश्रवणात्। कर्मवद्द्रव्यं मुक्त्वापि स्वासमवेतायाः फलाधाने क्रियायाः, तदा इच्छादेः स्वाश्रयसंयोगापेक्षस्य च धर्मादेः स्वकार्यकरत्वेन तत्तदधीनभोगसाधनोत्पत्तेः धर्मादेर्निमित्तत्वात् तदाश्रयस्यात्मनोऽपि तत्र तत्र वर्तनेन व्यापकत्वसाधनं व्याकुलं स्यात्। एकदेशवर्तिगुरुत्वादेः स्वाश्रयप्रदेशसंयोगापेक्षस्य कार्यकरत्वसम्प्रतिपत्तेः। अथ स्वर्गादिवर्त्यात्मप्रदेशे धर्मादिसमवायो वक्तव्य एव; स च न सम्भवति इत्युक्तम्।

तस्मादागमानुसरणेनैव व्यापकत्वमात्मनो लोकान्तरसञ्चारो वा वक्तव्यः। आगमश्चोदाहृतः सशरीरपरः जीवस्य कर्मसहितत्वाविद्ययोपार्जितमपि जगत् क्षेत्रादिवत् कर्षणादिक्रियान्तरं कर्मान्तरं भोगसाधकत्वे ऽपेक्षते। सूक्ष्मशरीरगतं च क्रियादि वासनारूपम्। कारणाविद्यासहचरितस्य तदभेदात्। प्राणादिपञ्चकं भूतसूक्ष्मपञ्चकं कर्मेन्द्रियपञ्चकं बुद्धीन्द्रियपञ्चकं अन्तःकरणं अविद्या कामः कर्म च इति पुर्यष्टकम् मोक्षादर्वाग्जीवबन्धनमागमप्रसिद्धम्। :—

> "पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते।
> तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च॥"

इति स्मृतेश्च। ननु भूतात्मापि मिश्रणेन नयति इति वक्तव्यम्, तच्चात्रानुपपन्नम्। तदाहुर्भट्टपादाः :—

> "स्वतस्तावदमूर्तत्वान्न भूतैर्मिश्रतात्मनः[1]।
> ततश्च तैरसंश्लिष्टो न नेतुं शक्यते क्वचित्॥"

---

1. मी. वा. 2. 1. 2,

यदा मूर्तानामपि सूक्ष्माणां चन्द्रादित्यप्रकाशादीनां न मृत्पिण्डादिभिः सह मिश्रत्वमुपपद्यते; तन्नयनेन वा नयनम् तदाऽऽत्मनस्स्वभावेनात्यन्तामूर्तस्य भूतैर्मिश्रत्वं नयनं भवति इति कुत एतद् इति ?

**स्यादेवम्**, यदि मिश्रणेन नयनमुपपाद्यते न तथा, प्रतिबिम्बत्वेन हि नयनमुपपाद्यते "तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः" इत्यत्र पर्जन्यपृथिवीपुरुषयोषाख्येषु पञ्चस्वग्निषु श्रद्धापूर्वभूतानां दधिपयस्सोमरसाद्यपामपूर्वात्मकसूक्ष्मरूपेण पुरुषमिश्रितानामातिवाहिकदेहैः प्रथमे, द्वितीये चन्द्ररूपेण तृतीये वृष्टिरूपेण चतुर्थेऽन्नरूपेण भूतानां पञ्चम्यामाहुतौ योषिदग्नौ हुतानां पुरुषवचस्त्वश्रवणेन आसां च त्रिवृत्कृतत्वात् भूतमिश्रितजीवस्य वर्णितं श्रुत्युक्तं च प्रतिबिम्बाभिप्रायेण । अपरथा इष्टादिकर्मरहितानामुत्पत्त्यभावात् देहबन्धो न स्यात् । उक्तश्च यमालये दुःखभोगावनन्तरं "संयमने त्वनुभूय[1]" इत्यत्र सूत्रकृता ।

"तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य[2]

इति मनःप्रधानलिङ्गस्य गतिश्रुतेश्च ।

"अपहारो यथा भानोस्सर्वतो जलपात्रकैः ।
तत्क्रियाकृतिदेशाभिस्तथा बुद्धिभिरात्मनः ॥"

इति **सुरेश्वराचार्य**वचनात् । न च अमूर्तात्मनोऽरूपत्वात् प्रतिबिम्बोद्ग्राहित्वाभावः शङ्कनीयः; रूपस्य तत्राप्यङ्गीकारात् अविद्याया अचिन्त्यशक्तित्वाद्रूपादिकार्योपादानत्वेन प्रतिबिम्बोद्ग्राहित्वस्य सम्भवाच्च । तस्याश्चलाचलादिरूपेणानिर्वाच्यत्वाच्च । न च नीरूपस्य चेतनस्य शब्दादिवन्न प्रतिबिम्बता, तदुक्तम् :—

"शब्दगन्धरसादीनां कीदृशी प्रतिबिम्बता"

इति शङ्कनीयम्, नीरूपस्यापि नभसो जले प्रतिबिम्बदर्शनात् । न च वाच्यम्-नभसोऽपि समारोपितरूपस्यैव प्रतिबिम्बदर्शनात्, आत्मनश्च तदभावान्न प्रतिबिम्बतापत्तिः इति; अविद्यामहिम्ना तस्यापि सम्भवात् "तद्धेदन्तर्ह्यव्याकृतमासीत्[3]" "अथ योऽन्यां देवता-

---

1. ब्र. सू. 3. 1. 3. 2. बृ. 4. 4. 6.
3. बृ. 1. 4. 7.

मुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद[1]" इति चाविद्याया वेदे साक्षिसिद्धायाः सूत्रितत्वात् । प्रमाणविषयत्वे तस्या अज्ञानविषयत्वेनाज्ञानानवस्थानात्—

"आराममस्य पश्यन्ति न तं पश्यति कश्चन[2] ।
"तन्न पश्यन्त्यकृत्स्नो हि स"[3]

इति च यथावस्त्वदर्शनविरोधित्वेन तस्या अवधारणाच्च । अत एव "आदित्यवर्णम्" इति समारोपितरूपाभिप्रायेणाह वेदाचार्यः ।

अथाप्यनाद्यविद्यायामनादिप्रतिबिम्बभावः कथं रूपसमारोपपूर्वकः ? उच्यते ; वेदस्यानादित्वात्, तत्रैव च 'आदित्यवर्णं' "रूपं रूपं प्रतिरूपो बभूव" इति च रूपसमारोपप्रतिबिम्बभावयोरवगमात्, तत्प्रामाण्यानुसारेणैव तन्निर्णयः ।

अथवा चाक्षुषप्रतिबिम्ब एव रूपनियमः। प्रतिबिम्बपक्षे च द्विगुणीकृत्य नभोवद्वृत्तिसद्भावात्, अवच्छेदपक्षे च तदसम्भवात् हृदयाद्यवच्छिन्नेऽन्तर्यामितया परमात्मनोऽवस्थानासंभवेन प्रतिबिम्बपक्ष एव रमणीयः । घटादेरवच्छेदकत्वे च तावति प्रदेशे तदपसारणे नभसोऽभावप्रसङ्गात् । तत्रापि यथाकथञ्चित् कल्पने जलदर्पणादाविव प्रतिबिम्बत्वस्यैव कल्पनीयत्वात् ।

अत्र च मुखादौ दर्पणादिसन्निधानाद्विच्छिन्नदेशत्वप्रत्यङ्मुखत्वारोपवच्चैतन्ये मायया भेदादिसमारोपः स्फटिकलौहित्यवदहङ्कारोपाधिकः । कर्तृत्वादिः रज्जुसर्पादिवन्निरुपाधिकः । अहंमनुष्यत्वादिकमो वस्तुतोऽसङ्गस्य महाकाशवत् सङ्गसमारोपः अनीश्वरत्वेश्वरत्वादिधर्मः उपाधिसन्निधिकृतश्चिदाभास उच्यते ।

अथ किमनया कल्पनया ? चेतन एवास्तु देहपरिमाणः, स च पक्षिवद्वृक्षान्तरफलम् तत्तद्देहसंक्रमणेन कर्म भुङ्क्ते । तत्रैव च भोगदर्शनं तत्परिमाणत्वगमकम् । न चेतरत्र विषयेन्द्रियसम्प्रयोगाभावेन भोगादर्शनं व्यापकस्यापि इति मन्तव्यम् ; तथा सति चक्षुराद्यन्यतमस्य शरीरैकदेशवर्तिनो विषयविशेषसंप्रयोगेण समग्रशरीरप्रदेशवर्त्यात्मनि भोगानुदयप्रसङ्गात् ।

---

1. बृ. 1. 4. 10
2. बृ. 4. 3.
3. बृ. 1. 4. 7.

किञ्च बद्धात्मनां शरीरादत्यन्तव्यतिरेकाभावादस्त्येव मूर्तत्वं जीवस्य, तेन मिश्रत्वेन लोकान्तरादिगतिरपि सम्भवति इति; तन्न; शरीरे मिश्रितत्वेन शरीरपरिमाणतया मूर्तत्वे परस्पराश्रयप्रसङ्गात् 'मिश्रत्वान्मूर्तत्वम् मूर्तत्वाच्च मिश्रत्वम्' इति। तस्मान्मुक्तावस्थानिदर्शनेनास्य लक्षणतोऽमूर्तत्वान्न शरीरसम्पर्कनिमित्तमूर्तत्वसिद्धिः। ततश्च शरीरादन्यस्तेनासम्पृक्तश्चास्पर्शत्वात्। वायुना कृष्यमाणे शरीरे गच्छति तद्गताकाशप्रदेशवदात्मावच्छिन्नस्तत्रैव तिष्ठेत्। न हि तस्य वायुना पृथिव्यादिभिर्वा प्रेरणम्, येन स्वेरितः परप्रेरितो वा गच्छेत्। जालप्रभृतीनां तु स्पर्शसम्भवाद्वायुना प्रेर्यमाणानां मूल्यकादिना वा नीयमानानां युक्तं गमनम्। तेन केवलशरीरं गच्छदचेतनं स्यात्। किञ्चार्हतैरभ्युपगम्यमानोऽयं शरीरपरिमितोऽभ्युपगम्यते। तत्रापि बह्वदृष्टं कल्पनीयम्। तदाहुर्भट्टपादाः:—

"सद्भावोऽवयवानां च तथा तेषामनन्तता।
संश्लेषश्च विनाऽन्येन तद्भावेऽपि च नित्यता॥

अतिसंकोचविस्तारौ पुत्तिकाहस्तिदेहयोः।
अन्तराभवसञ्चारः तद्भावाज्ञानकारणे॥"[1]

नो खलु द्रवत्वादिना विनाऽवयवानां कश्चित्संश्लेषहेतुर्विद्यते। न च असंश्लिष्टानामेकजीवारम्भसामर्थ्यम्। सर्वसंयोगानां च वियोगावसानत्वात् घटादितुल्यस्य जीवस्य कदाचित्प्रध्वंसो भवेत्। छिन्नावयवानां बहिष्पातश्च। गात्रच्छेदे च तद्वर्तिनां जीवावयवानां ततो निस्सृत्यावशिष्टे शरीरभागे पुनः प्रवेशश्च इत्येतदप्यप्रमाणकम्।

यत्तु वियोजितगात्राणां हस्तादीनां स्फुरणं दृष्टम् तदभिघातप्रेरितवायुनिमित्तम् इति, न तावता जीवावयवानुगतिर्विज्ञायते। तथा सति संकोचविकासावेतेषां भवत इत्यत्र न किञ्चित्प्रमाणम्। प्रदीपप्रभाप्रभृतीनां प्रत्यक्षत्वात् संकोचाद्युपपद्यते। न च प्रदीपप्रभायां संकोचो भवति; शरावादिच्छादने शेषप्रभाविनाशात्।

एतेन विकासोऽपि प्रत्युक्तः। अन्य एव ह्यवयवाः तत्र प्रतीयमाना विस्तारं जनयन्ति इति न तावतामेव विकासः। स्पर्शवतां च परस्परदेशप्रतिबन्धाद्देशान्तरव्याप्त्या

---

1. तन्त्र. वा. 2. 1. 2.

विकासो घटते। जीवावयवानां त्वमूर्तत्वात् सर्वेषां समानदेशत्वाविघातान्नित्यमणुमात्रत्व-प्रसङ्गः।

कथं चैकस्य जीवस्य पुत्तिकाहस्तिदेहपरिमितौ संकोचविकासौ युज्येते? मरण-काले चान्तराभवशरीरसंचरणम्। तच्चास्ति। केनचित्प्रतिबन्धेन सदपि न गृह्यते। तेन च शरीरान्तरे जीवनिक्षेप इत्यादि निष्प्रमाणकम्। तस्मात् सर्वगत एव। अत एव न पक्षिवदुत्प्लुत्य देहान्तरसञ्चारोऽस्य। स्थायित्वादेव च न क्षणिकाभम् इत्यालयविज्ञानात्मक-स्यात्मनो देहान्तरे शब्दादिज्ञानकार्यलाभः तत्सञ्चारः। सेन्द्रियदेहोत्पत्तेः परमाणूनामिव प्रतिक्षणमात्मोत्पत्तौ उपादानाभावाच्च। यथा भूतसूक्ष्माणामुपमृद्योपमृद्य नवनवस्थूल-देहारम्भकत्वं वेदान्तिनाम्॥

यत्तु श्यामाकतण्डुलवालाग्रमात्रत्वाद्यभिधानं, तत्सूक्ष्मग्रहणगोचरत्वाद्भिमोरेव, औपाधिकानुवादो वा, "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इतिव्याससूत्रात्। यदि च अणुमात्र आत्मा भवति, तदा यावानेष प्रदेशविशेषः तेनाधिष्ठितस्तन्मात्र-गतानामेव सुखादीनामुपलब्धिः प्राप्ता। ततश्चैकस्मिन् क्षणे शिरःपादादिवेदनानुभवो न स्यात्। न च तस्य मण्यादेरिव प्रभामण्डलं, देहव्यापिज्ञानम्। ज्ञानस्य गुणत्वे सक्रियत्वे वा न तदणुमात्रम्। अथ लघुसञ्चारित्वात् तत्तदुपलभत इत्युच्यते, न तत्र प्रमाणमस्ति। न च कालभेदो लक्ष्यते। वस्तुतः तस्योपलब्धिकालासम्भवान्नैकत्रा-प्युपलभ्येत। तस्मादकल्पनेयम्।

फलभोक्तुश्च कर्तृत्वमर्थसिद्धम् साक्षात् "ब्राह्मणो यजेत" इति विनियोगसिद्धं च बुद्ध्यादितादात्म्याध्यासमूलमेव। शास्ति च "स हि कर्ता" इति श्रुत्यनुसारि "दृष्ट्वैव पुण्यं च पापं च" इति जागरेऽपि स्वप्नवत् साक्षात्कर्तृत्वनिषेधात् शास्त्रकृत् "कर्ता शास्त्रार्थवत्त्वात्" इति। तेन न साक्षादात्मनो गत्यादिकर्तृत्वं शङ्कनीयम्, देहादौ चेतन इति विशेषप्रतिभासात् चेतनोऽप्यत्राध्यस्तः। विशेषश्चाधिष्ठानभूतः स्वनिष्ठतया दृष्ट एवाध्यासविरोधी। चेतनस्य च विशिष्टस्यैवाविद्यादिभिर्देहादावध्यासात् न मिथ्या-त्वाशङ्का।

अथ बुद्धेः पुरुषोपरागो, विषयोपरागो, व्यापारोपरागश्च, इत्येतत्त्रयम् "मयेदं कर्तव्यम्" इति भाति। तत्र 'मया' इति पुरुषोपरागो विवेकाग्रहादसत्यो दर्पणस्येव

सुखोपरागः। साङ्ख्यानामपि विपर्यासोऽस्ति। किन्तु बुद्ध्याश्रय एव इत्यविरोधः। इदम् इति विषयोपरागः इन्द्रियद्वारकः परिणामविशेषः सत्यो, यथा दर्पणस्य मलिनिमा। तदुभयोपरागनिबन्धनः कर्तव्यं इति व्यापारोपरागः। तथा च "सैव कर्त्री" इति साङ्ख्याः, तदा बुद्धेरेव भोक्तृत्वमापद्यते। न च बुद्धेरेव भोक्तृत्वमात्मन्युपचर्यते। न च बुद्धेर्लोहपिण्डकल्पाया वह्निस्थानीयचिदात्मसंक्रान्तिमन्तरेण दाहप्रकाशादितुल्य-भोगशालित्वं सम्भवति सुखाद्युपलब्धेर्भोगशब्दार्थत्वात्। उपलब्धेश्च चिदात्मकत्वात् बुद्धेश्चोपलब्धिसम्भवे चेतनकल्पनावैयर्थ्यात्। अतश्चेतनस्यैव मुख्यभोक्तृत्वसम्भवे कर्तृत्वमपि तस्यैवास्थेयम्। न च तर्हि स्वाभाविकी या शक्तिः दाहशक्तिरिव वह्नेरात्मा न स्यात् इति मन्तव्यम्, तथा सति तथा ज्ञानोच्छेद्यत्वासम्भवेन मोक्षानुपपत्तेः। तदुक्तम् :—

"न हि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः"

इति।

ननु स्वाभाविक्या अप्यङ्कुरजननशक्तेः शाल्यादिबीजस्य मूषिकाघ्राणादिदोषे-णोच्छेदः प्रसिद्ध इति चेत्, न; तत्रापि प्रतिबन्धकमात्रत्वात्। दृष्टिनिपातादिनिमित्त-विच्छायकत्वादेः प्रतीकारविशेषेणोपशमदर्शनात्, तद्वदत्रापि सम्भवात्। प्रतिबन्धस्य चानन्तकालस्थायिनि कदाचिन्नाशात्। तेन अविद्याजन्यबुद्ध्याद्युपाधिगतं लोकसिद्धं क्रियाक्लेशात्मकं कर्तृत्वं भोक्तृत्वञ्च चिदात्मनि तत्तादात्म्याध्यासान्मिथ्याभूतमुपजायते व्यवहारक्षमं लोकवेदयोः।

ननु—

"स्वाभाविकीमविद्यान्तु नोच्छेत्तुं कश्चिदर्हति।
विलक्षणोपपाते हि नश्येत् स्वाभाविकं क्वचित्॥

न ह्यैकात्म्याभ्युपायानां हेतुरस्ति विलक्षणः।"

इत्युक्तत्वादाविद्यकक्रियाशक्तेरपि नोच्छेद इति चेत्,

मैवम्; क्रियात्वाविशेषेऽपि पुण्यापुण्यविभागः पुण्येन चापुण्यनिवृत्तिः इतिवत् अविद्यात्वाविशेषेऽपि प्रमाणवस्तुमात्रतन्त्रविद्याया वैलक्षण्येनाविद्यादाहकत्वोपपत्तेः। तत्तादविद्योपाधिरेव क्रियाशक्तिरात्मनः।

एतेन ज्ञानजननशक्तिरपि व्याख्याता ;

"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"

इत्यागमोऽपि बह्वागमानुसारेणानाद्यविद्योपाधिनिबन्धनामेव शक्तिमाह । कार्यकारणादिप्रतिषेधानुसारेण च "निर्गुणश्च" इत्यादिश्रुतेश्च न ज्ञानादिकं गुणोऽप्यात्मनः । न च इच्छाद्याश्रयतयाऽष्टद्रव्यातिरिक्तात्मनोऽवधारणात् तद्गुणत्वापलापो न युक्तः । श्रुतेश्च रूपादिगुणनिषेधकतयाऽप्युपपत्तेः इति वाच्यम्; "अरूपमस्पर्शम्" इत्यादिना रूपादेः पृथक् प्रतिषेधात् । "किंज्योतिरेवायं पुरुष" इत्यारभ्य जाग्रद्व्यवहारकारणसवित्रादिज्योतिर्निरूप्य तदभावे स्वाप्नव्यवहारस्य "आत्मैवास्य ज्योतिर्भवति" इति स्वरूपज्योतिषो निरूपणात् । पूर्वदेहस्य प्रत्यक्षेण तादवस्थ्योपलम्भेऽपि गुल्फाविरादिदेहावयवस्य स्वाप्नदेहाकारेण परिणामाभ्युपगमस्यानुग्राहकादिरयाद्यभावेऽकिञ्चित्करत्वात् । "को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्" "य एषोऽक्षिणि पुरुषो दृश्यते ।" "अथ यो वेद इदं जिघ्राणि इति स आत्मा गन्धाय प्राणम्" "योऽयं विज्ञानमयः प्राणेषु" इत्याद्यागमतदनुकूलन्यायैर्विज्ञानादिशरीरतयैवात्मनो निर्णेतुं शक्यत्वाच्च ।

यद्यपि विज्ञानमयशब्दो बुद्धिकोशप्रणिधानमाह, तथाऽप्यन्तर्ज्योतिः इति साक्षिणं चिद्रूपं निरूपयति ।

तथा हि—अचिद्रूपस्य चिद्रूपविकारश्चेत्, देहस्यैव भूतमयस्य सर्वलोकानुसारेण स किन्न स्यात् । यदि देहे सत्यपि स्वापादौ चैतन्याभावान्न तस्य चिद्विकारत्वम्, तर्हि व्यतिरिक्तस्यापि जडस्य तथात्वान्न स्यात् । एवमानन्दोऽपि प्रशस्तविषयानुभवजन्यो जडस्यानुभवासम्भवात् न विकारः सम्भवति । अतश्च स्वरूपमेव विज्ञानमानन्दश्च चेतोवृत्तिविशेषव्यञ्जनीयावभ्युपेयौ । न चैवमिच्छाद्वेषदुःखादेरपि स्वरूपतापत्तिः, तस्याप्येवं सम्भवात् इति वचनीयम्; तस्य "कामस्सङ्कल्पो विचिकित्सा" इत्यादिना मनोधर्मत्वावधारणात् ।

प्रत्युपस्थितविषये सामान्यतो ज्ञाते इष्टत्वविशेषेणावधारणं सङ्कल्पः काममूलम् । "सत्यकामः" "सर्वकामः" इत्यादेश्च "तद्वा अस्यैतदतिच्छन्दा" इत्यादिमोक्षदृष्टान्तसौषुप्तरूपपरश्रुत्यनुसारेणोपासनाप्रकरणाच्चौपाधिकपरत्वावगमात् । उक्तश्रुतौ च धीशब्दः श्रुत्यन्तरानुसारेण व्यञ्जकवृत्तिविषयः । अतो निर्गुण एवात्मा

तस्य चानेकावस्थानुसन्धानकालव्यवहितक्रियाफलशालित्वादिबलात् चतुर्विध-बौद्धकल्पनाबाधकत्वम् । नित्यः सर्वगतश्च तार्किकादेः सम्मत एव चिदात्मा । सर्वगतत्वादेव चाकाशवेदकत्वमपि ।

[1] अथ आत्मा द्रव्यत्वव्यतिरिक्तापरजात्याधारोऽश्रावणविशेषगुणाधिकरणत्वात् कुम्भवत् इत्यनुमानात् भेदःसाध्यते । द्रव्यत्वव्यतिरिक्तापरजात्याधारभेदेन नाना इति साध्येऽपि द्रव्यत्वव्यतिरिक्तपृथिवीत्वाद्यपरजात्याधारपृथिव्यादेर्भेदेन नानात्वस्य सिद्धत्वात् सिद्धसाधनतावारणार्थं द्रव्यत्वव्यतिरिक्तापरजात्याधारत्वे सति इति वक्तव्यमेव । तथा च विवक्षितजातिवत् नानात्वस्याप्यपर्यवसानवृत्त्यासिद्धेः व्यर्थं पदान्तरम् । न च भेदे किं मानम् ? इति प्रश्नानुरूपत्वार्थमनुमानादेव नानात्वज्ञानार्थं च पदान्तरम् । वक्तुः प्रयोगेष्वर्थात् साध्यज्ञानेऽपि प्रश्नानुरूपत्वस्याविसंवादात् ॥

ननु किमत्र आत्मशब्देन जातेः पक्षीकरणम् व्यक्तेर्वा ? आद्येऽपसिद्धान्तः, जातेर्जात्याधारत्वानुपगमात् । द्वितीये सन्दिग्धविशेष्यः पक्षः, जात्याधारत्वे सन्दिग्धे व्यक्तित्वसन्देहात् । अथ प्रमित एव धर्मी इति तार्किकाभिमानं हित्वा लोकप्रसिद्धस्यात्मपदार्थस्य पक्षीकरणम्, तदा लोके देहादेरात्मत्वप्रसिद्धेः सिद्धसाधनम् । किञ्च ईश्वरोऽपरजात्याधार उक्तहेतुनिदर्शनाभ्याम् । अतोऽतिप्रसङ्गलक्षणप्रतिकूलतर्कपराहतत्वात् अनुकूलतर्कविरहाच्चाप्रयोजको हेतुः इति,

नैष दोषः; सतो द्रव्यत्वजात्याधारतया व्यक्तित्वेन सिद्धस्यात्र केवलमेकानेकत्वेन विगीतस्य कार्यविशेषात् द्रव्यान्तराद्व्यावृत्तस्य प्रयोगे पक्षीकरणात् । एकामानन्दव्यक्तिं विज्ञानादिशब्दा लक्षयन्ति इति शब्दार्थविशेषत्वाभिधाने परस्यापि व्यक्तित्वसम्प्रतिपत्तेः । ईश्वरस्याप्यात्मत्वजातेरिष्टत्वात् सिद्धसाधनत्वाच्च । ईश्वरत्वजातिविवक्षायां च दृष्टान्ताभावः । पटस्य पृथिवीत्वावान्तरजातिरिव ईश्वरस्यात्मत्वापरजातिश्चेत्, द्रव्यत्वापरजात्याधार इति साध्यते "एको रुद्र" इत्यागमबाधः "एको जीव" इत्यश्रुतेश्च । "एको देवः सर्वभूतान्तरात्मा" "एक एव तु भूतात्मा" इति च श्रुतिस्मृती कर्तृत्वादिविशिष्टनानाभेदप्रतिपादनक्षमे । तेषां चानुमानेन भेदः साध्यते । अतो भिन्नविषयत्वान्न बाध्यबाधकभावः । ऐकात्म्ये व्यवस्थासम्भवादेरनुमानानुकूलत्वाच्च

1. न्यायमकरन्दस्थमनुमानमुपन्यस्यति—अथेति ।

कल्पिताश्रयणेन तत्सम्पादने च आत्मादिकमपि कल्पितमेव व्यवहाराङ्गम् इति शून्यवादस्यापि दत्तावसरता स्यात्। तेन निर्दोषोऽयं प्रयोगः॥

आत्मा यथोक्तसाध्यवान् शरीरात्मसम्बन्धाधारत्वात् शरीरवत् इति प्रयोगाच्च। न चात्र कार्यत्वमुपाधिः, परमाणुषु द्रव्यत्वव्यतिरिक्तापरजात्याधारत्वेऽपि कार्यत्वाभावेन साध्याव्यापकत्वात्।

विवादपदानि जीवच्छरीराणि स्वसङ्ख्यासंख्येयात्मवन्ति जीवच्छरीरत्वात् सम्प्रतिपन्नवत्। शरीरमात्रपक्षीकारे मृतातीतमुक्तशरीरेषु हेत्वभावात् भागासिद्धिप्रसङ्गात्। न च एकत्वसंख्याया अपि स्वकीयत्वेन सिद्धसाधनम्, स्वसमवेतसकलसंख्यासंख्येयात्मवत्त्वसाधने च साध्यविकलो दृष्टान्त इति साम्प्रतम्; शरीराणामिव आत्मनोऽपि प्रतिशरीरं प्रातिस्विकैकत्वस्य साध्यत्वात्। न च विमतान्युभयसिद्धात्मभोगसाधनानि जीवच्छरीरत्वात् प्रतिवादिशरीरवत् इति सप्रतिसाधनता; तत्कर्मोपार्जितत्वोपाधेः। न च साधनव्यापकता, यादृशस्य कर्तृत्वं, तादृशस्यैकत्वाभावेनैककर्मोपार्जितत्वस्य सर्वशरीरेषु वक्तुमशक्यत्वात् असाधनव्यापकत्वात्। शरीरादिविशिष्टस्य भोक्तुः कर्तृत्वात् कर्मोपार्जितत्वस्य दृष्टान्तशरीरे सद्भावान्न साध्याव्याप्तिशङ्कापि। एकत्वावगमस्योपचारेणाप्युपपत्तेः, प्रसिद्धत्वाच्चेच्छादेरात्मव्यावर्तकत्वस्य सिद्ध आत्मभेद इति।

**अत्र समाधिः** :—न तावदिच्छादयो व्यवच्छेदका आत्मनः, तेषां गन्धादिवत् स्वाधारस्येतरेभ्यो भेदकत्वेऽपि न सजातिभ्यो भेदकत्वम्। न खलु गन्धाधारत्वेनैव पृथिवी पृथिवीप्रतियोगिकभेदवती, न वा व्यक्तगन्धवती सैवाव्यक्तगन्धवती च पर्यायेण भिद्यते। न च अपर्यायमपि तेषां भावाभावौ व्यापकस्यात्मनः शब्दस्येव नभसो भेदकौ। अपरथा शरीरप्रदेशे तदन्यत्र चैक आत्मा, नभश्च शब्दवदशब्दप्रदेशयोः वास्तवेनैव वृत्तेन भिद्येत। तथा च पुनर्जैनमतमुज्जीवितं स्यात्।

**एतेन** विरुद्धत्वेनाप्यभेदकत्वं व्याख्यातम्। नभोवत् कल्पितात्मभेदेन व्यावहारिकव्यवस्थोपपादनमात्रेण न माध्यमिकमतप्रवेशाशङ्काऽपि। अपरथा भेदोऽपि स्यात् आकाशादौ तथाङ्गीकारात्। अविद्याया अपि न चिन्मात्रतन्त्रत्वम्। तन्त्रशब्देनाश्रयत्वे, मात्रशब्देन समग्रत्वे च निरवद्यं बिम्बम् इति कथोच्छेदात्। मात्रशब्देन केवलत्वेऽपि समग्रस्याश्रयत्वे स एव दोषः। कल्पितप्रदेशस्याश्रयत्वेन विवक्षितत्वे अनाद्यविद्यातन्त्रा-

नाथनेकप्रदेशकल्पनया विद्याविद्यावत्कार्याणामसाङ्कर्यम् व्योमादौ शब्दसंयोगादीनामिव न विरुध्यत इति नासदनिष्टम् । पक्षान्तरे चाव्यवस्थानात् । कालाकाशवदेव द्रव्ययोः समानपरिमाणयोर्मायाब्रह्मणोर्नाधेयाधारभाव इति असमत्वेन न समप्रवृत्तिता इति प्रादेशिकत्वलाभ इति । अतो नेच्छादिलाभात्प्रतिदेहमात्मनो भेदलाभः । न च अमी आत्मगुणा इत्यवादिष्म ।

अत एवाश्रावणविशेषगुणाधिकरणत्वात् इत्यसिद्धो हेतुः । द्रव्यत्वे सति द्रव्यत्वव्यतिरिक्तापरजातिमत्त्वे साध्ये मूर्तत्वोपाधेश्च । गुणकर्मणोर्द्रव्यत्वव्यतिरिक्तापरजातिमत्त्वेऽपि मूर्तत्वाभावेन साध्याव्यापकत्वम् मा भूत् इति 'द्रव्यत्वे सति' इति साध्यविशेषणम् । यथा स श्यामो मैत्रतनयत्वात् इत्यत्र शाकाद्याहारपरिणतिपूर्वकत्वोपाधेरिन्द्रनीलादौ साध्याव्यापकत्वापोहार्थं चेतनत्वे सति इत्यादिसाध्यविशेषणम् । द्रव्यत्वव्याप्यजातिमत्त्वे च साध्ये स्यात् अविशेषितसाध्योऽप्युपाधिः । क्षणिकविशेषगुणवत्त्वेन नभोवद् भवन्मतेनैवात्मैक्यानुमानाच्च । न च बाह्येन्द्रियग्राह्यक्षणिकविशेषगुणत्वमुपाधिः दिक्कालयोः साध्याव्याप्तेः । आत्मा शरीरपरिमाणः शरीरात्मसम्बन्धाधारत्वात् शरीरवत् इत्याभाससमानयोगक्षेमत्वाच्च । द्वितीयस्यापि हेतोः यथैव मध्यमपरिमाणवत्त्वेनानित्यत्वादिप्रसक्तिः तथैव भिन्नत्वेनापि शरीरादिवत् । "यावद्विकारं तु विभागो लोकवत्"[1] इति व्याससूत्रात् ।

विगीता विकाराः विभक्तत्वात् सम्मतवत् । विकारत्वं च पराधीनसत्ताकत्वम् । तथा च विभक्तत्वहेतोरविद्यातत्सम्बन्धादौ न व्यभिचारः । तस्याप्यध्यस्तत्वेन पराधीनसत्ताकत्वात् । विभक्तत्वं च धर्मिसमानसत्ताकविभागवत्त्वम्; ब्रह्मणश्च तदभावान्न तेन व्यभिचारः । तत् स्थितमाभाससमानयोगक्षेमत्वम् । आकाशो द्रव्यत्वव्यतिरिक्तापरजात्याधारो घटाकाशसम्बन्धाधारत्वात् घटवत् इत्यादिप्रयोगप्रसराच्च । भेदे दोषप्रदर्शनादेव तृतीयमपि साधनं साधनाभास एव । एवं प्रयोगान्तराण्यपि व्युदस्यानि । तस्मात् आत्माऽगुणो निर्विकार एकश्च इति स्थितम् ।

गुणादेर्बुद्ध्याश्रयत्वेन व्यवस्थापनात् । "कस्मिन्नु रूपाणि प्रतिष्ठितानि हृदय[2]" इत्यादिश्रुतेः ।

---

1. ब्र. सू. 2. 3. 7.  2. बृ. 3. 9. 20

" रूपसंस्थानतुल्याधारौ रागद्वेषौ भयं च यद्दृश्यते धीश्रयम् । तस्मात् ज्ञाता शुद्धोऽगुणोऽद्वयः " ।

इत्यभियुक्तोक्तेश्च ।

" यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन्सन्देह्ये गहने प्रविष्टः ।
स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकस्स उ लोक एव[1] ॥

सन्देह्ये सन्देहे यकारश्छान्दसः । गहने सहसा दुर्विवेके प्रतिबुद्धः पारोक्ष्येण, अनुवित्तः साक्षात्कारतः स ब्रह्मापि देवोऽज्ञानावस्थोऽपि विश्वकर्ता इति जीवेश्वरैक्य-श्रुतेश्च ।

अत्र **मीमांसकाः** प्रत्यवतिष्ठन्ते—प्रतिदेहं भिद्यत एवात्मा इति । शरीर-भूयस्त्वात् । प्रतिशरीरं च सुखदुःखोपलब्धिव्यवस्थादर्शनात् । अपरथा ह्येकशरीरेणैव चरितार्थत्वात् अनेकशरीरवैयर्थ्यं स्यात् । जन्मान्तरशरीरवददोष इति चेत्, न; तत्र कर्मान्तरवशेनोपभोगार्थं पुनःपुनरारम्भात् । सर्वशरीरगतसुखाद्युपलब्धिश्च प्रतिशरीरं स्यात् । अन्यदीयैश्चेन्द्रियैः शरीरान्तरगतस्यात्मीयत्वादुपलब्धेः अन्धबधिरादीनामभावः स्यात् । वर्णविशेषव्यवस्थया च कर्मचोदनाभेदो न स्यात् । एकस्यैवात्मनः तेन तेन शरीरेण सम्बद्ध्यमानस्य सर्ववर्णत्वोपपत्तेः । आत्मनानात्वे त्वदोषः, सर्वेषां सर्वगत-त्वेऽपि मूर्तिरहितात्मसमानदेशवृत्त्यविरोधः । तदपेक्षयैव चैतन्याद्यात्मकत्वाविभागाच्चोप-निषत्स्वैकात्म्यव्यवहारः ।

**कथं पुनः** नानात्वेऽपि सर्वेषां शरीरैः सम्बन्धादन्यदीयसुखाद्यनुपलब्धिः ? एकत्वेऽपि चातीतदेहगतानुपलब्धिवद्वर्तमानदेहान्तरगतानुपलब्धिः कथं वा न स्यात् । आत्मैकत्वमेव चेत् अनुसन्धानप्रयोजकम्, तदा स्यादेवातीतदेहगतसुखदुःखाद्यनुसन्धा-नम् । यदि च वर्तमानोपाध्यवच्छिन्नत्वम् " पादे मे वेदना " " शिरसि सुखम् " इतिवत् अनुसन्धानप्रयोजकं तत्तद्दृष्टान्ते किमुपाधौ वर्तमानत्वादनुसन्धानम् किं वा एकदेहावयवत्त्वात् इति सन्देहेनैकतरानिर्णयात् ।

**अत्रोत्तरम्** :—सुखादेर्यावत्सत्त्वं प्रकाशमानत्वस्वीकारात् अतीतदेहगर्भावस्था-दिगतसुखाद्यभावादप्रकाशो युक्तः । अतस्तत्सत्तायां सत्यामनुसन्धानाभावे कर्मफलत्व-

---

1. बृ. 4. 4. 13

ह्यानाद्व्यक्तव्यमेव सर्वदेहेष्वेकस्यानुसन्धानम् । न च द्रष्टृत्वमात्रं भोक्तृत्वम्, परमते योगीश्वरयोरशेषदुःखादिभोक्तृत्वप्रसङ्गात् । न च अन्यासमवेतत्वविशेषणमद्वैतवादे सार्थकम् । ततोऽस्त्वद्वैतिनो व्यवस्थाभावो दोषः । नानात्वे तु परिहार उच्यते—

देशं प्राप्य यदीष्येत सुखादेरुपभोग्यता ।
तदा दोषः प्रसज्येत योग्यायोग्ये च क्लृप्तता ॥

यदि ह्यात्मनः सुखादीनां च समानदेशलक्षण एव सम्बन्ध उपभोगकरणमिष्येत, ततोऽयं दोषः स्यात् । इह तु चक्षुरादीनां रूपादीनामिव च योग्यतालक्षणः सम्बन्धः, तत्र यथा त्वगिन्द्रियेण स्पर्शसमानदेशानामपि रूपादीनामग्रहणम् । एवमन्येनात्मनाऽन्यदीयधर्माधर्मोपात्तसुखदुःखाद्यग्रहणम् इति नाव्यवस्था परस्येव । तस्य सर्वत्रानुसन्धानाभावे चैकात्म्यं मनोरथमात्रम् । **न च वाच्यम्** श्रुतिबलात् सर्वदेहेष्वात्मैक्येऽवगते किं अनुसन्धानाभावः करिष्यति इति; यादृशस्यैकदेहे भोक्तुरनुसन्धानं, तादृशस्य सर्वदेहेष्वेकस्यानुसन्धानाभावे घटादेरिव चेतनान्तरादभेदासम्भवादघटमाना श्रुतिरुपचरितार्था केन वार्येत । ततो दुर्घटोऽयं पक्ष इति ।

**अत्र वदामः** :—सत्यम्, यदि यथा शिरःपाण्याद्यवयवाः तथा ब्रह्मादिस्थावरान्ता देहभेदा एकस्यैव भोक्तुर्भोगाधिष्ठानम् सर्वकरणानि भोगसाधनानि तथा, तदा हस्तपादादिभेदेनानुसन्धानवद्देहान्तरवेदनानुसन्धानादि पूर्वोक्तदोषजातं वेदनापरिहारार्थं युगपत् सर्वशरीरप्रवृत्तिश्च प्रसज्येत । न च तथाऽऽस्थीयते; किन्तु प्रतिशरीरं भोक्ता,—

"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः"

इति श्रुत्युक्तलक्षणो भिद्यते । "अनश्नन्नन्यो अभिचाकशीति" इति श्रुतौ द्रष्टैव केवलो न भोक्ता । कर्मश्रुत्या सर्वदेहेष्वेको देवदत्त इव स्वप्रतिबिम्बश्यामत्वादिदर्शी भिद्यत इति न दोषावकाशः । **सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्**[1] इति सूत्रेणापि जीवब्रह्मणोः पुण्यापुण्यतदभावविशेषेण ब्रह्मण्युक्तप्रसङ्गापाकरणाच्च ।

"सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः"[2]

---

1. ब्र. सू 1. 2. 8.    2. कठ. 2. 2. 11

इति कठश्रुतेश्च । यदि खलु विराडात्माऽव्याकृतो वा जीव एव, तदा न केवलं पूर्वोक्तदोषः, किन्तु तत्पदप्राप्तिसाधनविधायकशास्त्रप्रामाण्योच्छेदश्च ।

यदि च साधनमनुष्ठाय तत्पदं लभते, तदा ब्रह्माण्डादौ सत्येव तदनुष्ठानसम्भवात् अनुष्ठातुर्न तदवयवत्वेन तदभेदः ; किन्तु गर्भगतवामदेववत् स्मरणम् । तत्र कार्यकरणसङ्घातवत्त्वेन भेद एव । ततस्तस्य च वर्णाश्रमादिविभागनिर्वाहकस्यानन्त्य एव पर्यवसानम् अन्यथा नाविद्यावलम्बनेन कर्मकाण्डादिव्यवहारो निर्व्यूढः स्यात्, निर्वाह्यते च । तथा च **इष्टसिद्धिः** :—

" प्रत्यक्षादिप्रमाणानां कर्मविज्ञानकाण्डयोः ।
प्रामाण्यमविरोधश्च नर्तेऽविद्यां प्रसिद्ध्यति ॥

धर्मार्थकाममोक्षाख्याश्चत्वार इतरेऽपि च ।
इष्टानिष्टाः प्रसिद्ध्यन्ति सर्वतीर्थदृशां तथा ॥

दर्शनानि विरुद्धानि जगत्त्रैविध्यमेव च ।
तस्मात्सर्वस्य सिद्ध्यर्थं विचार्य निरधारि सा ॥

इति ।

" अविद्याफलकारूढं तदेवं रूपकं परम् ।
ब्रह्मविद्याधिकारित्वं द्वैविध्यात्प्रतिपद्यते ॥

स्वतो मुक्तं यतस्तस्माद्ब्रह्म विद्यां तदर्हति ।
संसारित्वमविद्यातो मुमुक्षुत्वं ततो भवेत् ॥ "[2]

इति **सुरेश्वराचार्यैः** विद्याविद्यकभेदेन व्यवहारनिर्वाहात् ।

" महिमानो यदाऽमी स्युरविद्याया न वस्तुतः ।
काला देवादयस्तस्यां ध्वस्तायां तद्विनाशतः ॥

कालदेवादयः के स्युर्विघ्नं वा कस्य कुर्वते ।[3]

1. इष्टसि. p. 378.  2. बृ. वा. 1. 4. 1330.
3. बृ. वा. 1. 4. 1504. Vartika Edn. reads. देवेश्वरादयः ।

इति । "तस्य ह ब्रह्मविदो न देवाश्च नाशक्ता अपि अभूत्यै ब्रह्मभावविघ्नाय ईशत" इति श्रुतिव्याख्यानं च । प्रतिजीवं धिया तदभावोक्तेश्च । अतो मायातत्कार्योपाधिभोक्तृभेदा-देवानाव्यवस्थाप्रत्यवस्थानावकाशः ।

सर्वगताः स्वाभाविकभेदभाजो जीवा इति पक्षे तु मनो वा तत्संयोगजास्सुखादयो वा पुण्यादिक्रिया वा तद्धेतुसङ्कल्पादिक्रिया वा तनुर्वा सर्वसाधारणैव कस्मान्न स्यात् । न च अनादित्वमात्रावलम्बनेन स्वस्वामिभावादिव्यवस्था प्रामाणिकी स्यात् । अतो "अविद्यायामन्तरे वर्तमानाः" इत्याद्याम्नायादविद्यातत्कार्योपाध्यनन्तजीवाश्रयणेन सर्वं निर्बाधम् । अनन्ताश्च जीवा अज्ञातसङ्ख्यात्वात् ।

ननु असिद्धो हेतुः, ईश्वरेण ज्ञातसङ्ख्यात्वात् । अन्यथा सर्वज्ञत्वहानात् । तथा च **इष्टसिद्धिः** :—

"यद्यपि ज्ञायते संख्या नास्माभिर्गणितज्ञवत् '
ईश्वरो वेत्ति तत्संख्यां न चेत् सर्वज्ञताहतिः ॥"

इति । तत्कथम् साधु ; न खल्वविद्यमानसंख्यायाः कलनाभावेन वन्ध्यापुत्रविवाहस्येवा-सार्वज्ञ्यापत्तिः प्रत्युत कलन एव भ्रान्तियोगात् ।

अथ भिन्नत्वलिङ्गेन संख्यावत्त्वं साध्यते, तदापि संप्रतिपन्नाविद्यकब्रह्माण्ड-कल्पादिभिरनेकान्तः । तस्यापि संख्यावत्त्वे संसारस्यादिमत्ता स्यात् । अत एव न द्रव्यत्वमपि जीवसंख्यागमकम् । "विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इति मायोपाधिष्वाहितजीवाख्यवीर्याणामानन्त्यश्रुतिविरुद्धं च । "रूपाणि देवः कुरुते बहूनि" "नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासः" 'उक्थं शंसति' इत्युक्थ-शासः । 'उक्थशास' इति दैर्घ्यं छान्दसम् इत्यादिनिरुपपदबहुत्वश्रवणाच्च आनन्त्यं प्रतीयते । न च "वसन्ताय कपिञ्जलानालभेत" इत्यत्र, यथा अनन्तकपिञ्जलालम्भन-प्रतीतावपि त्रय एव बहुवचनसिद्ध्यर्थम्, अवान्तरसंख्याया अनुपादानात् गृह्यन्ते अनन्तालम्भस्याशक्यत्वात्, तथाऽत्रापि विश्वादयस्त्रय एव ग्राह्या इति, साम्प्रतम्; युगपद् अनेकेषां जागरादिदर्शनात् प्रत्येकं त्रितयवतां जीवानां व्यवहारभाजां आनन्त्याप्रतिषेधात् । तदुक्तम् :—

" अत एव च विद्वत्सु मुच्यमानेषु सन्ततम् ।
ब्रह्माण्डलोकजीवानामनन्तत्वान्न मुच्यते ॥ "

इति । " तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् " " अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः " इत्यादिवेदाच्च बन्धमुक्तव्यवस्था गम्यते । न च अजपयोहोमस्य " जर्तिलयवाग्वा वा जुहुयात् " इत्यादिवत् ज्ञानस्यैव प्रशंसावादः, देवताधिकारसमर्थनविरोधात् , " तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मि इति स इदं सर्वं भवति " इति । रज्ज्वादिभ्रमाया इव ब्रह्मप्रमाया दृष्टफलव्याकोपात् । प्रत्यक्षादिप्रमाया व्यावहारिकानेकजीवाश्रिताया रज्ज्वाद्यज्ञाननिवर्तकत्वे तादृशब्रह्मैक्यप्रमाया अपि तदज्ञाननिवर्तकस्यानपलापाच्च । न च वाच्यम्, ब्रह्माण्डादेः कारणानुवृत्त्या युक्तमनन्तस्यातीतत्वेऽपि साम्प्रतं दर्शनम्, जीवानान्तु प्रतिकल्पमेकैकस्यापि मुक्तावनन्तकल्पेषु सर्वमुक्तेस्सांप्रतं दर्शनमयुक्तम् इति । मुक्तानां बद्धानां च सर्वदाऽऽनन्त्याभ्युपगमात् । अनादिकाले प्रमाणज्ञानैः प्रत्येकमज्ञाननिवृत्तावपि साम्प्रतमज्ञानानां तत्प्रागभावानां चानुवृत्तिवदनन्तानां मुक्तावपि बद्धानामनुवृत्तेः सम्भवाच्च । तदुक्तम् :—

" अन्तन्यूनातिरिक्तत्वैर्युज्यते परिमाणवत् ।
वस्तून्यपरिमेये तु नूनं तेषामसंभवः ॥ " इति ।

**यदत्रोदयनः** परिजहार—कालनियमे प्रमाणाभावात् प्रतिकल्पमेव मुक्त्यनावश्यकत्वात् न साम्प्रतं संसारदर्शनम् विरुध्यत इति, तदपठितवेदवत्प्रतिभाति—

" ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे "

इत्यादिवेदेन कालविशेषव्यवस्थापनात् । " अनन्ता विश्वेदेवा " इत्येकजातीनामप्यानन्त्यश्रवणाच्च ।

" सन्त्वेवऽप्येते यथादृष्टि ह्येकैकस्य मनस्विनः ।
सूत्रादयोऽनुभूयन्ते यथाकर्म यथाश्रुतम् ॥"

इति **वार्तिकाच्चाने**काज्ञानसिद्धेः । न च स्वप्नवदेकस्यैव जाग्रत्प्रपञ्चस्य बुद्धाबुद्धमुक्तामुक्तादिरूपसम्भिन्नस्य प्रतिभानम् ।

" अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥

नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् ।
ब्राह्मणे चाननूचाने काङ्क्षन् गतिमनुत्तमाम् ॥ " (मनु 2.241,242.)

इत्यादिनियमानुपपत्तेः । किञ्च स्वप्नादविशेषप्रसङ्गेन पुण्यापुण्यमूलविध्यादिशास्त्रप्रामाण्य-लोपापत्तेः । स्वप्नादिनाशे च व्यावहारिकानेकप्राणभृदपलापायोगात् । अप्राणजीवस्या-संप्रतिपत्तेश्च । ब्रह्मण एव संसारित्वे तत्पदार्थाभावः ।

अथ प्राज्ञस्तत्पदार्थः विश्वतैजसौ च त्वम्पदार्थस्तर्ह्यध्यात्मं सुप्तौ अधिदैवं प्रलयस्स्यात् ।

यदि च प्रलय एव सुप्तिः, तदा " यत्र सुप्तो न कञ्चन स्वप्नं पश्यति " इत्यादितत्प्रतिपादकश्रुतिविरोधः । अप्रामाण्ये चास्याः प्रलयश्रुतीनामपि तथात्वमविशेषात् । किंच ब्राह्मणत्वादिविशिष्टस्यैव कर्मज्ञानाधिकारित्वात् तस्य चानन्तत्वात् तस्य चानादि-कालं अमुक्तस्य शास्त्रे प्रामाण्यान्मुक्तिर्भवति इति प्रतारणामात्रम् । तस्मादनेकजीवपक्ष एव अविद्यापक्षे च श्रेयान् । अविद्या च यथाऽनुभवं जीवे तावत्पदं बध्नाति । न चाविद्यक-त्वात् जीवविभागस्य तदाश्रयःस इति परस्परापेक्षणम् । जीवगताविद्यासम्बन्धवदविद्यात-न्त्रस्यानादित्वेनोत्पत्तौ तदनपेक्षणात् । जीवस्य ब्रह्मवदनादित्वेन प्रतिबिम्बभाव इति चेत् न ; उपाधेरनादित्वादेव बिम्बप्रतिबिम्बयोः पूर्वोत्तरकालकोट्यनपेक्षणात् ।

अत्र केचिदाहु :- यदि जीवाश्रयं ब्रह्मविषयमज्ञानम् , तत्राज्ञातत्वं ब्रह्मणः किं प्रमाणात् , उत भ्रान्तेः, अनुभवाद्वा ? आद्ये प्रमाणफलव्याप्यत्वात् कुम्भादिवत् जाड्यं ब्रह्मणः, अज्ञानस्य सत्यत्वं च, अज्ञानस्यैव प्रमेयत्वम् इत्यज्ञानेऽप्यज्ञानान्तरप्रस-क्तिश्च । द्वितीये ब्रह्मणोऽप्यज्ञानतत्कार्यवत्कल्पितत्वम् । न चरमः— जीवाज्ञत्ववत् ब्रह्मण्यज्ञत्वानुभवाभावात् । 'अहमज्ञ' इत्यनुभवस्य जीवाश्रयाज्ञानसाधकत्वमपि नास्ति, अन्तःकरणोपाधिलब्धजीवावस्थस्य ब्रह्मण एवाज्ञत्वानुभवः स्फुटो भवति यस्मात् । केवलं जडशक्तिमात्रवपुषा स्थितस्याज्ञानस्य तावन्मात्रेण स्फुरतोऽपि " जान " इति ज्ञानापनोद्यत्वेन जीवावस्थायां प्राकट्याङ्गीकारात् । तच्च ज्ञानं कोमलकण्टकवत् चिति-शक्तिसमुच्छेद्यतया वशवर्ति कर्मकृताहङ्कारानारम्भकं मायाभिधानीयकं लभमानं सर्वज्ञे-

श्वरोपाधिः। तदेव कर्मकृताहङ्कारपरिणामात् लब्धदृढत्वं चितिशक्तिबाधकतयाप्यव-तिष्ठमानं जीवोपाधिः। अविद्या नाम कर्मैव। ततो न जीवे स्थितमज्ञानं ब्रह्मविषयम्; किन्तु, केवलचिदात्मनि ब्रह्मण्येव इति।

तत्र वदामः—"यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्व" —"अधीहि भगवो ब्रह्म" इत्यादिप्रश्नान्यथानुपपत्त्या ब्रह्मण्यज्ञातत्वं तावत् श्रुतेः अवधार्यते। अज्ञातस्यैव ब्रह्मणः शब्दप्रमेयत्वम्-शास्त्रयोनित्वात् इति व्यवस्थाप्यते ऽनुवादत्वनिरासार्थम्। ब्रह्मण्यज्ञानम् इति वादेऽपि तस्याज्ञातस्य शास्त्रविषयत्वं व्यव-स्थापनीयम्। ततः प्रथमपक्षदोषस्तत्रापि समानः। अथाज्ञातत्वं शास्त्रप्रवृत्तिप्रयोजकम्, तद्विषयस्तु केवलमेव ब्रह्म, तथापि कुम्भादिवद्विषयत्वात् जाड्यं स्यात्। वृत्तिव्याप्यत्वेन परिहारस्तुल्यः। सम्प्रसादे चान्तः करणोपाध्यभावेन जीवसंज्ञानिमित्तप्राणसद्भावेऽपि जीवसंज्ञालोपप्रसङ्गात्। अन्तःकरणस्यैव क्रियाज्ञानशक्त्यवच्छिन्नस्य प्राणःएकदेश इति, न दोष इति वदतः, शक्तिमदन्तःकरणस्यावस्थानापत्त्या सम्प्रसादोच्छेदापत्तेः। ततः सम्प्रसादावस्थस्यापि जीवत्वं वक्तव्यम्; ब्रह्मण एव जीवत्वे च कर्मकृताहंकारपरिणामल-ब्धदृढिम अज्ञानं जीवोपाधिः इति स्वोक्तिविरोधः सम्प्रसादे तदभावात्। तस्माद-नाद्यविद्यावान् जीवः, तस्यैव 'अहं अहं' इति स्फुटोऽनुभवः; 'मायिनम्' इति तु तद्विषयत्वेनापि व्यपदेशो घटते। स्वयमेव तरुणी वृद्धा च इतिवत् "माया चाविद्या च स्वयमेव भवति" इति श्रुतेः मायाऽविद्ययोः मूलमूलिभा-वानुपपत्तेश्च न मायी जीवादनादिभिन्नः। 'कस्य पुनरयमप्रबोधः? इति चेत् यस्त्वं पृच्छसि, तस्य ते इति वदामः इति भाष्याच्च[1]। अज्ञत्वस्य जीवे विषयत्वकृतत्वाभावात् आश्रयत्वसाधकत्वात् स्वाश्रयाज्ञानास्फुरणे तत्परिहाराय शास्त्रश्रवणाद्यनुपपत्तेश्च। अत एवार्थात् जीवे ब्रह्मस्वरूपप्रकाशाच्चानादिः एकाऽविद्या इति टीका। चैतन्यमात्रेऽ-विद्या चेत् स्थिता, जीवेश्वरादिविभागसवित्री, तदा विभागस्सादिः स्यात्। ईश्वरो जीवो वा संसारो वाऽनादिः इति चैतन्यमात्रे नाविद्यासिद्धिः। मात्रशब्देन जीवाद्यनुगत-चैतन्यविवक्षायां तस्यैवाकाशवत् स्वतन्त्रोपाधिभेदो बन्धमुक्तव्यवस्था च इति न विवादः। चैतन्यमात्राश्रयत्वे चैकविद्यया समस्ताविद्यानिवृत्तिप्रसङ्गात्।

अनेकजीवपक्षेऽपि जीवाश्रयैव सा कर्णादौ शब्दसंयोगादिवत् कल्पितभेदेन व्यवस्थानात् विभोर्मायायाः।

---

1. गी. भाष्यम् 13 2.

किञ्च ईश्वरोपाधौ यथावस्थितब्रह्मसाक्षात्काराभावे सर्वज्ञत्वहानिः ; सद्भावे च न मायासद्भावः स्यात् । बाधिताऽप्यनुवर्तत इति चेत् , तर्हि तस्यैकत्वात् जीवोपाधेरपि नित्यबाधान्नित्यं जीवन्मुक्तिः स्यात् । प्रारब्धकर्मविशेषस्यानुवृत्तिबीजस्येश्वरेऽसम्भवाच्च । ततो जीवाश्रयमज्ञानं ब्रह्मविषयम् । जीवाविद्ययोरमूर्तत्वात् न कुण्डबदरन्यायो, येनाविद्याधेये जीवेऽविद्या इत्यात्माश्रयः स्यात् । किन्तु "अहमज्ञ" इति जीवव्यावृत्ततया प्रतीयमानत्वमेव । एतादृगितरेतरापेक्षत्वं च प्रमाणप्रमेयादौ सुलभोदाहरणम् । ब्रह्मणश्च मायाविषयत्वमेव जगद्विभ्रमाधिष्ठानत्वेन कारणत्वनिर्वाहकमायाश्रयत्ववत् ।

"मायैषा तस्य देवस्य यया(ऽयं) मोहितः स्वयम्"

इति मोहवत एव मायाश्रयत्ववचनाच्च । अतः शुद्धमेव ब्रह्म अनन्तजीवाविद्याविषयीकृतं यस्य यस्य साक्षादात्मतया स्फुरति, तस्य तस्य अविद्याव्यवधाननिवृत्तौ तदात्मनावस्थानम् मोक्षः, इतरेषां बन्ध इति व्यवस्थावादः श्रेयान् ।

न चैवं ब्रह्मणः सर्वात्मना मुक्त्यभावोऽनन्तोपाधीनां कल्पेनानुच्छेदाद्दोषः, तस्यैव बन्धमुक्तव्यवस्थावादस्य आकाशन्यायेनाभ्युपगमात् । अभ्युपगमस्य च दोषत्वेनाचोद्यत्वात् । अतः **प्रतिबिम्बो जीव** इति साधीयः । प्रतिबिम्बस्य चोपाध्याधारत्वमप्रसिद्धमपि **पञ्चमप्रकाराविद्यानिवृत्तिवदास्थेयम्** 'प्रतिरूप' इति श्रुतेः । "**आभास एव च**" इत्याह स **सूत्रकारः** । "आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यो न स एव साक्षात् , नापि वस्त्वन्तरम्" इति **भाष्यकारै**रप्यभ्यधायि । यस्य चांशः प्रतिबिम्बो जीवः, स एव अंशांशिसम्बन्धेन नियन्ता । ईश्वरमायोपाधेरुक्तसंबन्धासम्भवेन नियन्तृत्वानुपपत्तेः । अतः शरीरेन्द्रियसङ्घातसमारोपभूमिस्वप्रकाशविज्ञानानन्दैकरसोऽपि मायाकृतेन तन्त्रेणावच्छेदेन परात्मापि जीवसंज्ञामनादिकालमवलम्बमानः संसारचक्रपरिभ्रमेण श्रान्त इव ।

यापि प्रक्रिया वस्तुभेदाभावेऽपि विक्षेपप्रधानतया "माया" इत्यावरणप्रधानतया च "अविद्या" इति गीयते तत्र विक्षेपप्रधानमायाप्रतिबिम्बित ईश्वरो जगत्कर्ता जीवानां प्रशास्ता; आवरणप्रधानमायाप्रतिबिम्बिताश्च जीवाः । अन्यथा स्वोपबृंहितेश्वरस्वरूपानावरकत्वात् स उपाधिरविद्या न स्यात् । आवरकस्यैव प्रमाणनिरस्यस्याविद्यात्वप्रसिद्धेः अनावरणं चेत् स्वस्य सदा वेदान्तवाक्यानां स्वोपाध्युपदर्शितानामद्वयात्मतात्पर्यसहितानामपरोक्षत्वात् । न चैवं जीवस्य स्वरूपावरणं उपाधेःसकाशान्न भवति । अनावृत

ाभावेऽपि विक्षेपोऽतद्रूपस्य कर्तृत्वादेरवभासस्य तद्धेतुत्वात् । अनिर्वाच्यमेव हि ञ्चिद्वस्तु स्वोपहितमनाच्छादयत् तत्र विक्षेपं च कुर्वत् 'माया' इति प्रसिद्धम् । मायान्तु[1] " " मयाध्यक्षेण[2] " इति श्रुतिस्मृतिभ्यामेव सिद्धेः ।

ये तु मायामुख्योपाधिप्रदेशप्रतिबिम्बिता जीवा बन्धमोक्षभाजः, ते मायाप्रदेशेषु ज्ञानत्वेन आवरणविक्षेपशक्तिमत्सु प्रतिबिम्बिता संवित्[3] । न क्वचित् प्रतिबिम्बितस्यैव हेश्वरत्वम् । "एको देव" इत्यादिश्रुतौ समष्ट्युपाध्यनुप्रविष्टस्य सर्वज्ञत्वं सर्वभूता-धेष्ठानत्वञ्चोक्त्वा तत्तज्जीवस्य केवलस्यात्मनः सर्वज्ञत्वादिगुणराहित्यमुच्यते । ततोऽस्ति र्वज्ञेश्वरात् बिम्बकल्पं सर्वोपाधिधर्मासंस्पृष्टं ब्रह्म । ननु ब्रह्मणि अविद्यमानजगद्धेतुत्वं कथम् ? प्रतिबिम्बस्योपाधिभूतमायामहिम्ना इति ब्रूमः, सर्वज्ञत्वादिगुणान्विते जगद्धातरि रमेश्वरेऽसंसारिणि श्रुतिशिरश्शतानां समन्वयस्यापि दर्शनात् । न तु जीवभ्रान्तिसिद्ध श्रुत्या तात्पर्येण प्रतिपाद्यते, अनाश्वासप्रसङ्गात्; ईश्वरोपासनादिविधानं पुण्यपापयोः फलपर्यन्तत्वादि बहु विप्लवेत । प्रत्यभिज्ञासिद्धश्च पृथिव्यादिर्निर्हेतुकः प्रसज्येत । तस्मा-द्यदधिकरणोऽसदादीनां संवादप्रत्ययो, यदधिकरणश्च साधारणाभोगः, तदखिलकार्योपा-दानम् महेशोपाधिरविद्यातो नान्या भगवती मायाऽभ्युपगन्तव्या ।

ये तु मायोपाधिमहेश्वरं नाङ्गीकुर्वते, ते "फलमत उपपत्तेः"[4] "लोकवत्तु लीलाकैवल्यम्"[5] इत्यादिसूत्रवाक्यैः "निरतिशयोपाधिसम्पन्नेश्वरः सातिशयोपाधिसम्पन्नान् जीवान् प्रशास्ति इति किमनुपपन्नम्" इत्यादिभाष्यवाक्यैस्तन्मूलश्रुतिस्मृतिवाक्यैश्चाङ्गी-कारयितव्यास्तद्विरुद्धाभिधायितया वा उपेक्षणीया इति ।

**सापि परीक्षणीया** । "इन्द्रो मायाभिः" इति चानेकत्वश्रुतेरेकैव इति तावद्दुर्घटम् । नामरूपभूतकृता मिथ्याभिमाना 'मनुष्योऽहम्' इत्यादयो यतो भवन्ति, चित्तस्थानेऽभ्यस्ताः तानि मायांशत्वान्मायाभिः इत्युच्यन्ते इति व्याख्यानात् । अवयव-कल्पनया बहुत्वेन प्राच्याः उत्तरा प्रक्रियाऽतिरिच्येत । उत्तरस्यामपि "माया च अविद्या च स्वयमेव भवति"[6] इति श्रुतिव्याकोपः ।

---

1. श्वे. 4. 10
2. भ. गी. 9. 10.
3. तादृशसंविद्रूपाः ।
4. ब्र सू. 3. 2. 38
5. ब्र. सू. 2. 1. 33
6. नृसिंहो. 9. 3.

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा ॥" मा. का-1-16.

इत्याद्याचार्योक्तिविरोधश्च, शुक्त्यादितत्त्वावरकस्य मानापनोद्यस्य च रजतादेरविद्यात्वानङ्गीकाराच्च ।

अथ साक्षान्न मानापनोद्यत्वं विवक्षितम्; तत् किं शुक्तिप्रमयाऽपि जीवोपाधिरविद्यैव चर्व्यते; तथा चैतावतैव मुक्तिस्स्यात् । अथ तूक्ताविद्याया अवयवो निरस्यते, तदाप्यविद्याया विद्यापनोद्यत्वेनैवावयवनिवृत्तिवन्मायावयवस्याविद्याया अपि मायाया विद्यापनोद्यत्वेन निवृत्तिः, पटस्येव दाह्यस्योपाञ्चलदाह इति नाविद्यावैलक्षण्यमपि मायायाः स्यात् ।

अथ पृथिव्या इव द्वीपादयः स्वाङ्गावयवा एव मायाया अज्ञानानि, तर्हि तेषु सकृत् प्रतिबिम्बिते चैतन्ये कथङ्कारं जीवेश्वरविभागः स्यात् । न हि स्वर्वाहिन्याः प्रवाहसहस्रे प्रत्येकप्रतिबिम्बातिरिक्तं व्योम्नः प्रतिबिम्बमनुभूयते । तत्र प्रवाहानुस्यूत-व्योम्नि सत्यपि द्विगुणीकृत्य वर्तमानप्रतिबिम्बद्वयादर्शनात् । तथात्वे च मृत्प्रदेशारब्धप्रासादादिवन्मायावयवारब्धकार्यस्यानेकजीवसाधारण्यमङ्गीकृतं स्यात् । अथ महासरस्यानीयमाना या तस्याः कुल्यास्थानान्यज्ञानानि, तर्हि व्यवहितत्वाज्जीवानां महासरःकमलैरिव कुल्यादायानां महाभूतकार्यैस्तादात्म्यं न स्यात् ।

किञ्च शिरःपाण्यादिसमुदाये देहव्यवहार इवाज्ञानसमुदाये मायाव्यवहार इति देहोपाधिर्जीवः, तदवयवोपाधयस्तु नामान्तरभाजश्चेतना इति व्यवस्था यथा नाद्रियते, तथा मायातदवयवोपाधयो भिन्ना इत्येषाऽपि नादर्तव्या । न चानिर्वाच्यत्वेऽपि मायावयवी प्रसिद्धविलक्षणो युक्तिमान् । स्वयं जलराश्युदाहरणात् । अतः स्वतन्त्रोपाधय एव चैतन्यस्य वक्तव्याः सर्वत्वमङ्गीकृत्यापि ।

## वेदान्तवाक्यानामद्वैततात्पर्यवतामपरोक्षत्वावधारणोपायता

सत्यपि चाद्वैतसाक्षात्कारे स्वात्मनि कर्तृत्वादिद्वैतसाक्षात्कार इति चाकौशलमिव जीवन्मुक्तानामपि व्युत्थानदशायामेव द्वैताभासपरिभासाङ्गीकारात् । प्रमारूपाद्वैतसाक्षात्काराभवे च स्वरूपावधारणोक्तिव्याघातः । किञ्चानवधारणे स्वरूपस्य एकाज्ञानोपाधेरपि

अज्ञत्वभ्रान्तत्वे यदा, तदा तत्समुदायोपाधेः तत्कार्यकर्तृत्वादिसमारोपभाजश्च किमु वक्तव्यम् ते। मायावृत्त्या चाप्रमारूपयाऽवधारणे वेदान्तानामपरोक्ष[त]त्वावधारणोक्तिव्याहतिः। कुत्र चैषा साधारणी माया केवलविक्षेपकारिणी प्रसिद्धा? लौकिकमायिनः माया स्वोपाध्यविद्याव्यतिरेकेण हस्त्यश्वादिकारणमिति चेत् तस्यास्तथैव दृष्टान्ततयोपपादनं प्रसज्येत। श्रुतिस्मृत्योस्तु यद्यपि माया प्रसिद्धा, तथाऽपि भवदभिमताज्ञानावयववती न प्रसिद्धा।

न च मायया प्रतिबिम्बतामन्तरेण संबन्धाभावो भगवतः, भगवच्छब्देन लक्ष्यचैतन्यमात्रविवक्षायामाश्रयत्वेन तस्य संबन्धाङ्गीकारः कुप्येत। बिम्बस्य च मायासम्बन्धकृतमहेश्वरत्वस्य स्वयमङ्गीकारात् प्रतिबिम्बभेदभ्रमस्य बिम्बाधिष्ठानत्वस्य स्वयमङ्गीकाराच्च बिम्बस्य सर्वोपाधिधर्मासंसृष्टत्वोक्तिर्व्याहता। किंच स्पर्शाभावो न विशेषणम्; तथा सति मुखश्यामत्ववत् चिन्मात्रगताविद्या बिम्बे स्यात्। प्रतिबिम्बश्यामत्ववच्च जीवगता न तत्र स्यात्। मायाप्रतिबिम्बितस्य मायाप्रतिबिम्बितत्वं संसर्गान्तराभावान्महेश्वरत्वम् इति सूक्तम्। "**तत्तु समन्वयात्**" इति निर्विशेषे ब्रह्मणि वेदान्तानां समन्वय उत्सर्गतः।

तत्र मन्दानां निर्विशेषवस्तुनो बुद्ध्यारोहणाय सविशेषनिरूपणं क्वचिदपवादः। अतः प्रतिबिम्बिते सर्वज्ञत्वादिगुणे वेदान्तानां कार्त्स्न्येन समन्वय इत्यनुपपन्नम्।

**अथ** सविशेषवाक्यानां तत्रैव समन्वयः क्वचिद्विशेषविवक्षयोपासनाविधावपि समन्वयाङ्गीकारात्, **नैवम्** " यथाभूतो ह्येकस्मिन् वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वात्मैको ऽद्वितीयः कारणत्वेन व्यपदिष्टः तथाभूत एव वेदान्तान्तरेष्वपि व्यपदिश्यत " इति **भाष्यान्न** प्रतिबिम्बेशः कारणम्। भाष्यस्य विशेषणायोगात्। न खलु तस्य सर्वप्रत्यगात्मैक्यं, उपाधिभेदात्। नापि सर्वकार्यैक्यम्। तत एव नाप्यद्वयत्वम्, न च प्रलये जीवानां तदात्मना बिम्बेनैव तादात्म्यात् जीवाविद्याविषयत्वोपाधेर्भवति। जगद्विवर्ताधिष्ठाने विशेषवाक्यानां समन्वयसम्भवाच्च। जीवाविद्यासृष्टेरपि सुप्तदेहारम्भकभूतस्वप्नसृष्टिवत्तात्पर्येण श्रुत्या प्रतिपादनासम्भवाच्च।

अनाश्वासश्च प्रतिबिम्बेश्वरपक्ष एव, यतस्तस्य चैतन्यप्रमया सहानादिकालमनुवृत्ता मायाऽनन्तश्चोत्तरकालमनुवर्तिष्यते। तस्याश्च हस्तपादादिस्थानीया अज्ञानभेदा आगन्तुकप्रमया निवर्तन्ते तादृश्यः। तेषां चोच्छेदात्मकबाधात् ख्यातेश्चानिर्वाच्यत्वम्।

तस्याश्च चेतनवदनुच्छिद्यमानाया अप्यनिर्वाच्यत्वम्। "भूयश्चान्ते विश्वमायानिवृत्तिः" इत्याद्यागमश्च नेश्वरपक्षे जागर्ति, किन्तु जीवाविद्यालयपर इत्यादि प्रक्रिया नाश्वासाय।

प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः।
नाभिद्रवन्ति, ते तावत् पिशाचा वा स्वगोचरे ॥[1]

इति न्यायात् ईशप्रमावैफल्ये सर्वत्र तत्प्रसारात् जीवाविद्यया समारोपितसर्वजगदैश्वर्यस्य सति प्रमातरि बाधविधुरस्य देहात्मभाववदीश्वरोपासनपुण्यपापफलपर्यन्तत्वादिनिर्वाहकत्वान्निरवद्यत्वश्रुतेश्च न ब्रह्मण्यविद्याबिम्बेऽविद्या।

स्वरूपमाश्रयश्चेत्, न; बिम्बस्य स्वरूपातिरेके कल्पितत्वात्, अनतिरेके स्वरूपस्यैवानवद्यत्वात्। न च जीवाविद्याजत्वेऽज्ञातसत्त्वं न स्यात्, इन्द्रियादिवद् व्यावहारिकसत्त्वात्। न खल्वयं समारोपो रज्जुभुजङ्गादिवदागन्तुः जीवानां, किन्त्वविद्यावत्त्वोपाधिना परिच्छिन्नत्ववत् तद्विषयत्वोपाधिवशात् प्रसुप्तानामपि जीवानां भगवत्यनुवर्तमानो व्याकृताव्याकृतविभागवत्। न चान्यसमारोपितज्ञानेच्छाप्रयत्नपरं न क्वापि दृष्टं सृष्ट्यादौ प्रवर्तमाने इत्याशङ्कनीयम्; प्रमाणज्ञानस्याज्ञाननिवर्तकत्वेन विदुषो भगवति ज्ञानादिगुणरहितचिन्मात्रप्रमया मुक्तस्योत्तरसंसाराय भगवतः सृष्ट्यादौ प्रवृत्त्यभावात्। "अथ येऽन्यथाऽतो विदुः" स्वाविद्यया सर्वज्ञत्वादिगुणं स्वतो भिन्नं विपर्यस्ताः पश्यन्ति, "तेऽन्यराजानः क्षय्यलोका भवन्ति" इति श्रुतेश्च जीवसमारोपितज्ञानादिगुणस्य विनापि दृष्टान्तं सृष्ट्यादिप्रवृत्त्यध्यवसायात्। न च माया स्वाश्रय एव कार्यकारी इति नियमः, अनाश्रयेऽपि प्रतिबिम्बेशे तदङ्गीकारव्याकोपात्। नाप्युपहितेन नियमः, उपहितं प्रतिबिम्बं चेत्, न बिम्बे तद्भेदभ्रमकारित्वम्। उपाधिसंबन्धमात्रं चेत्, जीवाविद्ययापि विषयत्वेन सम्बन्धाददोषः। रक्षणादयश्च मायायाः परिणामाः। ताश्च तत्तदाकारेणावच्छिन्नदर्पणाद्यवरुद्धसवितृकिरणवत्तत्तत्कार्याय प्रवर्तन्ते इति किमनुपपन्नम्? तदुक्तम्:—

"ईक्षणं जीवाज्ञातस्य विवर्त आकाशादिवत्। तेन न प्रमातृत्वेनाविद्यावत्त्वप्रसङ्ग" इति। साधारणचैतन्याधिष्ठानप्रपञ्चस्य संवादप्रत्ययास्पदत्वम् साधारणभोग-

---

1. श्लो. वा. 1. 8. 4

साधनत्वं वोपपद्येत । 'सर्वं सर्वमयं सर्वे जीवास्सर्वमायाः सर्वावस्थासु "[1] इति श्रुतेः साधारणप्रपञ्चस्य सर्वादृष्टकारणकत्ववत्सर्वाविद्याकारणकत्वोपपत्तेः । अत एव "भूय-श्चान्ते विश्वमायानिवृत्तिः" इति श्रवणादिजन्यप्राथमिकप्रमया वास्तवाकारेण निवृत्तायाः विश्वकारणमायायाश्चरमप्रमया दग्धपटन्यायेन प्रातिभासिकविश्वमायाया उच्छेदं वदति श्रुतिः । साधारणमायापक्षेऽपि न तदुपादानक एव तत्कार्यदेहैक्यसमारोपो जीवानां, तदुपादानकस्याद्वैतप्रमयाऽप्युच्छेदानङ्गीकाराद् विदेहकैवल्यानुपपत्तेः ।

**अथ** अविद्याऽप्युपादानं, तदा स्थूलस्य मायोपादानत्वं अविद्योपादानत्वञ्च । अपरथा राद्धान्तविरोधः । कथमपरथाऽन्येषां वास्तवाकारेण व्यवहारः स्यात् ? एतस्मिन्नेव प्रपञ्चे विदुषो दग्धपटाभप्रतिभासः कथं वा ज्ञानादात्यन्तिकः प्रपञ्चस्य प्रलयोऽन्यथा पुराणाद्युक्तः सिद्ध्येत् । न च वस्तूनां सुखादिहेतुत्वं नियतम् । तेन विचित्रनिमित्तोपादानत्वमविरुद्धम् । एवं प्रतिबिम्बेश्वरानुपपत्तौ "जीवेशावाभासेन करोति"[1] इति श्रुतौ **आभासेन** प्रतिबिम्बेन विशिष्टबिम्बप्रतिबिम्बात्मना जीवेश्वर-विभागकव्यावहारं प्रवर्तयति माया इति व्याख्येयम् । उक्तं च ईश्वरमाश्रित्य "फलमत उपपत्तेः" इत्यादेर्योजयितुं शक्यत्वात्; **तस्मान्नैषाऽपि प्रक्रिया ।**

"व्यञ्जन्ति वेदाः सहजावदातज्योतिर्विदानन्दघनं घनं यत् ।
ब्रह्माभिवन्दे ह तमोहजिह्मं सदैकतानं स्ववपुःप्रतीचम् ॥"

तदेवं चार्वाकादिमतप्रतिषेधेन देहाद्यात्मभ्यो व्यावृत्ततया श्रुत्याचार्यगणेन परिशुद्धस्त्वं पदार्थः चिद्धातुर्यथोक्तक्रमेण वाक्यार्थभावं साक्षादनुभूय सद्य एव प्रध्वस्ताविद्यातत्कार्य-प्रपञ्चो विमुच्यते, यतः समारोपमात्रसिद्ध एव बन्धः । तदाहुर्भगवत्पादाचार्याः -

"मायाहस्तिनमारुह्य मायाव्येको यथा व्रजेत् ।
असुप्तस्तद्वदेवात्मा प्राणस्वप्नादिगोचरः ॥

न हस्ती न तदारूढो मायाव्यन्यो यथास्थितः ।
प्राणानामुपद्रष्टा तथाऽन्योऽहं सदा दृशि ॥"

---

1. नृसिं. 3. 9. 4

इति। तद्द्रष्टृद्रष्ट्राकारपरिणता बुद्धिः, हस्त्यारूढः मायाऽपि तुल्यस्वरूपेण मिथ्या। जीवस्तु मायादिप्रतिबिम्बितः सत्य एव, ब्रह्माभिन्नत्वात्। अत एवंविदो विद्याबलात् सद्योऽप्यविद्यातत्कार्योच्छेदो न्याय्यः "उपमर्दं च" इति व्याससूत्रात्। क्रियाकारक-फलात्मकप्रपञ्चस्य समस्तस्याविद्याकृतस्य विद्यासामर्थ्यात् स्वरूपोपमर्दं "यत्र त्वस्य सर्वमात्मैवाभूत्" इति श्रुतिर्वदति इति भाष्याच्च। स्वरूपविशेषणेनान्तःकरणादिनिवृत्तौ प्रपञ्चस्यानुपमर्देऽप्यदर्शनमात्रमुपमर्द इति मतं वारयति "आत्मैवाभूत्" इति साव-धारणश्रुतिं प्रमाणीकुर्वन्। "तस्य तावदेव चिरम्" इत्यवधिश्रुतेः कञ्चित्कालं जीवन्मुक्तिः इत्यप्याचार्याः। श्रुतार्थापत्तेः [1]तद्यथाहिनिर्ल्वयनी' इत्याद्यागमसहकृतायाः "क्षीयन्ते चास्य" इति विशेषश्रुतिसङ्कोचकत्वाच्च। तत्रापि "भोगेन त्वितरे क्षपयित्वा" इति न्यायात् प्रारब्धफलकर्मवशात् तत्संस्कारवशेन वा भोगाभासानु-वृत्तिरविद्यासंस्कारेण च द्वैताभासानुवृत्तिः इत्यभियुक्ताः :—

"भोगारम्भणकृप्तानां कर्मणामुपजीवनात्।
ज्ञानार्थानि तथाऽऽरब्धे देहे दद्युः फलं यतः॥

अतो न बाधते ज्ञानं संप्रारब्धफलक्रियाः।
जीवन्मुक्तिस्ततस्सिद्धा श्रुतिस्मृतिनिवेदिता॥"

"प्रवृत्तफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तिः" इति गीता-विवरणे भगवत्पादाचार्यवचनाच्च ज्ञानस्यानियतदेहफलत्वात्, न तदारम्भककर्मणः स्वतन्त्रदेहाक्षेपकत्वं प्रारब्धफलस्यापि ज्वरादिहेतोः कर्मणः शान्तिकादिना निवृत्तिप्रसिद्धेः विद्ययाऽपि तत्सम्भवात् यद्देहारम्भककर्मसंस्कारः, स तत्रैव देहे भोगमारभत इति न देहान्तरे तत्प्रसक्तिः। तत्संस्कार पक्ष एव युक्त इति केचित्। संस्कारोऽपि रजतादि-विभ्रमनिवृत्तौ रजतादिरविद्यान्तरजन्य इति स्वीकारात्। सर्वथाऽप्यविद्योच्छित्तौ तदव-स्थानमयुक्तम् इत्यविद्याकारविशेषादेव जीवन्मुक्तिः इत्यन्ये। मुक्तस्य च जीवनं तथा न यावज्जीवनादिचोदनोपयुक्तं, देहैक्याध्यासमूलसम्यग्जीवनस्य कर्माधिकारहेतोर्दाहात् प्राणधारणमात्रजीवनस्य सुषुप्तवत् कर्माप्रयोजकत्वात्। अतो मुक्तदेहे जीवच्छरीरत्व-मप्याभासरूपमेव इति तेन कृतस्यापि न फलपर्यवसानम्। तस्मात् अस्ति सर्वथा जीवन्मुक्तिरपि इति सकलमनाविलम्।

विष्णुं रोचिष्णुमुच्चैःश्रुतिशतविशदानन्दसंदोहदेहं
स्वान्तागारान्धकारच्छिदुरमभिमतश्रेयसां दानशौण्डम् ।
दुग्धाब्धेः शीकराणां प्रसरधवलितं शुद्धसत्त्वप्रतान-
प्राकट्यौत्कट्यभाजं स्फुटमिव मुनिभिः सेवनीयं प्रणौमि ॥ १

प्रह्वीभवामि गुरुपादसरोरुहाभ्यां
याभ्यामहं परमनिर्वृतिमार्पितोऽस्मि ।
संसाररौद्रमवधूय सदेकतान-
स्वानन्दबोधमधुरत्वविघातहेतुम् ॥ २

रत्नैरेवोत्तमाङ्गस्थितिभिरभिनवोद्योतजालैर्विशालै-
स्साटोपानां स्फटानां भसितभरसिताभ्यो जटाभ्यो विभक्तः ।
स्वर्वाहिन्याः प्रवाहादपि विशदतमाद्यस्य भोगस्य भङ्ग-
प्राग्भारानुद्गमेन श्रियमयमहिराड्धूर्जटेः साधयेद्वः ॥ ३

वेदान्तमुक्तामणिसूत्रकर्ता
सरस्वतीकान्तकलावतारः ।
युष्मानजस्रं द्विजसार्वभौमो
द्वैपायनः पात्वघसन्निपातात् ॥ ४

यश्शङ्करोऽपि विषमां श्रयते न दृष्टिं
ख्यातः कलानिधिरपि स्वयमेव यश्च ।
सत्त्वस्फुरत्कमलकन्ददलैः प्रपुष्टं
वन्दामहे परमहंसधुरन्धरं तम् ॥ ५

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वयाश्रमपूज्यपाद-
शिष्यस्य भगवतो रामाद्वयस्य कृतौ
वेदान्तकौमुद्यां चतुर्थोऽध्यायः ॥

# INDEX OF CITATIONS

(Quotations from the principal Upaniṣads have been omitted)

— :*: —

# WORKS & AUTHORS CITED IN VEDANTA KAUMUDI

READINGS FROM AN OLD MANUSCRIPT FROM THE

## BHANDARKAR ORIENTAL MANUSCRIPTS LIBRARY

## POONA.

२१९—१७ शब्दभावना न केवलं तज्ज्ञानभाव्यनिष्ठा
१९ वादविज्ञानमपि प्ररोचन
२३ न प्रतिपत्तुरपि शब्दार्थयोः
२५ परिशेषार्थापत्तिभ्यां स्वाभिप्रायाभिधान
२२०— ३ नाकारयिष्यत्
१४ इत्यनुपपन्नं तावत् तथा हि प्रमाणत्वात्
१७ कञ्चनातिशयम् ,
१८ शब्दश्चोदनात्वेन
२२३—११ शाब्दार्थानर्थप्राप्ति
२३ प्राक् न प्रवृत्तेः

